THE

# RUPAVATARA

OF

## DHARMAKIRTI

PART I.

*EDITED WITH ADDITIONS AND EMENDATIONS*

FOR THE USE OF COLLEGE STUDENTS.

BY

**RAO BAHADUR M. RANGACHARYA, M. A.,**
*Professor of Sanskrit and Comparative Philology,*
*Presidency College, Madras.*

धर्मकीर्तिविरचितः

रूपावतारः

प्रथमो भागः



म. रङ्गाचार्येण

संशोध्य परिष्कृत्य च प्रकाशितः

PRINTED AND PUBLISHED BY
G. A. NATESAN & CO., ESPLANADE,
MADRAS.

# विषयानुक्रमणिका



# PREFACE.

(*By the Editor.*)



THIS *Rupavatara* of Dharmakirti is, as shown in the accompanying Sanskrit introduction, an elementary Sanskrit grammar based on the aphorisms of Panini and composed in all probability by a Buddhistic monk of Ceylon, who appears to have lived in the latter part of the twelfth century of the Christian era. It is thus evidently one of the earliest attempts to present the grammatical aphorisms of Panini in their practical application to the various linguistic processes of phonetic modification, inflection and word-formation, as arranged in an intelligible logical order. The second part of this work goes by the name of *Dhatu-pratyaya-panchika*, which means that it is a well-ordered exposition of the roots of the language along with such of their associated formative and inflec-

of primary bases and also with the formation of such bases as are really secondary in derivation. Accordingly, in this first part of the work now published, inflectional particles are added to primary and secondary derived bases singly as well as in various combinations. Hence, in addition to the subject of the euphonic modification of alphabetic sounds, which naturally runs throughout the whole range of the morphology of Sanskrit, the first part of *Rupavatara* deals mainly with the declension of substantives and adjectives and pronouns, with the derivation of feminine bases, with the indeclinables, with the meaning and use of declensional cases, with the building-up of compound words, and with the formation of secondary derivatives. This grammar is declared to have been produced by its author specially to aid young learners of Sanskrit, and it seems to be well suited to serve such a purpose. The late Professor Max Muller is known to have mentioned—"Whatever people may say, no one knows Sanskrit who does not know Panini." His opinion is, I believe, rightly gaining ground elsewhere also as in India, and I am hopeful that this publication, which has been adapted with considerable care to the earlier requirements of the students of Sanskrit in our Indian

colleges, will prove useful to them and tend to stimulate their interest in the study of a language which is widely recognised by philologists to be a wonderfully constructed instrument for the effective expression of human thought. The indexes given at the end of the volume and the references to Panini's *Ashtadhyayi, etc.*, are also expected to prove helpful to students: the alphabetical index of examples is a novel feature in this publication, and cannot fail to be of value both to the teacher and to the learner making use of this work on Sanskrit grammar. Details about the age, the authorship and the editing of the work are given in the Sanskrit introduction, to which attention is respectfully drawn. In spite of much care bestowed on proof-reading, a few errors have unfortunately crept into the work, for which the indulgence of the reader is craved.

---

## ग्रन्थप्रकाशकस्य

## विज्ञापना

अस्य रूपावतारस्य कर्ता धर्मकीर्तिः। स सौगतमतानुयायीति ग्रन्थादौ निवेशितेन तद्विरचितेनैव सर्वज्ञप्रणामपूर्वकप्रातिज्ञाश्लोकेन ज्ञायते। बर्नेल्लाख्याङ्गलपण्डितकृतायां तञ्जानगरराजालयलिखितग्रन्थसमुच्चयसूचिकायां कृष्णदीक्षित इति कोऽपि रूपावतारस्य कर्तेति प्रकटितम् *a*। आपर्टाख्यशर्मण्यपाण्डितविरचितासु लिखितग्रन्थसमुच्चयसूचिकासु च स एव कृष्णदीक्षितो रूपावतारकर्तेति प्रदर्शितः *b*। धर्मकीर्तिकृतरूपावतारस्य कर्तृत्वं तु कृष्णदीक्षितस्य किल विना प्रमादेन न कदापि संभवतीति सुविदितमेव सर्वेषाम्। धर्मकीर्तेस्तु रूपावतारकर्तृत्वमनेकप्रकारेणावगम्यते। नेपालराजभवनस्थलिखितग्रन्थसमुदये रूपावतारोऽप्येकतम इति महामहोपाध्यायहरप्रसादशास्त्रिप्रकाटितायां तत्सूचिकायां दृश्यते। अपि च तत्रमुद्रितैतद्ग्रन्थादौ श्लोकोऽयं वर्तते—

---

*a*. *Vide* page 41*b* of the Classified Index to the Sanskrit Mss. in the Palace at Tanjore: by A. C. Burnell, Ph. D.

*b*. Nos. 2991, 5152, and 5826 in the Lists of Sanskrit Mss. in Private Libraries of Southern India: by Gustav Oppert, Ph. D., Vol. I.

कृता सुकृतिना चेयं प्रक्रियां धर्मकीर्तिना ।
पोतानां पोतवत् क्षिप्रं शब्दाब्धौ पारगामिनाम् *c* ॥

किञ्च अनन्तशयनराजनिलयस्थलिखितग्रन्थसन्दोहान्तर्गत-रूपावतारव्याख्यायां व्याख्यातैवं स्तौति स्वकृतेरादौ मूलकृतेः कर्तारम्—

अभिगतषडभिज्ञप्रक्रियोऽपि स्वयं यः
प्रथमसमयसज्जद्वासनावासितात्मा ।
अकलयदतिहृद्यं शब्दविद्यानुमोदं
स जयति नवकीर्तिः सन्मतो धर्मकीर्तिः ॥

अत्र मद्रास्-पुरे वर्तमानायां पच्चैयप्पोत्तमविद्याशालायां संस्कृतमुख्योपाध्यायैः कृष्णशास्त्रिभिः रूपावतारमुद्रणकार्ये सत्साहाय्यार्थं प्रेषितस्य ताळपत्रलिखितपुस्तकस्यान्ते—'इति धर्मकीर्तिविरचिते रूपावतारे कृदन्तकाण्डं समाप्तम्'—इति चास्ति स्फुटं वचनम् । अन्यच्च एतद्रूपावतारग्रन्थस्योत्तरभागस्य धातुप्रत्ययपञ्जिकेत्याख्येति

*c.* Page 60, under No. 1475, in the Catalogue of Palmleaf and Selected Paper Mss. belonging to the Durbar Library, Nepal.

तत्रस्थप्रतिज्ञाश्लोकेन बहुशो ज्ञायते[d]। मद्दृष्टेषु धातुप्रत्ययपञ्चिका-पुस्तकेष्वेकतमस्योपरि 'रूपावतारः' इति नामानिर्देशो लक्ष्यते*। तथापि अस्या धातुप्रत्ययपञ्चिकायाः स्वातन्त्र्येण ग्रन्थान्तरत्वमप्य-भिमतमासीत् पूर्वेषां पण्डितानामिति तस्याः पृथक्प्रचारबाहुल्येनैव गृह्यते। धर्मकीर्तेर्धातुप्रत्ययपञ्चिकाकर्तृत्वं हि सुप्रसिद्धमिव भाति[e]। अतो रूपावतारकर्ता धर्मकीर्तिरेवेत्यस्मिन् विषये नास्त्येव संशया-वकाशः॥

---

d. प्रणम्य शिरसा देवीं बालानां हितकारिणीम्।
यथासारं प्रवक्ष्यामि धातुप्रत्ययपञ्चिकाम्॥

It is worthy of note here that Ms. No. 1332, as described in the Descriptive Catalogue of the Sanskrit Mss. in the Government Oriental Mss. Library at Madras, has, like other Mss. of the work, the above *sloka* at the beginning of the second part, and has also the following colophon at the end—इति रूपावतारः समाप्तः॥

* This is the Ms. described under No. 1335, in the Descriptive Catalogue of the Sanskrit Mss. in the Government Oriental Mss. Library, at Madras.

e. *Vide* धातुप्रत्ययपञ्चिका No. 2390 in Vol. VII. Part I of the Notices of Sanskrit Mss. by Rajendralala Mitra, LL.D., C.I.E. (1882-83):

Colophon—

इत्याचार्यमिश्रधर्मकीर्तिविरचिते तिङन्तखण्डे सप्तमः परिच्छेदः समाप्तः।

को वा एष धर्मकीर्तिः कदा वा स आसीदिति विचारणायां प्रख्यातकीर्तिः प्राचीनो न्यायशास्त्रपरिष्कर्ता बौद्धसिद्धान्तप्रवक्ता स भवेदिति कापि स्वयमेव संजायते संभावना। अथवा स भवेत् कोऽपि कविर्य आनन्दवर्धनाचार्योदाहृतो ध्वन्यालोके। भिन्नावेतौ धर्मकीर्ती इत्यत्र नास्ति निरवद्यं प्रमाणम्। भेदाङ्गीकारेऽपि तयोरेकतरस्य रूपावतारकर्तृत्वं नैव सङ्गच्छते, यतस्ताभ्यामुभाभ्यामपि नूनमेव तद्ग्रन्थकर्त्रपेक्षया पूर्वकालिकाभ्यां भवितव्यमित्यापतति। अनयोः प्रथमस्तावन्माधवाचार्यकृतसर्वदर्शनसङ्ग्रहे बौद्धदर्शनान्तर्भूतयोगाचारमतविवरणावसरे नाम्नोद्धृतो दृश्यते *। अद्वैतवेदान्तप्रतिष्ठापकैः श्रीमच्छङ्कराचार्यैरपि 'नाभाव उपलब्धेः'+ इति सूत्रस्य व्याख्यानावसरे पूर्वपक्षिस्थाने स एवानूदित इति काप्यस्ति पण्डितमण्डलीप्रतीतिः। माधवाचार्योदाहृता ये योगाचारमतोपपादकश्लोकाः तेऽप्यनुसरन्ति श्रीमच्छङ्कराचार्याणामत्रत्यपूर्वपक्षकथनोक्तिम्। तस्मादेतदुपपन्नमेष धर्मकीर्तिः श्रीमच्छङ्कराचार्यजीवनकालात् प्रागेवासीदिति। भारतीयबौद्धविद्याप्ररोहवृत्तान्तज्ञाः

* "एषा हि तेषां परिभाषा—स्वयंवेदनं तावदङ्गीकार्यमन्यथा जगदान्ध्यं प्रसज्येत। तत् कीर्तितं धर्मकीर्तिना—

'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति'—इति"।

+ *Vedanta-sutras* II. 2. 28.

केचिन्नवीनपाण्डिता अपि तं सौगतसमयाचार्यमतिप्राचीनमेव मन्यन्ते । महामहोपाध्यायैः सतीशचन्द्रविद्याभूषणाभिधपाण्डितै-रचिरात् प्रकटीकृतमेष धर्मकीर्तिर्दिङ्नागाचार्यस्य धर्मोत्तराचार्यस्य चान्तरकाले संभूतः स्यादिति । पुनस्तैरेवोदितम् इट्सिङ्गिति विख्यातेन बौद्धभक्तेन चीनयात्रिकेण क्रिस्ताब्दीयसप्तमशतकान्ते स धर्मकीर्तिर्भूतपूर्व इवाख्यातो दृश्यत इति च † । ध्वनिकारोद्धृतो धर्मकीर्तिः कविरालङ्कारिकश्चेत्यवगन्तव्यम् । भदन्तधर्मकीर्तिग्र-थितानि बहूनि पद्यानि सुभाषितावलौ दृश्यन्त इति सुज्ञातमेवेदा-नीम् * । भदन्तत्वेन तस्य व्यवहारात् स कविर्भिक्षुराचार्यत्वेन

---

†. *Vide* the article entitled "The Buddhist Version of the Nyaya Philosophy" in the Journal of the Buddhist Text and Research Society, Vol. VII., part IV., March 1906 (page 6).

* In the introduction to his edition of the *Subhashita-vali*, Peterson, in remarking about Bhadanta-Dharma-kirti, quotes Aufrecht thus :—

" Dharmakirti is one of the older writers on *Alan-kara.* His work *Bauddhasangati* is mentioned by Su-bandhu in the *Vasavadatta.* In all probability he is identical with the Buddhist philosopher of the same name, who, according to Wasiljew, wrote a commentary to Dinnaga's *Pramana-samuccaya*..........A half verse by the philosophical writer is mentioned in the Bauddha chapter of the *Sarvadarsanasangraha*.......'

पूजार्हश्चाभूदित्यनुमीयते । वासवदत्तायां वासवदत्तावर्णनप्रकरणे —‘बौद्धसङ्गतिमिवालङ्कारभूषिताम्’—इति यदस्ति तद्विवरणे शिवरामस्तट्टीकाकारो ‘बौद्धसंगतिर्नाम धर्मकीर्तिकृतो ग्रन्थविशेषः’ इति कथयतीति महामहोपाध्यायैः पण्डितदुर्गाप्रसादैः पूर्वमेव प्राकाशि *g* । एष ग्रन्थः सुबन्धुहृदयानुरोधेनालङ्कारभूषित आसीदिति चात एव सिध्यति । बाणेन पूर्वकविगोष्ठ्यां पठितत्वात् सुबन्धुः क्रिस्ताब्दीयसप्तमशतकात् प्रागेवासीदिति भवति । तस्मादपि पूर्वमेव भवितव्यं सालङ्कारबौद्धसंगतिकर्त्रा धर्मकीर्तिना । इत्थमुभावप्येतौ धर्मकीर्ती क्रिस्ताब्दीयसप्तमशतकात् प्रागास्तामिति वक्तुमस्ति सहेतुकोऽवकाशः । ईदृशसमानकालिकत्वं तयोरैक्यप्रतिपादनेऽपि समर्थो हेतुः सर्वथा अपरित्याज्यः अनतिलङ्घनीयश्च । न हि आलङ्कारिकत्व-कवित्व-नैयायिकत्व-स्वसमयसंरक्षकत्वादयो गुणा एकस्मिन्नेव न संभवन्तीत्यत्र सुप्रथितो दिङ्नागाचार्य एव प्रमाणम् । एवमेवात्र प्रमाणपदवीमारोढुमर्हा गुणबाहुल्यभूषिता अन्येऽपि बहवः संस्कृतविद्यावृत्तान्तभूमौ सन्तीति विदितमेव विदुषाम् ॥

---

*g*. *Vide* footnote 2, on page 117, *Aucityavicaracarca*, in part I, Kavyamala Series, by Pandita-Durga-prasada.

रूपावतारकर्ता धर्मकीर्तिः स्वकृतिग्रथने विशेषतः काशिकावृत्ति-मनुसरति ; तत्रतत्र तन्नामाप्युदाहरति*h*। तस्मात् काशिकाकारयोर्ज-यादित्यवामनयोः पश्चादेव तेन भवितव्यम्। इट्सिङ्गाख्यपूर्वोक्तचीन-यात्रिकादेव ज्ञायते क्रिस्ताब्दीयसप्तमशतकोत्तरार्धे जयादित्यो मृति-मवापेति । तथापि तेन विरचितामपूर्णां काशिकावृत्तिं कदा वा वामनः पूर्तिमनयादिति विषये अद्यापि नास्ति किल निस्सन्देहत्वम्। काव्यालङ्कारवृत्तिकर्तुर्वामनादन्य एवैष इति विषयोऽपि निस्संशय-समर्थनामतीवाकाङ्क्षते । प्रायशः क्रिस्ताब्दीये अष्टमे नवमे वा शतके काशिकावृत्तेः पूर्तिरासीदिति नवीनविचारणाविशारदानां मतम् । अत एवैष रूपावतारकर्ता धर्मकीर्तिः क्रिस्ताब्दीयनवम-

*h*. (1) ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः (वा. I. I. 11.) इति काशिकानुसारी पाठः रूपावतारोद्धृतो भाष्ये न दृश्यते । "मणीवादीनां प्रतिषेधो वक्तव्य इति भाष्यकारवार्त्तिकका-राभ्यामपठितत्वादप्रमाणमेतत् । मणी वोष्ट्रस्येति तु प्रयोगो वाशब्दस्यो-पमानार्थस्य "—इति तत्र कैयटः ।

(2) समो गम्यृच्छिपृच्छिस्वरत्यर्तिश्रुविदिभ्यः (I. 3. 29.) इति काशिकानुसारी पाठः रूपावतारोद्धृतः। भाष्यपाठस्तु—समो गम्यृच्छिभ्याम् (I.3.29.), विदिप्रच्छिस्वरतीनामुपसंख्यानम् (वा.), अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम् (वा.),—इति ।

(3) टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम्(IV.

शतकात् पश्चादासीदिति निश्चीयते। धातुप्रत्ययपञ्चिकायामेव स-

1. 1. 15.) इति काशिकापाठः। भाष्यपाठस्तु—टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः (IV. 1. 15.), नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् (वा.)—इति.।

(4) आचि शीर्षः (VI. 1. 62.) इतीदं काशिकानुसारेण सूत्रत्वेन उद्धृतम्। भाष्ये तु आचि शीर्ष इति वक्तव्यम् (वा. IV. 1. 61.) इति वार्त्तिकरूपेण दृश्यते।

(5) पद्दन्नोमास् (VI.1.63.) इति सूत्रे काशिकानुसारेण आसनशब्दस्य आसन्नादेशः स्वीकृतः। भाष्याशयस्तु आस्यशब्दस्य आसन्नादेश इति।

(6) अडभ्यासव्यवायेऽपि (VI. 1. 136.) इत्यस्य सूत्रत्वं काशिकारीत्या। भाष्ये तु एतदेव वार्त्तिकरूपम् (VI. 1. 135. वा.) इति दृश्यते॥

(7) सम्पर्युपेभ्यः करोतौ भूषणे (VI. 1. 137.) इति काशिकापाठः। सम्परिभ्यां करोतौ भूषणे—इति भाष्यानुसारी पाठःउपशब्दहीनः।

(8) अनिट्कारिकाविवरणावसाने धातुप्रत्ययपञ्चिकायामेव—"सृजिमृजी इत्यत्र मृजेः प्रमादपाठः, मृजू मृजू इत्येतयोरूदित्त्वादिड्विकल्पस्यावश्यकत्वात्; अयमर्थः काशिकावृत्त्यादौ च प्रपञ्चितः"—इति च दृश्यते।

(9) ष्ठिवुक्लम्वाचमां शिति (VII. 3. 75.) इति काशिकानुसारी पाठः। ष्ठिवुक्लमुचमां शिति (VII. 3. 75.) इत्यत्र, आङि चम इति वक्तव्यम् (वा.) इति भाष्ये। इत्येवञ्जातीयका अन्येऽपि रूपावतारस्य काशिकानुसरणे निदर्शनभूताः सन्ति बहवो विषयाः॥

मुपलभ्यमानं काशिकाव्याख्यात्रोर्हरदत्तजिनेन्द्रयोर्नामग्रहणं * च सुतरां रूपावतारस्य काशिकातः पश्चिमत्वं व्यवस्थापयति। कस्मिंश्चित्काले संस्कृतव्याकरणग्रन्थेषु रूपावतारस्य मुख्यतया प्रामाण्यं प्रसिद्धिश्चाभूतामिति *i* तत्तत्रवर्तमानैस्तद्ग्रन्थनामोदाहरणैर्ज्ञायते। प्रक्रियासर्वस्वकारेण नारायणभट्टेनैवं ग्रन्थारम्भे स्वप्रभोश्चोदनोक्तिकथनप्रसङ्गे रूपावतारो नाम्ना निर्दिष्टः। यथा

वृत्तौ चारु न रूपसिद्धिकथना रूपावतारे पुनः
कौमुद्यादिषु चात्र सूत्रमखिलं नास्त्येव तस्मात्त्वया।
रूपानीतिसमस्तसूत्रसहितं स्पष्टं मितं प्रक्रिया–
सर्वस्वाभिहितं निबन्धनमिदं कार्यं मदुक्ताध्वना॥

अपि च गौरणार्यनामकेन केनचित् प्रबन्धकर्त्रा स्वग्रथितलक्षणदीपिकाख्यग्रन्थे *j* वर्णस्थाननिरूपणप्रसङ्गे रूपावतारोऽनूदितो

* "दीर्घान्त एवायं हरदत्ताभिमतः; तदा सेट्त्वादकुविष्टेत्यपि भवति। जिनेन्द्रस्तु ह्रस्वान्तमेवावादीत्; तदा अकुत इति भवति"।

*i* याप्परुङ्गलक्कारिकाख्यद्राविडच्छन्दोग्रन्थव्याख्याता गुणसागरनामकेन द्राविडपण्डितेन स्वकृतव्याख्योपोद्घातेऽपि रूपावतारनाम उद्धृतम्—
"உருபாவதாரத்திற்கு நீக்கச்சுலோகமே போலவும்"

*j.* Also called प्रबन्धदीपिका or पदार्थदीपिका—*Vide* No. 1494 in the Descriptive Catalogue of Sanskrit Mss. in the Government Oriental Mss. Library, Madras.

नाम्ना निर्दिष्टश्च । यथा

वर्णस्थानानि रूपावतारे—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च ॥

दृश्यते च सुप्रथिते मैत्रेयरक्षितकृते अनुन्यासापरनामके तन्त्रप्रदीपे रूपावतारस्य नामोद्धारोऽस्तीति *k*। एषु रूपावतारोदाहारकेषु नारायणभट्टः क्रिस्ताब्दीयसप्तदशशतक आसीत् *l*। गौरणार्यस्तु लक्षणदीपिकाप्रारम्भे आत्मवंशमित्थं वर्णयति। तद्यथा

अस्ति प्रशस्तावनिपालमौलिरत्नावलीरञ्जितपादपीठः ।
रेचल्लवंशार्णवपूर्णचन्द्रो महाबलः सिङ्गयमाधवेन्द्रः ॥
आसीत्तस्य महामात्यः स्वामिकार्यधुरन्धरः ।
पोलराज इति ख्यातो राजनीतियुगन्धरः ॥

---

*k*. *Vide* page 467 (*b*) in the Catalogus Catalogorum: by Theodor Aufrecht.

*l*. अयमच्युतगुरुकृपया पाणिनिकात्यायनादिकारुण्यात् ।
यत्नः फलप्रसूस्स्यात् कृतरागरसोऽद्य शब्दमार्गजुषाम् ॥
इत्यत्र ग्रन्थारम्भकलिः—'यत्नः फलप्रसूस्स्यात्'=1723201 ; ग्रन्थपरिसमाप्तिकलिः—'कृतरागरसोऽद्य' = 1723261 ; इति कटपयादिसंख्यया ज्ञायते ।

मन्त्रिचूडामणेस्तस्य सोदरस्यायमप्रभोः ।
गौरणार्य इति ख्यातस्तनयो नयकोविदः ॥
सोऽहं सोमकलामौलेः प्रसादाद्गतकल्मषः ।
प्रणम्य पिङ्गलं नाम कविपुङ्गवसम्मतम् ॥
उदाहरणरत्नानि लक्षणग्रन्थसन्धिषु ।
समाकृष्य सतां भूत्यै वक्ष्ये लक्षणदीपिकाम् ॥

अत्रोदितः सिङ्गयमाधवेन्द्रो रसार्णवसुधाकरनामकग्रन्थस्य कर्तुः सिङ्गभूपालस्य पितृव्य आसीदिति तद्ग्रन्थारम्भनिबद्धरेचल्लवंशवर्णनादवगम्यते। अस्यैव सिङ्गभूपालस्य सर्वज्ञसिंहनायक इति च प्रथानामाभूदिति चास्ति प्रतीतिः। अनेन सर्वज्ञसिंहनायकेन वेदान्तदेशिक इति प्रख्यातैर्वेङ्कटनाथार्यैः समकालिकेन भवितव्यं यतस्तदर्थं हि तैर्विशिष्टाद्वैतश्रीवैष्णवमताचार्यैस्तन्मतसारस्तत्त्वसन्देशाख्यप्रबन्धे कथितोऽभूदिति दृश्यते $m$ ! अपिचैतद्वेङ्कटनाथार्याणां कुमारो नयिनारार्याख्यः सिङ्गभूपालसमकालविद्वद्भिर्वादमकरोदिति

$m$. त्रिविधचिदचिदेकतत्त्वलक्ष्ये
यतिपतियामुनभाषिते नियोक्तुः ।
इदमिति निगमान्तदेशिकेन
प्रतिसमादिश्यत माधवात्मजस्य ॥

ज्ञायते*। अनेन हेतुना अन्यैर्हेतुभिश्च शेषगिरिशास्त्रिभिः स्वकृतसंस्कृतद्राविडलिखितग्रन्थान्वेषणप्रवृत्तिविवरणे सिद्धान्तितं स स-

---

வடதேசத்தில் தேசிகன் திருவடிகளாலே திருத்தப்பட்டவனாய் பாரமைகாந்திய தர்மத்தில் ஊக்கமுடையவனாயிருக்கிற ஸர்வஜ்ஞஸிங்கப்பநாயகன் சில ஸ்ரீ வைஷ்ணவர்களை அனுப்பி தனக்கு விசேஷார்த்தங்களை ப்ரஸாதித்தருள வேணுமென்று பிரார்த்திக்க தேசிகனும் அவனுடைய சித்த சுத்தியை அறிந்து ஹிதோபதேசமாக ஸுபாஷிதநீவியையும் தத்த்வஸந்தேசத்தையும ரஹஸ்யஸந்தேசத்தையும் ரஹஸ்யஸந்தேசவிவரணத்தையும் செய்தருளி அவைகளை ப்ரஸாதித்து—

सत्त्वस्थान्निभृतं प्रसादय सतां वृत्तिं व्यवस्थापय
त्रस्य ब्रह्मविदागसस्तृणमिव त्रैवार्गिकान् भावय ।
नित्ये शेषिणि निक्षिपन् निजभरं सर्वसहे श्रीसखे
धर्मं धारय चातकस्य कुशलिन् धाराधरैकान्तिनः ॥

என்று நியமித்தருளி அனுப்புவிக்க ஸர்வஜ்ஞஸிங்கப்பநாயகனும் ஸமஸ்தபிருதுகளோடே எதிர்கொண்டு ஸ்ரீமுகத்தை எழுந்தருளப்பண்ணிக்கொண்டு பாரமைகாந்தியநிஷ்டனாய் க்ருதக்ருத்யனாய் தேசிகன் திருவடிகளிலே நித்யபக்தனாயிருந்தான்

*பின்பு நயினாராசாரியரும் ப்ரஹ்மதந்த்ரஸ்வதந்த்ரஜீயர் முதலான முதலிகளோடே ஒருஸம்வத்ஸரம் கோயிலிலேயே ஸித்தாந்தப்ரவசனம் பண்ணிக்கொண்டிருந்து திக்விஜயம் செய்தருள திருவுள்ளம்பற்றி ஸ்ரீரங்கநாய்ச்சியார் பெரிய பெருமாள் திருவடிதொழுது விடைகொண்டு திருப்பேர் முதலான திவ்யதேசங்களில் எம்பெருமான்களை திருவடித்

वेङ्गसिंहः क्रिस्ताब्दीयचतुर्दशशतकपूर्वार्धे एवासीदिति *n* । तस्मा-ल्लक्षणदीपिकाकर्ता गौरणार्योऽपि तत्कालिक एवेत्येतत् सुसाधम् । रूपावतारकर्ता धर्मकीर्तिस्तस्मादपि प्राचीनतरस्तेनानूदितत्वादि-त्यत्र न कोऽपि सन्देहः । अनुन्यासकारो मैत्रेयरक्षितः साय-णाचार्यैः स्वकृतमाधवीयधातुवृत्तावुदाहृतः *o* । क्रिस्ताब्दीयचतुर्द-शशतकस्य मध्यभागः सायणाचार्यकाल इति को वेदानीं न जा-नाति ? मैत्रेयरक्षितस्तत्पूर्वकालिकः, रूपावतारकर्ता धर्मकीर्ति-स्ततोऽपि पूर्वकालिक इत्येतत् सुतरां न्याय्यमेव । अतः क्रिस्ता-ब्दीयत्रयोदशशतकात् प्रागेव रूपावतारोत्पत्तिरिति निश्चयः स-

---

தொழுது அங்குள்ள மதாந்தரஸ்தர்களை ஜயித்துக்கொண்டு ஸர்வஜ்ஞஸிங்கப்பநாயகன் ஸமர்ப்பித்த திருப்பல்லக்கு முதலான ஸகலபிருதுகளோடே....

See *Vedantadesikar-Vaibhava* and *Nayinaracarya-Vaibhava* in *Muvvayirappadi-Guru-Parampara-Prabhava*, by Tritiya-Brahmatantra-Svatantra-Swami, for these two Tamil extracts.

*n*. See his Report on a Search for Sanskrit and Tamil Mss. for the year 1896–97 : No. I. pages 7 to 10.

*o*. *Vide* page 229 in Vol. I. Part 1 of the *Dhatuvritti* of Sayanacharya as published under the authority of the Government of H. H. the Maharaja of Mysore:

" यथाह मैत्रेयरक्षितः—उदात्तत्वमयातिवर्जं भट्टग्रामन्यायेनोदात्ता इत्युच्यन्ते "—इति ।

ज्ञायते यतश्चतुर्दशशतकात् पूर्वमेवेत्थमासीत् स ग्रन्थः सुप्रसिद्धः। एवञ्च क्रिस्ताब्दीयनवमशतकात् पश्चात् त्रयोदशशतकात् प्रागेवैष वैयाकरणो धर्मकीर्तिरासीदिति सिद्धं भवति ॥

ईदृशसीमाद्वयान्तःपातिकाले सम्भूतो वैयाकरणत्वेन प्रख्यातः स धर्मकीर्तिः कः स्यादिति कृतेऽन्वेषणे स्मृतिपथमायाति सिंहलद्वीपाधिपस्य सुप्रसिद्धस्य प्रथमपराक्रमबाहोः समकालिकः कश्चिद्धर्मकीर्तिः। महावंशनामकसिंहलद्वीपराजचरिते दृश्यते स राजा बौद्धमतावलम्बी स्वद्वीपस्थभिक्षुसङ्घजीर्णोद्धाराय महाकाश्यपनामानं परिव्राड्वरं शीलविद्याविभूषितं सङ्घस्थविरमकरोदिति *p*। एष महाकाश्यपो वैयाकरण इति ज्ञायते यतस्तेन कृतं चान्द्रव्याकरणानुसारि बालावबोधनमद्यापि लभ्यते पठ्यते च तत्र सिंहले। तच्छिष्यशिष्यः कश्चित् सङ्घराजधर्मकीर्तिरिति तत्रैव सुविख्यातो विद्वान् बालावताराख्यं पालीभाषाव्याकरणमतनोदिति च श्रूयते *q*। अपिच प्रथमपराक्रमबाहुसभायां धर्मकीर्त्याख्यः कश्चित् पण्डितवर

---

*p*. *Vide* Chapter LXXVIII, in the Translation of the Second Part of Mahavamsa, by L. C. Wijesimha Mudaliar.

*q*. Last para on page ii of the Introduction by Rambukpota Pannasara to the *Balavabodhana* of Mahakasyapa: printed in Pali letters.

आसीदिति महावंशादेवावगम्यते[१]। स्यादेष एव पण्डितो बौद्धभिक्षुः सङ्घराजाभिधः। उपर्युदाहृतम्—"अभिगतषडभिज्ञप्रक्रियोऽपि स्वयं यः प्रथमसमयसज्जद्वासनावासितात्मा"—इति वचनं रूपावतारकर्ता प्रथमं वैदिकब्राह्मणस्सन् तदनु बौद्ध आसीदित्यभिप्रायं पुष्णाति। अस्य सिंहलद्वीपराजस्य पराक्रमबाहो राज्यकालः क्रिस्ताब्दीयद्वादशशतकोत्तरार्धे अभूदिति महावंशादेव सिध्यति। ततः स सङ्घराजधर्मकीर्तिरेव भवेद्रूपावतारकर्तेति विषये नास्ति किमप्यसामञ्जस्यम्। तथापि प्रबलप्रमाणान्तराभावे स एवास्य ग्रन्थस्य कर्तेति निर्णेतुं न शक्यते। केरलेषु द्राविडेषु चास्य रूपावतारस्य यत् कादाचित्क प्रचारबाहुल्यं दृश्यते तदपि तद्ग्रन्थकर्तुर्धर्मकीर्तेः सिंहलस्थत्वं स्थापयितुमर्हति॥

सुविदितमेव किल संस्कृतव्याकरणव्यवसायिनां रूपावतार-प्रक्रियाकौमुदी-प्रक्रियासर्वस्व-सिद्धान्तकौमुद्यादयो नवा व्याकरणप्रबन्धाः शब्दरूपानयनसौलभ्यमुद्दिश्य तैस्तैः कर्तृभिर्निर्मिताः नाद्रियन्ते पाणिनीयं सूत्रपाठक्रमं यथा हि तं काशिकावृत्तिराद्रियते। प्रक्रियासर्वस्वादुपर्युदाहृतं पद्यमप्येतदर्थं दृढीकरोति तादृशसौल-

१. *Vide* Chapter LXXVI in the Translation of the Second Part of Mahavamsa, by L. C. Wijesimha Mudaliar.

भ्यमेवैतेषां मुख्योद्देश इति । एवं रूपसिद्धेश्चारुकथनार्थमुत्पन्नेषु पाणिनीयमतानुसारिषु प्रख्यातव्याकरणग्रन्थेषु प्रक्रियासर्वस्वं सिद्धान्तकौमुदी च समानकाले समभूतां क्रिस्ताब्दीयसप्तदशशतके । प्रक्रियाकौमुद्युत्पत्तिकालश्च क्रिस्ताब्दीयपञ्चदशशतकमध्यभाग इति भाण्डारकरोपाह्वयरामकृष्णविद्वद्वरैः सहेतुकं सुसाधितः*। तस्मादिदानीं सुविदितेष्वेतादृशग्रन्थेषु रूपावतारः प्राचीनतम इति बाढमवगम्यते ॥

संस्कृतशब्दानां सिद्धरूपसौष्ठवज्ञानं पाणिनीयव्याकरणज्ञानं विना न संभवत्येवेति न कोऽपि वक्तुं क्षमः । सुनिपुणवैयाकरणा अपि प्रयोगशरणाः। स्थितस्य गतिचिन्तनमेव हि तादृशानामपि शास्त्रज्ञानस्यासाधारणं प्रयोजनम् । तस्मात् प्रयोगबाहुल्यपरिचयाद्वा सिद्धरूपमात्रबोधकव्याकरणग्रन्थपठनाद्वा परिश्रमानुरूपा सुशब्दाधिगतिर्भवत्येव । तथापि पाणिनीयव्याकरणज्ञानादृते प्रामाणिकशाब्दिकपदप्राप्तिर्न कस्यापि युज्यत इत्यस्मद्देशस्थपण्डितानां चिरपालितं मतम् । नवीनाः पाश्चात्यपण्डिता अपि पश्यन्तीदानीमेतन्मते सार्थक्यम् । तथाच दृश्यते चैतन्मतानुसारिणी महावि-

---

* *Vide* Bhandarkar's Report on the Search for Sanskrit Mss. for 1883–84 : pages 59 and 60.

ख्यातमोक्षमूलरभट्टोक्तिरेवंप्रकारा *s*—"यद्वा वदन्तु जना न कोऽपि जानाति संस्कृतं यो न जानाति पाणिनिम्"। अन्यच्च संस्कृतकाव्यव्याख्यानेषु वा संस्कृतभाषासङ्कलितशास्त्रविचारेषु वा याया व्याकरणप्रक्रिया दृश्यन्ते ताः सर्वा अपि प्रायशः पाणिनिप्रमाणाः। तस्मात् संस्कृतविद्यार्थिषु यावदस्ति पाणिनीयव्याकरणज्ञानं तावदेव तेषां प्रयोजनमेतैः प्रक्रियाप्रदर्शनैः। अपि च संस्कृतविद्याविनयनप्रवृत्तानां सर्वेषामपि शिक्षकाणां स्यादेवानुभवावगतमेतत्—पाणिनीयव्याकरणाधिगमव्यवसायः स्मृतिशक्तिपरिपोषणे बुद्धिसमाधानसंसाधने चोपायः सुतरां समर्थ इति। अत एव संस्कृतवाणीनैपुणीमभिलषतां सर्वेषामपि पाणिनीयव्याकरणज्ञानमनुपेक्षणीयमत्यन्तोपकारकं च। किन्तु तज्ज्ञानलाभः क्लेशसाध्यः समुचितसुललितग्रन्थसहायाभावे। एष रूपावतारस्तावत् परिकल्प्तो बालप्रबोधनार्थमेव कृतिकर्तृप्रतिज्ञातलाघवसुविभक्तत्वार्जवगुणप्रशस्यः पाणिनीयव्याकरणजिज्ञासूनां तादृशसहायापादने निरुपमो निरवद्यश्च। इदमेव हि कारणमेतद्ग्रन्थस्य शोधनपरिष्कर-

*s.* See the opinion of the Right Hon'ble F. Max Muller, Oxford, on the translation of the *Ashtadhyayi* of Panini by Srisa Chandra Vasu, B.A.:—"Whatever people may say, no one knows Sanskrit who does not know Panini."

भ्यमेवैतेषां मुख्योद्देश इति । एवं रूपसिद्धेश्चारुकथनार्थमुत्पन्नेषु पाणिनीयमतानुसारिषु प्रख्यातव्याकरणग्रन्थेषु प्रक्रियासर्वस्वं सिद्धान्तकौमुदी च समानकाले समभूतां क्रिस्ताब्दीयसप्तदशशतके । प्रक्रियाकौमुद्युत्पत्तिकालश्च क्रिस्ताब्दीयपञ्चदशशतकमध्यभाग इति भाण्डारकरोपाह्वयरामकृष्णविद्वद्वरैः सहेतुकं सुसाधितः*। तस्मादिदानीं सुविदितेष्वेतादृशग्रन्थेषु रूपावतारः प्राचीनतम इति बाढमवगम्यते ॥

संस्कृतशब्दानां सिद्धरूपसौष्ठवज्ञानं पाणिनीयव्याकरणज्ञानं विना न संभवत्येवेति न कोऽपि वक्तुं क्षमः । सुनिपुणवैयाकरणा अपि प्रयोगशरणाः । स्थितस्य गतिश्चिन्तनमेव हि तादृशानामपि शास्त्रज्ञानस्यासाधारणं प्रयोजनम् । तस्मात् प्रयोगबाहुल्यपरिचयाद्वा सिद्धरूपमात्रबोधकव्याकरणग्रन्थपठनाद्वा परिश्रमानुरूपा सुशब्दाधिगतिर्भवत्येव । तथापि पाणिनीयव्याकरणज्ञानादृते प्रामाणिकशाब्दिकपदप्राप्तिर्न कस्यापि युज्यत इत्यस्मद्देशस्थपण्डितानां चिरपालितं मतम् । नवीनाः पाश्चात्यपण्डिता अपि पश्यन्तीदानीमेतन्मते सार्थक्यम् । तथाच दृश्यते चैतन्मतानुसारिणी महावि-

---

* *Vide* Bhandarkar's Report on the Search for Sanskrit Mss. for 1883–84 : pages 59 and 60.

ख्यातमोक्षमूलरभट्टोक्तिरेवंप्रकारा *s*—"यद्वा वदन्तु जना न कोऽपि जानाति संस्कृतं यो न जानाति पाणिनिम्"। अन्यच्च संस्कृतकाव्यव्याख्यानेषु वा संस्कृतभाषासङ्कलितशास्त्रविचारेषु वा याया व्याकरणप्रक्रिया दृश्यन्ते ताः सर्वा अपि प्रायशः पाणिनिप्रमाणाः। तस्मात् संस्कृतविद्यार्थिषु यावदस्ति पाणिनीयव्याकरणज्ञानं तावदेव तेषां प्रयोजनमेतैः प्रक्रियाप्रदर्शनैः। अपि च संस्कृतविद्याविनयनप्रवृत्तानां सर्वेषामपि शिक्षकाणां स्यादेवानुभवावगतमेतत्—पाणिनीयव्याकरणाधिगमव्यवसायः स्मृतिशक्तिपरिपोषणे बुद्धिसमाधानसंसाधने चोपायः सुतरां समर्थ इति। अत एव संस्कृतवाणीनैपुणीमभिलषतां सर्वेषामपि पाणिनीयव्याकरणज्ञानमनुपेक्षणीयमत्यन्तोपकारकं च। किन्तु तज्ज्ञानलाभः क्लेशसाध्यः समुचितसुललितग्रन्थसहायाभावे। एष रूपावतारस्तावत् परिक्लृप्तो बालप्रबोधनार्थमेव कृतिकर्तृप्रतिज्ञातलाघवसुविभक्तत्वार्जवगुणप्रशस्यः पाणिनीयव्याकरणजिज्ञासूनां तादृशसहायापादने निरुपमो निरवद्यश्च। इदमेव हि कारणमेतद्ग्रन्थस्य शोधनपरिष्कर-

---

*s.* See the opinion of the Right Hon'ble F. Max Muller, Oxford, on the translation of the *Ashtadhyayi* of Panini by Srisa Chandra Vasu, B.A.:—"Whatever people may say, no one knows Sanskrit who does not know Panini."

गमुद्रणाक्रियासु मत्प्रवृत्तेः । प्रथमसोपानत्वेनास्यास्ति रूपावतारस्य बहुगुणवत्त्वमिति मत्प्रयत्नः सफलो भवेदेवेति साभिलाषं तर्कयामि ॥

चत्वारि तालपत्रलिखितपुस्तकान्युपयुक्तानि रूपावतारपूर्वभागसंशोधनार्थम्। तत्रैकं ग्रन्थलिपिलिखितमन्यदान्ध्रलिपिलिखितं [t] च मदरास्-पुरस्थ-राजकीय-प्राच्य-लिखितग्रन्थ-निलयात् लब्धे । अनयोर्ग्रन्थलिपिलिखितमेव पुस्तकं प्रायशो मातृकात्वेनाङ्गीकृतम्। तृतीयं च पुस्तकं केरललिपिलिखितं मदुपयोगार्थमत्रत्यपच्चैयप्पोत्तमपाठशालायां द्वितीयसंस्कृतोपाध्यायैर्नारायणशास्त्रिभिर्वितीर्णम्। चतुर्थन्तु पूर्वमेवोदाहृतं कृष्णशास्त्रिणामान्ध्रलिपिलिखितं पुस्तकम् ।एतेषां समालोकने क्षिप्रमेव विशदोऽभूत्तेषां परिमितिविसंवादः। यदेकस्मिन् पुस्तके यावत्सङ्गृह्योक्तं तदन्यत्र तावत्संक्षिप्तं न दृष्टम् ;यच्चैकस्मिन् पुस्तके विस्तृत्योक्तं तदन्यस्मिन् सङ्गृहीतं दृष्टम् । सर्वसूत्रविनियोगप्रपञ्चनियमाभावात् ग्रन्थस्यातिप्राचीनत्वात् चिरं बालबोधार्थमुपयुक्तत्वाच्च एतादृशपाठविसंवादस्यावकाशो-

*t*. Nos. 1332 and 1333 in the Descriptive Catalogue of Sanskrit Mss.in the Government Oriental Mss. Library, Madras.

ऽभूदिति दृश्यते । उपर्युदाहृतरूपावतारव्याख्यातापि मूलग्रन्थस्येदृशपाठभेदान् तत्रतत्र स्वकृतव्याख्यायां सूचयति स्म । तस्मान्मातृकानुरोधेनैव मुद्रणं दुस्साधमिति मत्वा दृष्टसर्वपाठसंयोजनया यथामति विस्तृत्य परिष्कृत्य च प्रकाशितो रूपावतारो यूनिवर्सिट्याख्यसर्वकलानिलयनिर्मितबीयेलक्षणपदप्रापकपरीक्षार्थं संस्कृतभाषाभ्यासं कुर्वतामलंभावितुम् । यद्यप्येतेषामानुकूल्यमुद्दिश्यैव परिष्कृतः प्रकाशितश्चैष रूपावतारः तथापि स भवेदितरेषामपि संस्कृतव्याकरणाधीतिमारभमाणानामुपकारक इत्याशासे ॥

एतद्ग्रन्थमुद्रणकार्ये साहाय्यं कृतवद्भ्यः सर्वेभ्योऽपि कृतज्ञताविनिवेदनेनात्मानं धन्यं कर्तुमुत्सहे च । अत्रत्यराजकीयप्राच्यलिखितग्रन्थनिलयनिष्ठशठकोपाचार्यकृतं साहाय्यं लिखितग्रन्थसमालोकने मुद्रितपत्रसंशोधने च मत्कार्यं बहुशो लघूचकार। संस्कृतव्याकरणाधिजिगमिषया रूपावतारं पठतां विषयग्रहणसौलभ्याय सर्वत्र प्रचुरतया वाक्येषु विसन्धित्वमाश्रितम्; विविधा वाक्यान्तास्तदर्थकचिह्नैः क्रमशो निर्दिष्टाश्च । उपपादितविषयाणामवान्तरविभागनिर्देशार्थं सर्वेष्वपि प्रकरणेषु एकप्रयोजना वाक्यततयः संख्यानिर्दिष्टाः पृथङ्मुद्रिताश्च । गुणग्रहणैदंपर्यमेव सद्विदुषां सुप्रसिद्धो धर्म इति निर्भीतो विरमाम्युक्तिवैपुल्यात् ॥

॥ श्रीरस्तु ॥

# ॥ रूपावतारः ॥

—※—

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
सर्वज्ञमनन्तगुणं प्रणम्य बालप्रबोधनार्थमिमम् ।
रूपावतारमल्पं सुकलापमृजुं करिष्यामि ॥

## अथ संज्ञावतारः ॥

1. तत्रादौ तावत्प्रत्याहारश्शास्त्रे संव्यवहारज्ञापनार्थमनुवर्ण्यते। तद्यथा– **अइउण्, ऋऌक्, एओङ्, ऐऔच्, हयवरट्, लण्, ञमङणनम्, झभञ्, घढधष्, जबगडदश्, खफछठथचटतव्, कपय्, शषसर्, हल्** । इति प्रत्याहारसूत्राणि ॥

2. तत्र प्रथममणित्येषप्रत्याहारो गृह्यते । कथं? **अइउण्** इत्यत्र णकारस्य, **उपदेशेऽजनुनासिक इत्** (I. 3. 2.) इत्यतः उपदेशे इत् इति अनुवर्तमाने, **हलन्त्यम्** (I. 3. 3.)–उपदेशे यदन्त्यं हल् तदित्संज्ञं भवति । के पुनरुपदेशाः? आगमादेशधातुगणपाठप्रत्ययप्रत्याहारसूत्राण्युपदेशाः—

धातुसूत्रगणोणादि वाक्यलिङ्गानुशासनम् ।
आगमप्रत्ययादेशा **उपदेशाः** प्रकीर्तिताः ॥

इतीत्संज्ञायां; **स्वं रूपं शब्दस्याशब्दसंज्ञा** (I. 1. 68.) इत्यतः स्वं रूपमिति अनुवर्तमाने, **आदिरन्त्येन सहेता** (I. 1. 71.)—आदिवर्णोऽन्त्येन इता सह गृह्यमाणस्तन्मध्यपतितानां वर्णानां ग्राहको भवति स्वस्य च रूपस्य। इति **अण्** इति अकारेकारोकारा उच्यन्ते। एवं अक् इक् उक् इत्यादयो ग्राह्याः॥

3. णकारादीनां त्वनुबन्धानां प्रत्याहारग्रहणार्थमुपदिष्टत्वात् तत्तत्प्रत्याहारग्रहणावस्थायामेव अवस्थानं, अन्यदान; इत्संज्ञकत्वात्। **तस्य लोपः** (I. 3. 9.)—यस्य इत्संज्ञा तस्य लोपो भवति; इति लोपः। कश्च लोपः? **अदर्शनं लोपः** (I. 1. 60.)—वर्णानामदर्शनं लोपसंज्ञं भवति। किमदर्शनम्? अदर्शनम् अश्रवणमनुच्चारणमनुपलब्धिरभावो वर्णविनाश इत्यनर्थान्तरम्। एतैः शब्दैः योऽर्थोऽभिधीयते तस्य अर्थस्य इयं लोपसंज्ञा अनेन विधीयते। अणादयश्च प्रत्याहारा एकचत्वारिंशत्। कुतः पुनः इयन्त एवेति नियमः?

> एकस्माण्णङटञवा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः।
> ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः॥

इति वचनात्। अण् (पूर्वेण णकारेण); एङ्; अट्; यञ्; छव्; झष्, भष्; अक्, इक्, उक्; अण्, इण्, यण् (परेण णकारेण); अम्, यम्, ङम्; अच्, इच्, एच्, ऐच्; यय्, मय्, झय्, खय्; यर्, झर्, खर्, चर्, शर्; अश्, हश्, वश्, झश्, जश्, बश्; अल्, हल्, वल्, रल्, झल्, शल्; इति। अणित्यत्र आदिवर्णनियमः उत्तरत्र ग्रहणकसूत्रवशाद्विज्ञायते॥

4. हकारादिष्वकार उच्चारणार्थः। लण् इत्यत्र लकारेत्वकारोऽनुनासिकः प्रतिज्ञायते। प्रतिज्ञानुनासिक्याः पाणिनीयाः। यत्र इत्कार्यमिच्छन्ति

तत्रैव प्रतिज्ञायते। **उपदेशेऽजनुनासिक इत्**–(I. 3. 2.)–उपदेशे योऽच् अनुनासिकः स इत्संज्ञो भवति। अत्र लकारे वर्तमानस्य अकारस्य हयवरट् इत्यत्र रेफेण सह र इति प्रत्याहारग्रहणं भवति। इति प्रत्याहारग्रहणविभागः॥

5. कथं पुनरनुपदिष्टा दीर्घादयो गृह्यन्ते? सवर्णग्रहणात्। कथम्? **अणुदित्सवर्णस्य चाप्रत्ययः** (I. 1. 69.)–अण् इति परेण णकारेण प्रत्याहारग्रहणं; उदितः कुचुटुतुपवः; अण् च उदिच्च गृह्यमाणः सवर्णस्य ग्राहको भवति स्वस्य च रूपस्य, प्रत्ययं वर्जयित्वा। **तपरस्तत्कालस्य** (I. 1. 70.)–तः परः यस्मात् सोऽयं तपरः; तादपि परः तपरः; तपरो यो वर्णः स तत्कालस्य आत्मना तुल्यकालस्य गुणान्तरयुक्तस्य सवर्णस्य ग्राहको भवति स्वस्य च रूपस्य। किं पुनः सवर्णम्? **तुल्यास्यप्रयत्नं सवर्णम्** (I. 1. 9.)—तुल्यशब्दः सदृशपर्यायः, तुलया संमितं तुल्यं; आस्यं मुखं, आस्ये भवं आस्यं, ताल्वादिस्थानं; प्रयत्नः प्रयतनं; आभ्यन्तरप्रयत्नः स्पृष्टतादिर्वर्णगुणः; तुल्यौ आस्यप्रयत्नौ यस्य वर्णस्य येन वर्णेन सह स समानजातीयं प्रति सवर्णसंज्ञो भवति। चत्वार आभ्यन्तरप्रयत्नाः सवर्णसंज्ञायामाश्रीयन्ते—स्पृष्टता, ईषत्स्पृष्टता, विवृतता, संवृतता चेति। बाह्यप्रयत्नास्तु न तथा। ते तु विवार–संवार–श्वास–नाद–घोष–अघोष–अल्पप्राण–महाप्राणाश्चेत्यष्टप्रकाराः आन्तरतम्यपरीक्षोपयोगिनः॥

6. अत्रायं विभागः। **ऊकालोऽज्झ्रस्वदीर्घप्लुतः** (I. 2. 27.)—उ ऊ ऊ३ इत्येवं कालः ऊकालः; कालो मात्रा; एकमात्रिक–द्विमात्रिक–त्रिमात्रिका अचो यथाक्रमं ह्रस्वदीर्घप्लुतसंज्ञा भवन्ति। तथा चोक्तम्—

एकमात्रोऽज्भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं त्वर्धमात्रकम् ॥ इति ।

ततश्च ह्रस्वसंज्ञः अकारः । अजित्यनुवर्तमाने, **उच्चैरुदात्तः** (I. 2. 29.)—उच्चैरुपलभ्यमानो योऽजुदात्तसंज्ञो भवति; **नीचैरनुदात्तः** (I. 2. 30.)–नीचैरुपलभ्यमानो योऽजनुदात्तसंज्ञो भवति; **समाहारः स्वरितः** (I. 2. 31.)—उदात्तानुदात्तसमाहारो योऽच् स स्वरितसंज्ञो भवति; इति स त्रिविधो भवति । स पुनः प्रत्येकं सानुनासिको निरनुनासिकश्चेति षड्विधो भवति । कश्चानुनासिकः? **मुखनासिकावचनोऽनुनासिकः** (I. 1. 8.)—मुखसहिता नासिका मुखनासिका; तयोच्चार्यते यो वर्णः सोऽनुनासिकसंज्ञो भवति । एवं दीर्घः; एवं प्लुतः । एवमष्टादशभेदमवर्णकुलं सवर्णग्रहणात् प्रत्याहारपठितः अकारः गृह्णाति । तथा इवर्णः । तथा उवर्णः । तथा ऋवर्णः । लृवर्णस्य दीर्घा न सन्ति; स द्वादशप्रभेदः । सन्ध्यक्षराणां ह्रस्वा न सन्ति; तान्यपि द्वादशप्रभेदानि । अन्तस्थाः द्विप्रभेदा रेफवर्जिता यवलाः, सानुनासिका निरनुनासिकाश्चेति । रेफोष्मणां सवर्णा न सन्ति । वर्ग्यो वर्ग्येण सवर्णः । इति सवर्णविभागः ॥

7. कस्य पुनः किं स्थानम्? अकुहविसर्जनीयानां कण्ठः; इचुयशानां तालु; ऋटुरषाणां मूर्धा; लृतुलसानां दन्ताः; उपूपध्मानीयानामोष्ठौ; एदैतोः कण्ठतालु; ओदौतोः कण्ठोष्ठम्; वकारस्य दन्तोष्ठम्; जिह्वामूलीयस्य जिह्वामूलम्; नासिकानुस्वारस्य ।

हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।
उरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ॥

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥

(पा. शि. IV. 1 & 2.)

8. कस्य पुनः कः प्रयत्नः? स्पृष्टं करणं स्पर्शानां, ईषत्स्पृष्टमन्तस्स्थानां, विवृतमूष्मणां स्वराणां च; संवृतमकारस्य, ह्रस्वमवर्णं प्रयोगे संवृतम्; दीर्घप्लुतयोस्तु विवृतत्वं तेषां सावर्ण्यप्रसिध्यर्थम्; अकार इह शास्त्रे विवृतः प्रक्रियादशायां प्रतिज्ञायते; तस्य प्रयोगार्थं अअ (VIII. 4. 68.) इति शास्त्रान्ते प्रत्यापत्तिः करिष्यते । स्वरूपाद्धि प्रच्युतस्य पुनस्तत्प्राप्तिः प्रत्यापत्तिः । इति स्थानप्रयत्नविभागः ॥

9. अचः स्वराः, हल् व्यञ्जनं, एचः सन्ध्यक्षराणि, कादयो मावसानाः स्पर्शाः, यरलवा अन्तःस्थाः, शषसहा ऊष्माणः, ≍क इति जिह्वामूलीयं, ≍प इत्युपध्मानीयः, अं इत्यनुस्वारः, अः इति विसर्जनीयः ॥

---

इति संज्ञावतारः ॥



## अथ संहितावतारः ॥

1. का च संहिता? **परः सन्निकर्षः संहिता** (I. 4. 109.)—परशब्दोऽत्रातिशये वर्तते; सन्निकर्षः प्रत्यासत्तिः; परो यस्सन्निकर्षो वर्णानां अर्धमात्राकालव्यवधानः स संहितासंज्ञो भवति।

पदे तु संहिता नित्या नित्या धातूपसर्गयोः।
समासे च तथा वाक्ये सा विवक्षामपेक्षते॥

2. **देव+छत्रम्** इति स्थिते; ततो वकारे तु अकारस्य, **ऊकालोऽज्झ्रस्वदीर्घप्लुतः** (I. 2. 27.) इति ह्रस्वसंज्ञायां; **ह्रस्वस्य पिति कृति तुक्** (VI. 1. 71.), **संहितायाम्** (VI. 1. 72.), इत्यनुवर्तमाने; **छे च** (VI. 1. 73.)—छकारे परतो ह्रस्वस्य तुगागमो भवति संहितायाम्। **षष्ठी स्थानेयोगा** (I. 1. 49.) इति शास्त्रे अनियतयोगलक्षणा या षष्ठी सा स्थानेयोगैव भवति, इति ह्रस्वस्य स्थाने तुकि प्राप्ते, तदपवादः **आद्यन्तौ टकितौ** (I. 1. 46.)—टित्कितावागमौ षष्ठीनिर्दिष्टस्य आद्यन्तावयवौ भवतः, इत्यादिः टित् भवति, अन्तः कित् भवति। उकार उच्चारणार्थः। ककारस्य **हलन्त्यम्** (I. 3. 3.) इति इत्संज्ञायां लोपः प्रयोजनम्। **आद्यन्तौ टकितौ** (I. 1. 46.) इति देशविधिः। **देवत्+छत्रम्** इति जाते, **स्तोः श्चुना श्चुः** (VIII. 4. 40.)—स्तोः सकारतवर्गयोः, श्चुना शकारचवर्गाभ्यां योगे, श्चुः शकारचवर्गावादेशौ भवतः। **यथासंख्यमनुदेशः समानाम्** (I. 3. 10.)—संख्याशब्देन क्रमो लक्ष्यते; समानां समसंख्यानां समपरिपठि-

तानां उद्देशिनामनुदेशिनां च यथाक्रमं उद्देशिभिः अनुदेशिनः संबध्यन्ते । इति सकारस्य शकारः, तवर्गस्य चवर्गः । क्लिष्टोच्चारणं कर्तव्यं ; **देवच्छत्रम्** इति सिद्धं भवति ॥

3. **ह्री + छः, म्ले + छः**, इति स्थिते, ईकार एकारयोः पूर्ववद्दीर्घसंज्ञायां, **छे च** (VI. 1. 73.) इत्यनुवर्तमाने, **दीर्घात्** (VI. 1. 75.)—दीर्घात् छकारे परतो दीर्घस्य तुगागमो भवति संहितायाम् । शेषं पूर्ववत् ; **ह्रीच्छः, म्लेच्छः** ॥

4. **वधू + छाया, कुमारी + छाया**, इति स्थिते, **दीर्घात्** इति नित्यं तुकि प्राप्ते, **दीर्घात्** इत्यनुवर्तमाने, **पदान्ताद्वा** (VI. 1. 76.)—पदान्तात् दीर्घात् छकारे परतः पदान्तस्य दीर्घस्य तुगागमो वा भवति संहितायाम् । शेषं पूर्ववत् ; **वधूच्छाया, कुमारीच्छाया** ; पक्षे—**वधूछाया, कुमारीछाया** ॥

5. **आङ् + छादयति, माङ् + छिदत्**, इति स्थिते, उभयत्रापि ङकारस्य इत्संज्ञायां लोपः प्रयोजनं ; **पदान्ताद्वा** (VI. 1. 76.) इति विकल्पेन तुकि प्राप्ते, तदपवादः **आङ्माङोश्च** (VI. 1. 74.) इति ; आङो माङश्च परतो नित्यं तुगागमो भवति संहितायाम् । ननु चात्र तुगागमः कथं भवति, **आङ्माङोश्च** इति विधीयते, आ मा इति नैतावाङ्माङौ ङकाराभावात् ? नैषदोषः । **एकदेशविकृतमनन्यवद्भवति** (परि. 37.)—कथं श्वा पुच्छकर्णादिष्वङ्गेषु च्छिन्नेषु श्वैव भवति नाश्वो न गर्दभः—इति वचनात् तुक् भवत्येव । शेषं पूर्ववत् ; **आच्छादयति, माच्छिदत्** ॥

इति संहितावतारे तुक्सन्धिः ॥



अथ स्वरसन्धिः ॥

1. **दधि+अत्र, शर्मी+अत्र, मधु+अत्र, वधू+आकृतिः, पितृ+अर्थः, लृ+आकृतिः,** इति स्थिते; **संहितायाम्** (VI. 1. 72.) इति अनुवर्तमाने, **इको यणचि** (VI. 1. 77.)—इको यणादेशो भवत्यचि परतः संहितायाम्। यथासंख्यपरिभाषाया: अत्रापि प्रवृत्तिः। **दध्य्+अत्र** इति जाते, **यरोऽनुनासिकेऽनुनासिको वा** (VIII. 4. 45.), **अचो रहाभ्यां द्वे** (VIII. 4. 46.), इत्यनुवर्तमाने, **अनचि च** (VIII. 4. 47.)—अच उत्तरस्य यरो द्वे रूपे वा भवतः न त्वचि परतः। **दध्ध्य्+अत्र** इति जाते, **झलां जश् झशि** (VIII. 4. 53.)—झलां जशादेशो भवति झशि परतः। **स्थानेऽन्तरतमः** (I. 1. 50.)—स्थाने प्राप्यमानानां वर्णानां अन्तरतमः सदृशतमः आदेशो भवति। इति पूर्वधकारस्य जशादेशात् दकारः। एवं **दद्ध्य्+अत्र** इति जाते, **हलोऽनन्तराः संयोगः** (I. 1. 7.)—अज्भिरव्यवहिताः हलः संयोगसंज्ञाः स्युः; इति **द्ध्य्** इत्यस्य संयोगसंज्ञायां, **संयोगान्तस्य लोपः** (VIII. 2. 23.)—संयोगान्तं यत् पदं तदन्तस्य लोपः—इति यकारलोपे प्राप्ते, यणादेशस्य बहिरङ्गलक्षणस्य असिद्धत्वात् संयोगान्तलोपो न भवति। **असिद्धम् बहिरङ्गमन्तरङ्गे** (परि. 50.)—अन्तरङ्गे कर्तव्ये बहिरङ्गं कार्यं असिद्धं भवति; इति पदद्वयसंबन्धिवर्णद्वयाश्रितस्य यणादेशस्य बहिरङ्गत्वात् एकपदाश्रिते संयोगान्तलोपे अन्तरङ्गे कर्तव्ये असिद्धत्वम्। **दद्ध्यत्र, शर्म्म्यत्र, मद्ध्वत्र, वद्ध्वाकृतिः, पित्त्रर्थः, लाकृतिः**। पक्षे—**दध्यत्र, शर्म्यत्र, मध्वत्र, वध्वाकृतिः, पित्रर्थः** ॥

2. **ने + अनं, लो + अनं, नै + अकः, लौ + अकः,** इति स्थिते; **इको यणचि** (VI. 1. 77.) इत्यतः अचीत्यनुवर्तमाने, **एचोऽयवायावः** (VI. 1. 78.)—एचः स्थाने यथासंख्यं अय्, अव्, आय्, आव्, इत्येते आदेशा भवन्ति अचि परतः संहितायाम्। **नयनं, लवनं, नायकः, लावकः** ॥

3. **देव + इह, खट्वा + इह, तव + उदकं, खट्वा + ऊढा,** इति स्थिते; **अदेङ् गुणः** (I. 2. 2.)—अदेङौ गुणसंज्ञौ भवतः; **एकः पूर्वपरयोः** (VI. 1. 84.) इत्यनुवर्तमाने, **आद्गुणः** (VI. 1. 87.)—अवर्णादचि परतः गुणो भवत्येकः पूर्वपरयोरन्तरतमः। **देवेह, खट्वेह, तवोदकं, खट्वोढा** ॥

4. **अर्ध + ऋचः, तव + ऌकारः,** इति स्थिते; **ऋकारऌकारयोः सवर्णसंज्ञा वक्तव्या** (वा. I. 1. 9.), इति सवर्णसंज्ञायां, सावकाशनिरवकाशयोः निरवकाशो बलीयान् इति न्यायात् **आद्गुणः** इत्यकारो गुणो भवति। **उरण् रपरः** (I. 1. 51.)—ऋवर्णस्य स्थाने यः अण् आदिश्यमानः स रप्रत्याहारपरो भवति। यो हि द्वयोः संबन्धी भवति सः अन्यतरव्यपदेशं लभते। **स्थानेऽन्तरतमः** इति ऋकारऌकारयोः स्थाने यः अण् स रेफलकारपरो भवति। **अचो रहाभ्यां द्वे** (VI. 41. 46.)—अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे वा भवतः; **अर्धर्च्चः**; पक्षे—**अर्धर्चः। यणो मयो द्वे भवतः** (वा. VIII. 4. 47.) इति वक्तव्यम्; **तवल्ल्कारः**; पक्षे—**तवल्कारः** ॥

5. **तव+एषा, जाया+ऐह्यत, तव+ओदनं, खट्वा+औह्यत,** इति स्थिते; **वृद्धिरादैच्** (I. 1. 1.)—आदैचौ वृद्धिसंज्ञौ भवतः;

वृद्धिशब्दः संज्ञात्वेन विधीयते, प्रत्येकमादैचां वर्णानां सामान्येन तद्भावितानां अतद्भावितानां च आदेशौ वृद्धिसंज्ञौ भवतः; **आद्गुणः** इति वर्तमाने, **वृद्धिरेचि** (VI. 1. 88.)—अवर्णान्तादेचि परतो वृद्धिर्भवत्येका पूर्वपरयोः अन्तरतमा ; **तवैषा, जायैद्यत, तवौदनं, खट्वौद्यत** ॥

6. **प्र+एजते, उप+ओषति,** इत्यत्र वृद्धौ प्राप्तायां, **एङि पररूपम्** (VI. 1. 94.)—अवर्णान्तात् उपसर्गात् एङादौ धातौ परतः पररूपमेकादेशो भवति ; **प्रेजते, उपोषति** ।

**वृद्ध+ओतुः, दन्त+ओष्ठम्,** इत्यत्र वृद्धौ प्राप्तायां, **ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्** (वा. VI. 1. 94.); इति **वृद्धोतुः, वृद्धौतुः ; दन्तोष्ठम्, दन्तौष्ठम्** ॥

**उप+एति, प्र+एधते,** इति स्थिते, **एत्येधत्यूठ्सु** (VI. 1. 89.)—अवर्णात् एजाद्योः एत्येधत्योः ऊठि च परे वृद्धिरेका भवति ; **उपैहि, प्रैधते** ।

**अक्ष+ऊहिनी** इति स्थिते, **अक्षादूहिन्या वृद्धिर्वक्तव्या** (वा. VI. 1. 89.); **अक्षौहिणी** सेना ।

**स्व+ईर,** इति स्थिते, **स्वादीरेरिणोर्वृद्धिर्वक्तव्या** (वा. VI. 1. 89.) इति **स्वैरं, स्वैरी** ।

**प्र+ऊह, प्र+ऊढ, प्र+ऊढि, प्र+एष, प्र+एष्य,** इति स्थिते, **प्रादूहोढोढ्येषैष्येषु** (वा. VI. 1. 89.) इति वृद्धिः; **प्रौहः, प्रौढः, प्रौढिः, प्रैषः, प्रैष्यः** ।

**प्र+ऋणः** इति स्थिते, **प्रवत्सवत्सतरकंबलवसनदशार्णानामृणे** (वा. VI. 1. 89.) इति वृद्धिः ; **प्रार्णः** । एवं **वत्सार्णः,**

**वत्सतरार्णः, कंबलार्णः, वसनार्णः, दशार्णः, ऋणार्णः ।**

**सुख + ऋतः** इति स्थिते, **ऋते च तृतीयासमासे** (वा. VI. 1. 89) इति वृद्धिः; **सुखार्तः ।**

**प्र + ऋच्छति, उप + ऋच्छति, अव + ऋच्छति,** इत्यत्र गुणे प्राप्ते, **उपसर्गादृति धातौ** (VI. 1. 91.)—अवर्णान्तादुपसर्गात् ऋकारादौ धातौ परतः पूर्वपरयोरन्तरतमा वृद्धिर्भवति; **प्रार्च्छति, उपार्च्छति, अवार्च्छति ।**

**का + ओम्, अद्य + ओढा** (=आ + ऊढा), इत्यत्र **ओमाङोश्च** (VI. 1. 95.)—अवर्णान्तात् ओमि आङि च परतः पररूपमेकादेशः; **कोम्, अद्योढा ॥**

7. **दण्ड + अग्रं, खट्वा + अग्रं, दधि + इह, मधु + उत्तमं, पितृ + ऋषभः, होतृ + लृकारः,** इति स्थिते, **अकः सवर्णे दीर्घः** (VI. 1. 101.)—अकः सवर्णे अचि परतः दीर्घो भवत्येकः पूर्वपरयोरन्तरतमः; **दण्डाग्रं, खट्वाग्रं, दधीह, मधूत्तमं, पितृषभः, होतृकारः ।** लृवर्णस्य दीर्घाभावात् ऋवर्णस्य दीर्घः । अकः इति किम्? अग्नये, विष्णवे । सवर्ण इति किम्? दध्यत्र । अचीत्येव; खट्वा हस्तं, कुमारी शेते । **दण्ड + हस्तं, दधि + शीतं,** इत्यत्र सवर्णसंज्ञा नास्ति; **नाज्झलौ** (I. 1. 10.)—तुल्यास्यप्रयत्नावपि अच् च हल् च परस्परं सवर्णसंज्ञौ न भवतः । न निषिद्धं सवर्णत्वं नाज्झलाविति आकारहकारयोः ईकारशकारयोश्च; अत्र ग्रहणकशास्त्रस्य अनभिनिर्वृत्तत्वेन अच्प्रत्याहारस्य सवर्णाग्रहणात् ॥

8. **अग्ने + अत्र, वायो + अत्र,** इति स्थिते, **अमिपूर्वः** (VI. 1. 107.)इत्यधिकृत्य, **एङः पदान्तादति** (VI. 1. 109.)—पदान्ता-

देङः अति परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति; **अग्नेऽत्र, वायोऽत्र।** पदान्तादिति किम्? नयनं, लवनं। अति इति किम्? य आगताः, पट इह। **ये + आगताः, पटो + इह,** इति स्थिते, **एचोऽयवायावः** इति अयाद्यादेशे कृते; **भो भगो अघो अपूर्वस्य योऽशि** (VIII. 3. 17.), **व्योर्लघुप्रयत्नतरः शाकटायनस्य** (VIII. 3. 18.), इत्यनुवर्तमाने; **लोपः शाकल्यस्य** (VIII. 3. 19.)—अवर्णपूर्वयोः पदान्तयोः यकारवकारयोः लोपो भवत्यशि परतः शाकल्यस्याचार्यस्य मतेन। **पूर्वत्रासिद्धम्** (VIII. 2. 1.)—येयं सपादा सप्ताध्यायी अनुक्रान्ता एतस्यां अयं पादोनोऽध्यायः असिद्धो भवति; इत उत्तरश्चोत्तरोत्तरो योगः पूर्वत्र पूर्वत्रासिद्धो भवति। इत्यसिद्धत्वात् दीर्घगुणौ न भवतः; **य आगताः, पट इह।** शाकल्यादन्येषामाचार्याणां मतेन यकारवकारयोर्लोपाभावे—**ययागताः, पटविह। गो + अग्रम्** इति स्थिते, **सर्वत्र विभाषा गोः** (VI. 1. 122.)—छन्दसि भाषायां च अति परतः गोशब्दस्य एङ् विभाषा प्रकृत्या भवति; **गो अग्रम्, गोऽग्रम्॰॥**

९. **गो+अजिनम्, गो+अर्थम्** इति स्थिते, **अवङ् स्फोटायनस्य** (VI. 1. 123.)—अति इति निवृत्ते, अचि परतः, एङन्तस्य गोः अवङादेशो भवति। **अलोऽन्त्यस्य** (I. 1. 52.)—षष्ठीनिर्दिष्टस्य यः आदेशः सः अन्त्यस्य अलः स्थाने भवति इत्यन्त्यादेशे प्राप्ते; तदपवादः **अनेकाल् शित् सर्वस्य** (I. 1. 55.)—अनेकाल् यः आदेशः यः शित् च आदेशः स सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति। इति सर्वादेशे प्राप्ते; **ङिच्च** (I. 1. 53.)—ङित् यः आदेशः स अनेकालपि अन्त्यस्य भवति। इति **गवाजिनम्, गवार्थम्।** स्फोटायनादन्ये-

षां मते तु—**गोऽजिनम्, गो अजिनम्; गोऽर्थम्, गो अर्थम्।** व्यवस्थितविभाषया **गवाक्षः** इत्यत्र नित्यमवङ् भवति। **गो+इन्द्रः** इति स्थिते, **इन्द्रे च नित्यम्** (VI. 1. 124.)—इन्द्रशब्दे उत्तरपदे परतः गोशब्दस्य नित्यमवङादेशो भवति; **गवेन्द्रः॥**

इति संहितावतारे स्वरसन्धिः॥

---

अथ अचामेव सन्धिकार्ये प्राप्ते प्रकृतिभाव उच्यते॥

---

1. **देवदत्त+इह, यज्ञभूते+आगच्छ,** इति स्थिते; **अचोऽन्त्यादि टि** (I. 1. 64.)—अचां सन्निविष्टानां मध्ये यः अन्त्यः अच् तदादि शब्दरूपं टिसंज्ञं भवति; **आद्यन्तवदेकस्मिन्** (I. 1. 21.)–वर्णविषयेऽप्यादिवत् कार्यं भवत्यन्तवच्च; **वाक्यस्य टेः प्लुत उदात्तः** (VIII. 2. 82.) इत्यधिकृत्य, **दूराद्धूते च** (VIII. 2. 84.)–दूरादाह्वाने वर्तमानस्य वाक्यस्य टेः प्लुतो भवति; स च उदात्तः; हूतग्रहणं संबुद्धिमात्रोपलक्षणार्थम्; **प्रकृत्यान्तःपादमव्यपरे** (VI. 1. 115.) इति वर्तमाने, **प्लुतप्रगृह्या अचि** (VI. 1. 125.)–प्लुताश्च प्रगृह्याश्च अचि परतः प्रकृत्या भवन्ति। इति प्रकृतिभावात् गुणायादेशौ न भवतः; **देवदत्ता३ इह, यज्ञभूते३ आगच्छ॥**

2. **अग्नी+इति, वायू+इति, खट्वे+इति,** इति स्थिते; **ईदूदेद्द्विवचनं प्रगृह्यम्** (I. 1. 11.)—ईत् ऊत् एत् इत्येवमन्तं द्विवचनं प्रगृह्यसंज्ञं भवति; **येन विधिस्तदन्तस्य** (I. 1. 72.)—येन विशेषणेन विधिर्विधीयते स तदन्तस्य शब्दसमुदायस्य ग्राहको भवति स्वस्य

च् रूपस्य; इति प्रकृतिभावाद्दीर्घयणयादेशा न भवन्ति; **अग्नी इति, वायू इति, खट्वे इति ।** ईदूदेदिति किम्? वृक्षावत्र । द्विवचनमिति किम्? कुमार्यत्र, किशोर्यत्र । ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः; यथा "मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" इति दृश्यते; **मणीव, दम्पतीव, रोदसीव ॥**

3. **अमी + अत्र, अमू + आसाते,** इति स्थिते; **अदसो मात्** (I. 1. 12.)–अदसः सम्बन्धी यो मकारः तस्मात् परे ईदूदेतः प्रगृह्यसंज्ञा भवन्ति; इति प्रकृतिभावात् यणादेशो न भवति; **अमी अत्र, अमू आसाते ।** एकारस्य नास्त्युदाहरणम् । अदस इति किम्? शम्यत्र । मादिति किम्? अमुकेऽत्र ॥

4. **अ+अवेहि, इ+इन्द्रं पश्य, उ+उत्तिष्ठ,** इति स्थिते; **प्राग्रीश्वरान्निपाताः** (I. 4. 56.) इत्यधिकृत्य, **चादयोऽसत्त्वे** (I. 4. 57.)—सत्त्वं द्रव्यं, असत्त्वं अद्रव्यम्; असत्त्वे वर्तमानाः चादयो निपातसंज्ञा भवन्ति; इदं तदिति सर्वनामप्रत्यवमर्शयोग्यं वस्तु द्रव्यमित्युच्यते; तथा चोक्तम्—

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥
स्वरूपेणाथवा जात्या गुणेनाप्यथ संख्यया ।
संबध्यते यदा वस्तु तद्द्रव्यं परिकीर्तितम् ॥

**निपात एकाजनाङ्** (I. 1. 14.)–एकश्चासौ अच् च एकाच्; निपातो यः एकाच् आङ्वर्जितः स प्रगृह्यसंज्ञो भवति; इति प्रकृतिभावात् सवर्णदीर्घो न भवति; **अ अवेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ ।** निपात इति किम्? आ + अटतुः = आटतुः । एकाजिति किम्?

प्र + अयात् = प्रायात् । अनाङिति किम्? आ + उदकान्तात् = ओद-कान्तात् ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥

ईषदर्थे—**आ + उष्णम् = ओष्णं ;** क्रियायोगे—**आ + इहि = एहि ;** मर्यादायां—**आ + अग्रात् = आग्रात् ;** अभिविधौ—**आ + आर्येभ्यः = आर्येभ्यः ;** वाक्ये—**आ एवं नु मन्यसे ;** स्मरणे—**आ एवं किल तत् ।** अत्र तु उभयत्रापि ङित्वाभावात्—**निपात एकाजनाङ्** इति प्रगृह्यसंज्ञायां—प्रकृतिभावाद्वृद्धिर्न भवति । **प्रादयः** (I. 4. 58.) इति आङः निपातसंज्ञा ॥

5. **नो+इह, अथो+अत्र,** इति स्थिते ; पूर्ववन्निपातसंज्ञायां निपात इति वर्तमाने ; **ओत्** (I. 1. 15.)—ओदन्तो यो निपातः स प्रगृह्य-संज्ञो भवति ; **येन विधिस्तदन्तस्य** (I. 1. 72.) इति ओकारेण तदन्तो गृह्यते । इति प्रकृतिभावात् अवादेशपूर्वरूपत्वे न भवतः ; **नो इह, अथो अत्र ।** निपात इति किम्? पटविह ॥

इति संहितावतारे प्रकृतिसन्धिः ॥

---

अथ व्यञ्जनसन्धिरुच्यते ॥

---

1. **पयस्+शीतम्, निस्+चरति, सन्+शंभुः, तत्+चित्** इति स्थिते; **स्तोः श्चुना श्चुः** (VIII. 4. 40.)—सकारतवर्गयोः शकार-चवर्गाभ्यां योगे शकारचवर्गौ क्रमेण भवतः ; **पयश्शीतम्, निश्च-**

रति, सञ्शंभुः, तञ्चित् । एवमेव तच्छादयति, तज्जयति, तज्झषः, तञ्ञकारः इत्यादयः ॥

2. विश्+नः, प्रश्+नः, इत्यत्र श्चुत्वे प्राप्ते, शात् (VIII. 4. 44.)—शकारात् परस्य तवर्गस्य श्चुत्वं न भवति ; इति विश्नः, प्रश्नः ॥

3. धनुस्+टंकारः, वयस्+षष्ठः, शिनष्+ति, गरुत्+डयनम्, चक्रिन्+ढौकसे, इति स्थिते ; ष्टुना ष्टुः (VIII. 4. 41.)—स्तोः सकारतवर्गयोः ष्टुना षकारटवर्गाभ्यां योगे ष्टुः षकारटवर्गौ क्रमेण आदेशौ भवतः ; धनुष्टंकारः, वयष्षष्ठः, शिनष्टि, गरुड्डयनम्, चक्रिण्ढौकसे ॥

4. षट्+सन्तः, षट्+तीर्णाः, इत्यत्र ष्टुत्वे प्राप्ते, न पदान्ताट्टोरनाम् (VIII. 4. 42.)—पदान्तात् टवर्गादुत्तरस्य नामूर्वर्जितस्य स्तोः ष्टुत्वं न स्यात् ; षट्सन्तः, षट्तीर्णाः । पदान्तादिति किम्? ईड्+ते=ईट्टे । टोः किम्? सर्पिष्+तिक्तम्=सर्पिष्टिक्तम् । अनामिति किम्? षट्+नाम्=षण्णाम् । अनाम्नवतिनगरीणामिति वाच्यम् (वा); षण्णवतिः, षण्णगर्यः ॥

5. वाक्+इह, अच्+अन्तम्, षट्+गच्छन्ति, तत्+याति, त्रिष्टुप्+अत्र, इति स्थिते ; पदस्य (VIII. 1. 16.) इत्यधिकृत्य, झलाञ्जशोऽन्ते (VIII. 2. 39.)—झलां पदान्ते वर्तमानानां जशो भवन्त्यन्तरतमाः ; वागिह, अजन्तम्, षड्गच्छन्ति, तद्याति, त्रिष्टुबत्र ॥

6. वाक्+नयति, अच्+मात्रं, षट्+मुखानि, तत्+नयनं, त्रिष्टुप्+मिनोति, इति स्थिते, पूर्ववत् जश्त्वे कृते, यरोऽनुनासि-

**केऽनुनासिको वा** (VIII. 4. 45.)—यरः पदान्तस्य अनुनासिके परतः वा अनुनासिकादेशो भवत्यन्तरतमः । के पुनस्तेऽनुनासिकाः? ञमङणना अनुनासिकाः । यत्र अनुनासिकादेशो नास्ति तत्र जशामेव श्रवणं भवति । **वाङ्नयति, वाग्नयति ; अञ्मात्रम्, अज्मात्रम् ; षण्मुखानि, षड्मुखानि ; तन्नयनम्, तद्नयनम् ; त्रिष्टुम्मिनोति, त्रिष्टुब्मिनोति** । अत्र **यरोऽनुनासिके तद्धितप्रत्यये परतः भाषायां नित्यमिति वक्तव्यम्** (वा); **वाङ्मयम्, कियन्मात्रम्** ॥

7. **वाक्+हसति, अच्+हलौ, षट्+हलानि, तत्+हितम् त्रिष्टुप्+हुतम्,** इति स्थिते, पूर्ववत् जश्त्वे कृते, **उदः स्थास्तम्भोः पूर्वस्य** (VIII. 4. 61.) इति वर्तमाने, **झयो होऽन्यतरस्याम्** (VIII. 4. 62.)—झयः पदान्तादुत्तरस्य हकारस्य स्थाने पूर्वसवर्णादेशो भवत्यन्यतरस्याम् । वर्गाणां प्रथमद्वितीयौ शषसविसर्जनीया जिह्वामूलीयोपध्मानीयौ च विवाराः श्वासा अघोषाः । वर्गाणां प्रथमतृतीयपञ्चमा यरलवाश्च अल्पप्राणाः । वर्गाणां द्वितीयचतुर्थौ शषसहाश्च महाप्राणाः । वर्गाणां तृतीयचतुर्थपञ्चमाः यरलवाः हकारानुस्वारौ च संवारा नादा घोषाश्च । महाप्राणस्य सोष्मणो घोषवतो नादवतो हकारस्य संवृतकण्ठस्य स्थाने पूर्वसवर्णो महाप्राणवान् सोष्मवान् नादवान् घोषवांश्च वर्गचतुर्थो भवति । **वाग्घसति, वाग्हसति ; अज्झलौ, अज्हलौ ; षड्ढलानि, षड्हलानि ; तद्धितम्, तद्हितम् ; त्रिष्टुब्भुतम्, त्रिष्टुब्हुतम्** ॥

8. **वाक्+शोभना, अच्+शेषम्, षट्+श्यामाः, तत्+श्वेतम्, त्रिष्टुप्+श्रूयते,** इति स्थिते, पूर्ववत् जश्त्वे कृते, **खरि च**

(VIII. 4. 55.) इति चर्त्वे च ततः कृते, **शश्छोऽटि** (VIII. 4. 63.)—झयः पदान्तादुत्तरस्य शकारस्य छकारादेशो भवत्यटि परतोऽन्यतरस्याम्। **वाक्छोभना, वाक्शोभना; अच्छेषम्, अच्शेषम्; षट्च्छयामाः, षट्श्यामाः; तच्छ्वेतम्, तच्श्वेतम्; त्रिष्टुप्च्छ्रूयते, त्रिष्टुप्श्रूयते।** तच्छ्वेतम् तच्श्वेतम् इत्युभयत्रापि स्तोः श्चुना श्चुरिति पूर्वतकारस्य चकारः। **वाक्+श्लक्ष्णा, तत्+श्लोकः, तत्+श्मश्रु,** इत्यत्र, अट्परत्वाभावेपि **शश्छोऽमीति वक्तव्यम्** इति वचनात् छत्वं भवति; **वाक्छ्लक्ष्णा, तच्छ्लोकः, तच्छ्मश्रु॥**

9. **उत्+स्थास्यति, उत्+स्तम्भिष्यति,** इति स्थिते, पूर्ववत् जश्त्वे कृते, **उदः स्थास्तम्भोः पूर्वस्य** (VIII. 4. 61.)—उच्छब्दादुत्तरयोः स्था स्तम्भ् इत्येतयोः सकारस्य स्थाने पूर्ववर्णस्य सवर्णः आदेशो भवति। **हलो यमां यमि लोपः** (VIII. 4. 64.) इति वर्तमाने, **झरो झरि सवर्णे** (VIII. 4. 65.)—हल उत्तरस्य झरो लोपो वा भवति सवर्णे झरि परतः। इति **उत्थास्यति, उत्तम्भिष्यति** इति भवतः॥

10. **कुङ्+आस्ते, सुगण्+इह, कृषन्+आस्ते,** इति स्थिते, **ङमो ह्रस्वादचि ङमुण्णित्यम्** (VIII. 3. 32.)—ह्रस्वात्परो यो ङम् पदान्तः तस्मादुत्तरस्य अचो नित्यं ङमुडागमो भवति। ङमुट् इति ङुट् णुट् नुट् इत्येते आगमा भवन्ति यथाक्रमेण। ते च **आद्यन्तौ टकितौ** (I. 1. 46.) इति टित्वादादावेव भवन्ति। तुग्वदनुबन्धलोपः। **अनचि च** (VIII. 4. 47.) इति द्वित्वम्। **हलो यमां यमि लोपः** (VIII. 4. 64.)—हल उत्तरस्य यमो लोपो वा भवति सवर्णे

यमि परतः । अतः **कुङ्ङास्ते, सुगण्णिह, कृषन्नास्ते** । ङम इति किम्? त्वमत्र । ह्रस्वादिति किम्? प्राङास्ते । पदान्तादिति किम्? नन्दिनी । अचीति किम्? कुङ् शेते ॥

11. **भवान्+छादयति, भवान्+ठकारेण, भवान्+थुडति, भवान्+चरति, भवान्+टीकते, भवान्+तरति,** इति स्थिते,**मतुवसो रु सम्बुद्धौ छन्दसि** (VIII. 3.1.),**पुमः खय्यम्परे** (VIII. 3. 6.), इति वर्तमाने, **नश्छव्यप्रशान्** (VIII.3.7.)—नकारस्य पदान्तस्य रुः भवति अम्परे छवि परतः प्रशान्शब्दं वर्जयित्वा । रोः उकारलोपः; प्रयोजनम् **रोः सुपि** (VIII. 3. 16.) इति विशेषणम् । **अत्रानुनासिकः पूर्वस्य तु वा** (VIII. 3. 2.)—अत्र रुप्रकरणे रोः पूर्वस्य वर्णस्य वा अनुनासिकादेशो भवति । इति सानुनासिकः आकारः । **अनुनासिकात् परोऽनुस्वारः** (VIII. 3. 4.)—अन्यशब्दोऽत्राध्याहर्तव्यः; तदपेक्षयाचेयम् अनुनासिकादिति पञ्चमी; अनुनासिकादन्यः रोः पूर्वः यो वर्णः तस्मात् परो अनुस्वारः आगमो भवति । **खरवसानयोर्विसर्जनीयः** (VIII. 3. 15.)—खरि परतः अवसाने च विषये रेफस्य पदान्तस्य विसर्जनीयादेशो भवति । **विसर्जनीयस्य सः** (VIII. 3. 34.)—पदान्तस्य विसर्जनीयस्य सकारादेशो भवति खरि परतः; यथायोगं श्चुत्वम् । स्तोः श्चुना श्चुः इति वर्तमाने, ष्टुना ष्टुः इति सकारस्य षकारः, तवर्गस्य टवर्गः । एवं **भवाँश्छादयति, भवांश्छादयति; भवाँष्ठकारेण, भवांष्ठकारेण; भवाँस्थुडति, भवांस्थुडति; भवाँश्चरति, भवांश्चरति; भवाँष्टीकते, भवांष्टीकते; भवाँस्तरति, भवांस्तरति** इति भवन्ति । छवीति किम्? भवान् करोति । अप्रशानिति

किम्? प्रशाश्विनोति; चुत्वेन ञकारः। अम्परे इति किम्? भवान्त्सरुकः ॥

12. **भवान् + सुनोति, तान्+सूते,** इति स्थिते, **डः सि धुट्** (VIII. 3. 29.) इति वर्तमाने, **नश्च** (VIII. 3. 30.)—पदान्तात् नकारादुत्तरस्य सकारस्य वा धुडागमो भवति; तुग्वत् अनुबन्धलोपः। **खरि च** (VIII. 4. 55.) इति चर्त्वे कृते, **चयो द्वितीयाः शरि पौष्करसादेः** (वा) इति चयो द्वितीया भवन्ति शरि परतः पौष्करसादेः आचार्यस्य मतेन। **भवान्थ्सुनोति, तान्थ्सूते**। अन्यस्मिन् पक्षे—**भवान्त्सुनोति, तान्त्सूते** ॥

13. **भवान् + शेते,** इति स्थिते, **हे मपरे वा** (VIII. 3. 26.), **नश्च** (VIII. 3. 30.), इति वर्तमाने, **शि तुक्** (VIII. 3. 31.)–नकारस्य पदान्तस्य शकारे परतो वा तुगागमो भवति; अनुबन्धलोपः। तुगागमपक्षे शकारस्य **शश्छोऽटि** (VIII. 4. 63.) इति वा भवति छकारः। स्तोः श्चुना श्चुः इति तवर्गस्य चुत्वेन, तकारस्य चकारः, नकारस्य ञकारः। **झरो झरि सवर्णे** (VIII. 4. 65.) इति पक्षे चकारलोपः। **भवाञ्शेते, भवाञ्च्छेते, भवाञ्छेते** इति भवन्ति।

14. **त्वम् + शेषे, त्वम् + षण्डः, त्वम् + साधुः, त्वम् + हससि, त्वम् + राजा,** इति स्थिते, **हलि सर्वेषाम्** (VIII. 3. 22.) इति वर्तमाने, **मोऽनुस्वारः** (VIII. 3. 23.)—मकारस्य पदान्तस्य हलि परतः अनुस्वारादेशो भवति; **त्वं शेषे, त्वं षण्डः, त्वं साधुः, त्वं हससि, त्वं राजा** ॥

15. **त्वम् + करोषि, त्वम् + चरसि, त्वम् + टीकसे, त्वम् + तरसि, त्वम् + पचसि, सम् + यन्ता, सम् + वत्सरः,**

**यम् + लोकम्**, इति स्थिते, पूर्ववदनुस्वारे कृते, **अनुस्वारस्य ययि परसवर्णः** (VIII. 4. 58.) इति वर्तमाने, **वा पदान्तस्य** (VIII. 4. 59.)—पदान्तस्य अनुस्वारस्य ययि परतो वा परसवर्णादेशो भवति । इतिस्पर्शेषु वर्गपञ्चमाः, यवलेषु सानुनासिका यवला भवन्ति । पक्षे अनुस्वारः । **त्वं करोषि, त्वङ्करोषि; त्वं चरसि, त्वञ्चरसि ; त्वं टीकसे, त्वण्टीकसे ; त्वं तरसि, त्वन्तरसि ; त्वं पचसि, त्वम्पचसि ; संयन्ता, सँय्यन्ता ; संवत्सरः, सँव्वत्सरः ; यं लोकम् , यँल्लोकम् ;** ॥

16. **तत् + लुनाति, भवान् + लिखति,** इति स्थिते, **तोर्लि** (VIII. 4. 60.)—तवर्गस्य पदान्तस्य लकारे परतः परसवर्णो लकारो भवति ; **तल्लुनाति, भवाँल्लिखति** ॥

इति व्यञ्जनसन्धिः ॥

---

अथ विसर्जनीयसन्धिः ॥

---

1. **कः + शेते, कः + षड्जः, कः + साधुः**, इत्यत्र, **विसर्जनीयस्य सः** (VIII. 3. 34.) इति सत्वे प्राप्ते, **वा शरि** (VIII. 3.36.)–विसर्जनीयस्य पदान्तस्य शरि परतो वा विसर्जनीयादेशो भवति ; अन्यत्र सत्वम् ; **कश्शेते, कःशेते ; कष्षड्जः, कःषड्जः ; कस्साधुः, कःसाधुः** ॥

2. **कः+करोति, कः+खनति, कः+पचति, कः+फलति,** इति स्थिते, सत्वे प्राप्ते, **कुप्वोः ≍क≍पौ च** (VIII. 3. 73)—कवर्ग

पवर्गयोः खरि परतः विसर्जनीयस्य पदान्तस्य ≍क ≍प इत्येतावादेशौ भवतः; चकारात् विसर्जनीयश्च पक्षे भवति ; ≍क ≍प इत्यत्र कपावुच्चारणार्थौ । **क≍करोति, कःकरोति; क≍खनति, कःखनति ; क≍पचति , कःपचति ; क≍फलति, कःफलति ॥**

3. **कः+स्थास्यति, दक्षः+स्थितः,** इति स्थिते, सत्वे प्राप्ते, **खर्परे शरि परतो विसर्जनीयस्य वा लोपो वक्तव्यः** (वा) इति **कस्थास्यति, कस्स्थास्यति, दक्षस्थितः, दक्षस्स्थितः** इति भवन्ति ॥

4. **वासः + क्षौमम् , कः + त्सरुः ,** इति स्थिते, सत्वे प्राप्ते, खरि इत्यनुवर्तमाने, **शर्परे विसर्जनीयः** (VIII. 3. 39.)—विसर्जनीयस्य पदान्तस्य शर्परे खरि परतः विसर्जनीयादेशो भवति ; **वासःक्षौमम् , कःत्सरुः ॥**

5. **निः+कृतम् , दुः+कृतम् , निः+पीतम् , दुः+ पीतम् ,** इत्यत्र विसर्गस्य सत्वे प्राप्ते, **इदुदुपधस्य चाप्रत्ययस्य** (VIII. 3. 41)—इकारोकारोपधस्य अप्रत्ययस्य विसर्गस्य षः स्यात् कवर्गे पवर्गे च परतः । **निष्कृतम् , दुष्कृतम् , निष्पीतम् , दुष्पीतम् ।** अप्रत्ययस्य किम्? अग्निः करोति, वायुः करोति । इदुदिति किम्? गीः करोति, पूः करोति । **पुम्मुहुसोः प्रतिषेधः** (वा) ; **पुंस्कामा, मुहुस्कामा ॥**

6. **द्विः+करोति, त्रिः + करोति, चतुः+ करोति ,** इत्यत्र विसर्गस्य सत्वे प्राप्ते, **द्विस्त्रिश्चतुरिति कृत्वोऽर्थे** (VIII. 3. 43.)–कृत्वोऽर्थे वर्तमानानामेषां विसर्गस्य षकारो वा भवति कुप्वोः परतः ;

**द्विष्करोति, द्विःकरोति; त्रिष्करोति, त्रिःकरोति; चतुष्करोति, चतुःकरोति ॥**

इति विसर्गसन्धिः ॥

---

अथ स्वादिसन्धिरुच्यते ॥

---

1. **वृक्ष** + **अत्र, प्लक्ष** + **अत्र,** इति स्थिते, **अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** (I. 2. 45.)—अभिधेयवचनोऽर्थशब्दः; अर्थवत् शब्दरूपं, धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा, प्रातिपदिकसंज्ञं भवति। **अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञा इष्यते** (भा. इ.)। **प्रत्ययः** (III.1. 1. ), **परश्च** (III. 1. 2.), **ङ्याप्प्रातिपदिकात्** (IV. 1. 1.), इत्यनुवर्तमाने, **स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसांङ्योःसुप्** (IV. 1. 2.)—ङ्यन्तादाबन्तात् प्रातिपदिकाच्च परे स्वादयः प्रत्यया भवन्ति। इति सर्वस्वादिप्रत्ययप्रसङ्गे, वक्तुः विवक्षितपूर्विका शब्दप्रवृत्तिरिति न्यायेन विवक्षावशात्, प्रातिपदिकार्थमात्रविवक्षायाम्; **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा** (II. 3. 46.)—प्रातिपदिकार्थः सत्ता; लिङ्गम् स्त्रीपुन्नपुंसकम्; परिमाणम् प्रस्थादि; वचनमेकत्वादि; द्वन्द्वान्ते श्रूयमाणो मात्रशब्दः प्रत्येकमभिसम्बध्यते; प्रातिपदिकार्थमात्रे, लिङ्गमात्रे, परिमाणमात्रे, वचनमात्रे, प्रथमाविभक्तिर्भवति। अत्र प्रातिपदिकग्रहणात् निरर्थकस्यापि निपातस्य प्रातिपदिकत्वेन विभक्तिर्भवति। तत्रापि युगपदेकवचनाद्विवचनबहुवचनप्रसङ्गे विवक्षावशात्

पवर्गयोः खरि परतः विसर्जनीयस्य पदान्तस्य ×क ×प इत्येतावादेशौ भवतः; चकारात् विसर्जनीयश्च पक्षे भवति ; ×क ×प इत्यत्र कपावुच्चारणार्थौ । **क×करोति, कःकरोति ; क×खनति, कःखनति ; क×पचति , कःपचति ; क×फलति, कःफलति ॥**

3. **कः+स्थास्यति, दक्षः+स्थितः**, इति स्थिते, सत्वे प्राप्ते, **खर्परे शरि परतो विसर्जनीयस्य वा लोपो वक्तव्यः** (वा) इति **कस्थास्यति, कस्स्थास्यति, दक्षस्थितः, दक्षस्स्थितः** इति भवन्ति ॥

4. **वासः + क्षौमम् , कः + त्सरुः** , इति स्थिते, सत्वे प्राप्ते, खरि इत्यनुवर्तमाने, **शर्परे विसर्जनीयः** (VIII. 3. 39.)—विसर्जनीयस्य पदान्तस्य शर्परे खरि परतः विसर्जनीयादेशो भवति; **वासःक्षौमम् , कःत्सरुः ॥**

5. **निः+कृतम् , दुः+कृतम् , निः+पीतम् , दुः+ पीतम्** , इत्यत्र विसर्गस्य सत्वे प्राप्ते, **इदुदुपधस्य चाप्रत्ययस्य** (VIII. 3. 41)—इकारोकारोपधस्य अप्रत्ययस्य विसर्गस्य षः स्यात् कवर्गे पवर्गे च परतः। **निष्कृतम् , दुष्कृतम् , निष्पीतम् , दुष्पीतम् ।** अप्रत्ययस्य किम् ? अग्निः करोति, वायुः करोति । इदुदिति किम् ? गीः करोति, पूः करोति । **पुम्मुहुसोः प्रतिषेधः** ( वा ) ; **पुंस्कामा, मुहुस्कामा ॥**

6. **द्विः+करोति, त्रिः + करोति, चतुः+ करोति**, इत्यत्र विसर्गस्य सत्वे प्राप्ते, **द्विस्त्रिश्चतुरिति कृत्वोऽर्थे** (VIII. 3. 43.)–कृत्वोऽर्थे वर्तमानानामेषां विसर्गस्य षकारो वा भवति कुप्वोः परतः;

**द्विष्करोति, द्विःकरोति; त्रिष्करोति, त्रिःकरोति; चतुष्करोति, चतुःकरोति॥**

इति विसर्गसन्धिः॥

---

अथ स्वादिसन्धिरुच्यते॥

---

1. **वृक्ष + अत्र, प्लक्ष + अत्र,** इति स्थिते, **अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** (I. 2. 45.)—अभिधेयवचनोऽर्थशब्दः; अर्थवत् शब्दरूपं, धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा, प्रातिपदिकसंज्ञं भवति। **अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञा इष्यते** (भा. इ.)। **प्रत्ययः** (III. 1. 1.), **परश्च** (III. 1. 2.), **ङ्याप्प्रातिपदिकात्** (IV. 1. 1.), इत्यनुवर्तमाने, **स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसांङ्योःसुप्** (IV. 1. 2.)—ङ्यन्तादाबन्तात् प्रातिपदिकाच्च परे स्वादयः प्रत्यया भवन्ति। इति सर्वस्वादिप्रत्ययप्रसङ्गे, वक्तुः विवक्षितपूर्विका शब्दप्रवृत्तिरिति न्यायेन विवक्षावशात्, प्रातिपदिकार्थमात्रविवक्षायाम्; **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा** (II. 3. 46.)—प्रातिपदिकार्थः सत्ता; लिङ्गम् स्त्रीपुन्नपुंसकम्; परिमाणम् प्रस्थादि; वचनमेकत्वादि; द्वन्द्वान्ते श्रूयमाणो मात्रशब्दः प्रत्येकमभिसम्बध्यते; प्रातिपदिकार्थमात्रे, लिङ्गमात्रे, परिमाणमात्रे, वचनमात्रे, प्रथमाविभक्तिर्भवति। अत्र प्रातिपदिकग्रहणात् निरर्थकस्यापि निपातस्य प्रातिपदिकत्वेन विभक्तिर्भवति। तत्रापि युगपदेकवचनाद्विवचनबहुवचनप्रसङ्गे विवक्षावशात्

अर्थमात्रैकत्वविवक्षायां, **द्व्येकयोर्द्विवचनैकवचने** (I. 4. 22)–द्वित्वैकत्वयोरर्थयोर्द्विवचनैकवचने भवतः। इत्येकार्थविवक्षायाम् एकवचनम्। किमेतदेकवचनम्? **तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः** (I. 4. 101.), **तान्येकवचनद्विवचनबहुवचनान्येकशः** (I. 4. 102.), इत्यनुवर्तमाने, **सुपः** (I. 4. 103.)—सुपः त्रीणि-त्रीणि पदानि भूत्वा एकश एकवचन-द्विवचन-बहुवचन-संज्ञानि भवन्ति। इति प्रथमैकवचनम् सु। उकारलोपः; प्रयोजनम् **अदस औ सुलोपश्च** (VII. 2. 107.) इति विशेषणम्। **सुप्तिङन्तं पदम्** (I. 4. 14.)—सुप्तिङौ प्रत्याहारौ; सुबन्तं तिङन्तं च यच्छब्दरूपं तत् पदसंज्ञं भवति। **प्रत्ययग्रहणे यस्मात् स विहितः तदादेस्तदन्तस्य ग्रहणम्** (परि. 23.), इति तदन्तत्वे सिद्धे, अत्र अन्तग्रहणं **संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं न भवति** (परि 27.) इति ज्ञापनार्थम्। तेन **तरप्तमपौ घः** (I. 1. 22.) इति घसंज्ञा तरप्तमप्प्रत्यययोरेव न तु तदन्तयोः। ततश्च गौरी ब्राह्मणितरा इत्यत्र गौरीशब्दस्य **घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः** (VI. 3. 43.) इति ह्रस्वो न भवति। **पदस्य** इत्यधिकृत्य, **ससजुषो रुः** (VIII. 2. 66.)—सकारान्तस्य पदस्य सजुषश्च रुर्भवति। स च **अलोऽन्त्यस्य** (I. 1. 52.)—षष्ठीनिर्दिष्टस्य य आदेश उच्यते सः अन्त्यस्य अलः स्थाने भवति। **ऋत उत्** (VI. 1. 111.) इति वर्तमाने, **अतो रोरप्लुतादप्लुते** (VI. 1. 113.)—अप्लुतभाविनः अकारादुत्तरस्य रोः उकारादेशो भवति अप्लुतभाविन्यकारे परतः। अतः **वृक्ष + उ + अत्र** इति जाते, **आद्गुणः** (VI. 1. 87.) इति अकार-उकारयोः ओकारः; **एङः पदा-**

**न्तादति** (VI. 1. 109.) इति परस्य पूर्वधात्वम् एकादेशः; **वृक्षोऽत्र, प्लक्षोऽत्र** । गेरिति किम्? प्रातरत्र ॥

2. **देव+याति, अश्व+वहति,** इति स्थिते, तथैव प्रथमैकवचनम् सु, तस्य रुत्वं च; अनुबन्धलोपः। **हशि च** (VI. I. 114.)—अप्लुतभाविनः अकारादुत्तरस्य रोः उकारादेशो भवति हशि च परतः। **आद्गुणः** इति गुणे कृते, **देवो याति, अश्वो वहति** इति भवतः। त्रैपादिकस्यापि रुत्वस्य उत्वं प्रति आश्रयत्वादसिद्धयभावः ।

3. **देवास् + इह, वृक्षास् + अत्र,** इति स्थिते, रुत्वे कृते, **रोः सुपि** (VIII. 3. 16.) इत्यनुवर्तमाने, **भोभगोअघोअपूर्वस्य योऽशि** (VIII. 3. 17.)—भो भगो अघो इत्येवं पूर्वस्य च अवर्णपूर्वस्य च रोः यकारादेशो भवति अशि परतः । **लोपः शाकल्यस्य** इति यकारलोपः । **पूर्वत्रासिद्धम्** इत्यसिद्धत्वात् गुणदीर्घौ न भवतः । **देवा इह, वृक्षा अत्र** । लोपाभावपक्षे—**देवायिह, वृक्षायत्र** ॥

4. **भवन् + इह, भगवन् + अत्र, अघवन् + एहि,** इति स्थिते, **विभाषा भवद्भगवदघवतामोच्चावस्य** (VIII. 3. 1. वा.)—भवन् भगवन् अघवन् इत्येतेषां नकारस्य वा रुर्भवति, एषां अवशब्दस्य च ओकारः । सन्धिविषये पूर्ववद्यकारः । **ओतो गार्ग्यस्य** (VIII. 3. 20.)—ओकारादुत्तरयोः पदान्तयोर्यकारवकारयोः लोपो भवत्यशि परतः । नित्यम्; गार्ग्यग्रहणं पूजार्थम्; न तु विकल्पार्थम् । पूर्वत्रासिद्धमित्यसिद्धत्वात् अवादेशः परस्य पूर्वधात्वं च न भवतः । **भो इह, भगो अत्र, अघो एहि** । रुत्वाभावपक्षे **ङमो ह्रस्वादचि ङमुण्णित्यम्** इति ङमुडागमः; **भवन्निह, भगवन्नत्र, अघवन्नेहि** । गेरिति किम्? अन्तरत्र ॥

5. **भवन् + गच्छ, देवास् + हसन्ति**, इत्यत्र, नकारसकारयोः रुत्वे अवशब्दस्य ओकारे च कृते, रोः पूर्ववद्यकारः। **हलि सर्वेषाम्** (VIII.3.22.)–हलि परतः भो भगो अघो इत्येवंपूर्वस्य अपूर्वस्य च पदान्तस्य यकारस्य लोपो भवति सर्वेषामाचार्याणां मतेन । **भो गच्छ, देवा हसन्ति** । रुत्वाभावपक्षे **भवन् गच्छ** । हलि किम्? देवायिह। हशीति वक्तव्ये हल्ग्रहणम् उत्तरत्र अनुवृत्त्यर्थम् ॥

6 **अग्नि+अत्र, पटु + गच्छति, नौ+ याति**,इति स्थिते, तथैव प्रथमैकवचनम् सु ; सकारस्य रुत्वम् । अत्र निमित्तस्य अवर्णपूर्वत्वस्य अभावात् नैमित्तिकस्य यकारादेशस्याप्यभावः; **अग्निरत्र** । **अचो रहाभ्यां द्वे** (VIII. 4. 46.) इति शिष्टोदाहरणयोरुभयत्र वा द्वित्वम् ; **पटुर्ग्गच्छति, नौर्य्याति** ; पक्षे—**पटुर्गच्छति, नौर्याति** ॥

7. **पुनर् + रमते, अग्नि + रात्रौ, पटु + राजा**, इत्यत्र, तथैव प्रथमैकवचनम् सु । पुनर्शब्दस्य, **स्वरादिनिपातमव्ययम्** (I. 1. 37.)—स्वरादयो निपाताश्च अव्ययसंज्ञा भवन्ति, इत्यव्ययसंज्ञायाम् ; **ण्यक्षत्रियार्षञितो यूनि लुगणिञोः**(II. 4.58.) इत्यधिकृत्य, **अव्ययादाप्सुपः** (II. 4. 82)—अव्ययादुत्तरस्य आपः सुपश्च लुग्भवति। कश्चलुक्? **प्रत्ययस्य लुक्श्लुलुपः** (I. 1.61.)—अदर्शनमित्यनुवर्तते; प्रत्ययादर्शनस्य लुक् श्लु लुप् इत्येतास्संज्ञा भवन्ति। इतरत्र सोः रुत्वम् । **ढो ढे लोपः** (VIII. 3. 13.) इति वर्तमाने, **रो रि** (VIII. 3. 14.)—रेफस्य लोपो भवति रेफे परतः । **ढ्लोपे पूर्वस्य दीर्घोऽणः** (VI. 3. 111.)—ढकाररेफयोः लोपनिमित्तयोः परतः पूर्वस्य अणः स्थाने दीर्घो भवति । इति **पुना रमते, अग्नी रात्रौ, पटू राजा** ॥

8. **मनस्+रथः**, इति स्थिते, तथैव सु । मनस्-शब्दस्य नपुंसकत्वात्, **षड्भ्यो लुक्** (VII. 1. 22.) इत्यनुवर्तमाने, **स्वमोर्नपुंसकात्** (VII. 1. 23.)—नपुंसकादंगादुत्तरयोः सु अम् इत्येतयोः लुक् भवति । **प्रत्ययलोपे प्रत्ययलक्षणम्** (I. 1. 62.)–प्रत्यये लुप्तेऽपि प्रत्ययाश्रितं कार्यं भवति । इति पदसंज्ञायाम् , सकारस्य रुत्वम् । मनर् + रथः इति जाते, **हशि च** (VI. 1. 114.) इति उत्वं, **रो रि** इति रेफलोपश्च प्राप्नुतः । **विप्रतिषेधे परं कार्यम्** (I. 4. 2.)–तुल्यबलविरोधो विप्रतिषेधः ; तस्मिन् विप्रतिषेधे परेण सूत्रेण कार्यं भवति । इति परत्वात् **रो रि** इति रेफलोपे प्राप्ते, **पूर्वत्रासिद्धम्** इत्युत्वसूत्रं प्रति रेफलोपसूत्रस्य असिद्धत्वात्, **हशि च** इत्युत्वमेव भवति । तस्मात् गुणः; **मनोरथः** ॥

9. **एतद् + करोति, तद् + गच्छति,** इति स्थिते, तथैव सु । **अष्टन आ विभक्तौ** (VII. 2. 84.) इत्यधिकृत्य, **त्यदादीनामः** (VII. 2. 102.)—त्यदादीनां अङ्गानां अकारादेशो भवति विभक्तौ सुपि तिङि च परतः । **द्विशब्दपर्यन्तानां त्यदादीनामत्वमिष्यते** (भा. इ.) । **भाव्यमानः अण् सवर्णान् न गृह्णाति** (परि. 19.) । अलोऽन्त्यस्य (I. 1. 52.) । **एङि पररूपम्** (VI. 1. 94.), **उस्यपदान्तात्** (VI. 1. 96.), इति वर्तमाने, **अतो गुणे** (VI. 1. 97.)—अपदान्तात् अकारात् गुणसंज्ञके वर्णे परतः पूर्वपरयोः पररूपमेकादेशो भवति । इति, एत + स् + करोति इति जाते, **तदोस्सस्सावनन्त्ययोः** (VII. 2. 106.)—त्यदादीनां तकारदकारयोरनन्त्ययोः सकारादेशो भवति सौ परतः । इति, एस + स् + करोति इति जाते, **एतत्तदोस्सुलोपोऽकोरनञ्समासे हलि** (VI. 1. 132.)

—एतत्तदोः अविद्यमानककारयोः नञ्समासवर्जितयोः सम्बन्धिनः सोः हलि परतः लोपो भवति । इति, एस + करोति इति जाते, **अपदान्तस्य मूर्धन्यः** (VIII. 3. 55.), **सहेः साडः सः** (VIII. 3. 56.), **इण्कोः** (VIII. 3. 57.), इति वर्तमाने, **आदेशप्रत्यययोः** (VIII. 3. 59.)—इण्कवर्गाभ्यां उत्तरस्य आदेशरूपसकारस्य प्रत्ययावयवसकारस्य च अपदान्तस्य मूर्धन्यादेशो भवति । इति षकारः, **एष करोति ; स गच्छति** । अकोरिति किम्? एषको ददाति, सको ददाति । अनञ्समासे इति किम्? अनेषः करोति, असो गच्छति । हलीति किम्? एषोऽत्र, सोऽयम् ॥

10. सैष दाशरथी रामः इत्यत्र, **सोऽचि लोपे चेत् पादपूरणम्** (VI. 1. 134.)—स इत्येतस्य अचि परतः सुलोपो भवति, लोपे सत्येव पादः पूर्येत चेत् । इति सोः लोपः; **स + एषः** इत्यत्र **सैषः** इति भवति ॥

इति स्वादिसन्धिः समाप्तः ॥

---

तुक् स्वरः प्रकृतिश्चैव व्यञ्जनश्च ततः परम् ।
ततो विसर्जनीयश्च स्वादिः षट्सन्धिरुच्यते ॥

---

॥ **संहितावतारश्च समाप्तः** ॥



## अथ विभक्त्यवतारः ॥

### अजन्तपुंलिङ्गप्रकरणम् ॥

1. द्वे विभक्ती । **तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः** (I. 4. 101.), **सुपः** (I. 4. 103.), इत्यनुवर्तमाने, **विभक्तिश्च** (I. 4. 104.)—सुप्तिङौ प्रत्याहारौ; सुपः तिङश्च त्रीणित्रीणि विभक्तिसंज्ञाश्च भवन्ति । एवं सुपां तिङाञ्च विभक्तिसंज्ञाविधानात् तत्र त्रीणित्रीणीत्यनेन सुपः सप्तविभक्तयः । काः पुनस्ताः ? स्वौजसित्यादिषु—सु औ जस् इति प्रथमा; अम् औट् शस् इति द्वितीया; टा भ्यां भिस् इति तृतीया; ङे भ्यां भ्यस् इति चतुर्थी; ङसि भ्यां भ्यस् इति पञ्चमी; ङस् ओस् आम् इति षष्ठी; ङि ओस् सुप् इति सप्तमी । एताः सप्तविभक्तयः प्रातिपदिकात् परे भवन्ति । द्विविधं प्रातिपदिकम् अजन्तं हलन्तं च । तत्पुनः त्रिविधं प्रत्येकं पुंलिङ्गं स्त्रीलिङ्गं नपुंसकलिङ्गं चेति । तत्र अजन्तेषु प्रातिपदिकेषु पुंलिङ्गेषु प्रथममकारान्तात् वृक्षशब्दात् सप्तविभक्तयः परे योज्यन्ते । तत् कथम् ? **वृक्ष** इति स्थिते, अर्थवत्त्वात् प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । तथैव प्रथमैकवचनम् सु । उकारलोपात् **वृक्ष + स्** इति जाते, **ससजुषो रुः** (VIII. 2. 66.) इति पदान्तस्य सस्य रुः । अथ **वृक्ष** + र् इति जाते, **विरामोऽवसानम्** (I. 4. 110.)—विरामो वर्णानामभावः; सोऽवसानसंज्ञो भवति । **खरवसानयोर्विसर्जनीयः** (VIII. 3. 15.) इति विसर्जनीयः । तस्मात् **वृक्षः**; यथा वृक्षस्तिष्ठति ॥

2. **द्व्येकयोर्द्विवचनैकवचने** (I. 4. 22.) इति द्वित्वविवक्षायां द्विवचनम् औ। **वृक्ष + वृक्ष + औ** इति स्थिते, **सरूपाणामेकशेष एकविभक्तौ** (I. 2. 64.)—सरूपाणां समानरूपाणां शब्दानामेकविभक्तौ परतः एकशिष्यते, अन्ये लुप्यन्ते। समानं रूपं येषां ते सरूपाः; रूप्यते बोध्यते अनेनेति रूपः, अर्थो वर्णश्च; तस्मात् वर्णतो विरूपाणामपि समानार्थानाम् एकशेषो भवति। **प्रथमयोः पूर्वसवर्णः** (VI. 1. 102)—प्रथमायां द्वितीयायां च अकः अजादौ विभक्तौ परतः पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घः एकादेशो भवति। इति पूर्वसवर्णदीर्घे प्राप्ते, **नादिचि** (VI. 1. 104.)—अवर्णान्तादिचि परतः प्रथमयोः पूर्वसवर्णः इति दीर्घो न भवति। वृद्धिरेचि इति वृद्धिः; **वृक्षौ**॥

3. बह्वर्थविवक्षायां, **बहुषु बहुवचनम्** (I. 4. 21.)—बह्वर्थेषु विवक्षितेषु बहुवचनं भवति। **वृक्ष + वृक्ष + वृक्ष + जस्** इति स्थिते, पूर्ववदेकशेषः। अत्र जकारस्य, **चुटू** (I. 3. 7.)—चवर्गटवर्गौ प्रत्ययस्य आदिभूतावित्संज्ञौ भवतः, इतीत्संज्ञा। तस्य लोपः; प्रयोजनम् **जसश्शी** (VII. 1. 17.) इति विशेषणम्। **हलन्त्यम्** इति सकारस्य इत्संज्ञायां प्राप्तायाम्, **न विभक्तौ तुस्माः** (I. 3. 4.)—विभक्तौ वर्तमानाः तवर्गसकारमकाराः इत्संज्ञा न भवन्ति। प्रथमयोः पूर्वसवर्णः इतिदीर्घः। अथ रुत्वविसर्गौ। **वृक्षाः**; यथा वृक्षास्तिष्ठन्ति॥

4. तथैव सम्बोधनविवक्षायां, **संबोधने च** (II. 3. 47.)—संबोधने चार्थे प्रथमाविभक्तिर्भवति। किञ्च सम्बोधनम्? आभिमुख्यकरणं सम्बोधनम्। **एकवचनं सम्बुद्धिः** (II. 3. 49.)—सम्बोधनप्रथमायाः एकवचनं सम्बुद्धिसंज्ञं भवति। **एङ्ह्रस्वात् सम्बुद्धेः** (VI. 1. 69.)—एङन्तात् ह्रस्वान्तात् च परा या सम्बुद्धिः तस्याः हल् लुप्यते।

सम्बोधनाभिव्यक्त्यर्थं केचित् हेशब्दं भोस्-शब्दं वा प्रयुञ्जते। **हे वृक्ष**, किं कम्पसे? द्विवचनबहुवचनयोः पूर्ववत्; **हे वृक्षौ, हे वृक्षाः** ॥

5. तथैव कर्मविवक्षायाम्, **कारके** (I. 4. 23.) इत्यधिकृत्य, **कर्तुरीप्सिततमं कर्म** (I. 4. 49.)—कर्तुः क्रियया यदाप्तुमिष्टतमं तत्कारकं कर्मसंज्ञं भवति। **अनभिहिते** (II. 3. 1.) इत्यधिकृत्य, **कर्मणि द्वितीया** (II. 3. 2.)— द्वितीयादयः शब्दाः सुपां त्रिकेषु पूर्वाचार्यैः स्मर्यन्ते; तैरेवात्र व्यवहारः; तिङ्कृत्तद्धितसमासैरनभिहिते कर्मणि कारके द्वितीयाविभक्तिर्भवति। तत्रापि कर्मैकत्वविवक्षायां द्वितीयैकवचनम् अम्। **वृक्ष+अम्** इति स्थिते, **अकः सवर्णे दीर्घः** (VI. 1. 101.) इत्यस्मात् अकः इति वर्तमाने, **अमि पूर्वः** (VI. 1. 107.)—अकः अमि परतः पूर्वपरयोः पूर्वरूपमेकादेशो भवति। अर्थवद्ग्रहणेन अनर्थकस्य अम्प्रत्याहारस्य ग्रहणं न भवति। **वृक्ष+अम्=वृक्षम्**; यथा वृक्षम्पश्य।

6. द्वित्वविवक्षायां द्विवचनम् औट्। **वृक्ष+वृक्ष+औट्** इति स्थिते, पूर्ववदेकशेषः। टकारलोपः; प्रयोजनम् **सुडनपुंसकस्य** (I. 1. 43.) इति सुट्प्रत्याहारग्रहणार्थः। वृद्धिरेचि इति वृद्धिः; **वृक्षौ** पश्य ॥

7. बहुत्वविवक्षायां बहुवचनम्। **वृक्ष+वृक्ष+वृक्ष+शस्** इति स्थिते, पूर्ववदेकशेषः। शकारस्य, **लशक्वतद्धिते** (I. 3. 8.)—तद्धितवर्जितस्य प्रत्ययस्य आदिभूताः लकारशकारकवर्गाः इत्संज्ञका भवन्ति—इति इत्संज्ञा। तस्य लोपः; प्रयोजनम् **तस्माच्छसो नः पुंसि** (VI.1.103.) इति विशेषणम्। **प्रथमयोः पूर्वसवर्णः** (VI. 1. 102.) इति पूर्वसवर्णदीर्घः। एवं **वृक्षास्** इति जाते, **तस्माच्छसो नः पुंसि**—तस्मात् प्रथमयोः पूर्वसवर्णः इति कृतदीर्घात् उत्तरस्य शसोऽवयवस्य सकार-

स्य नकारादेशो भवति पुंसि विषये । **रषाभ्यां नो णः समानपदे** (VIII. 4. 1.) इत्यधिकृत्य, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (VIII. 4. 2.)—अट् कवर्ग पवर्ग आङ् नुम् इत्येतैः व्यवायेऽपि रेफ-षकाराभ्यामुत्तरस्य नकारस्य णकारादेशो भवति; समानपदस्थाविव नि-मित्तनिमित्तिनौ भवतः । अडादिभिर्व्यस्तैः समस्तैश्च व्यवाये णत्वमिष्यते —इति णत्वे प्राप्ते, **न भाभूपूकमिगमिप्यायिवेपाम्** (VIII. 4. 34.) इत्यनुवर्तमाने, **पदान्तस्य** (VIII. 4. 37.)—पदान्तस्य नकारस्य णत्वं न भवति—इति प्रतिषेधः । तस्मात् **वृक्षान्** ॥

8. तथैव करणविवक्षायाम्, **स्वतन्त्रः कर्ता** (I. 4. 54.)—स्वतन्त्रः प्रधानभूतः; क्रियाप्रसिद्धौ यत् स्वातन्त्र्येण विवक्षितं तत् कारकं कर्तृसंज्ञं भवति; **साधकतमं करणम्** (I. 4. 42 )—क्रिया-प्रसिद्धौ यत् प्रकृष्टोपकारकं विवक्षितं तत्कारकं करणसंज्ञं भवति । **कर्तृ-करणयोस्तृतीया** (II. 3. 18.)—तिङ्कृत्तद्धितसमासैरनाभिहिते कर्तरि करणे च कारके तृतीयाविभक्तिर्भवति । तत्रापि कर्तुः करणस्य चैकत्वविवक्षायाम् तृतीयैकवचनम् टा । **वृक्ष + टा** इति स्थिते, **चुटू** इति टकारस्य इत्संज्ञा; लोपः; प्रयोजनम् **टाङसिङसामिना-त्स्याः** (VII. 1. 12.) इति विशेषणम् । **यस्मात् प्रत्ययविधि-स्तदादि प्रत्ययेऽङ्गम्** (I. 4. 13.)—यस्मात् प्रत्ययो विधीयते धातो-र्वा प्रातिपदिकाद्वा तदादि शब्दरूपं प्रत्यये परतः अङ्गसंज्ञं भवति । **अङ्गस्य** (VI. 4. 1.), **अतो भिस ऐस्** (VII. 1. 9.), इति वर्तमाने, **टाङसिङसामिनात्स्याः** (VII. 1. 12.)—अकारान्तादङ्गात् उत्त-रेषां टा ङसि ङस् इत्येतेषां यथासंख्यम् इन आत् स्य इत्येते आदेशा भवन्ति । गुणः, णत्वञ्च । कर्तरि—**वृक्षेण** स्थीयते; करणे—**वृक्षेण** हन्ति गजः ॥

9. द्व्यर्थविवक्षायां द्विवचनम् भ्याम् । **वृक्ष + भ्याम्** इति स्थिते, **अतो दीर्घो यञि** (VII. 3. 101.) इति वर्तमाने, **सुपि च** (VII. 3. 102.)—यञादौ सुपि परतः अकारान्तस्य अङ्गस्य दीर्घो भवति; **वृक्षाभ्याम्**। बह्वर्थविवक्षायां बहुवचनम् भिस् । **वृक्ष+भिस्** इति स्थिते, **अतो भिस ऐस्** (VII. 1. 9)—अकारान्तादङ्गादुत्तरस्य भिसः ऐसादेशो भवति । स च **अलोऽन्त्यस्य** (I. 1. 52.) इत्यन्त्यस्य भवति ; **आदेः परस्य** (I. 1. 54.)—परस्य विधीयमानं कार्यं परस्य आदेरेव भवति; इत्यन्त्ये आदौ च प्राप्ते, उभयं बाधित्वा **अनेकाल्शित् सर्वस्य** (I. 1. 55.)—अनेकाल् य आदेशः शित् च स सर्वस्य भवतीति सर्वादेशः । **बहुवचने झल्येत्** (VII. 3. 103.)—झलादौ बहुवचने सुपि परतः अकारान्तस्य अङ्गस्य एकारादेशो भवति; इति एत्वम् । अत्र ए ऐस् इत्युभयोः प्राप्तौ, विप्रतिषेधे परं कार्यम् इति परत्वात् एत्वप्राधान्ये, **सावकाशनिरवकाशयोः निरवकाशविधिर्बलीयान्** इति न्यायेन सावकाशमेत्वं बाधित्वा निरवकाशः ऐस् आदेशो भवति । वृद्धिरेचि इति वृद्धिः; रुत्वविसर्गौ; **वृक्षैः ।**

एत्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति ।
कृतेऽप्येत्वे भौतपौर्व्यादैस्तु नित्यस्तथा सति ॥

10. तथैव संप्रदानविवक्षायां, **कर्मणा यमभिप्रैति स संप्रदानम्** (I. 4. 32.)—कर्मणा करणभूतेन कर्ता यमभिप्रैति तत्कारकं संप्रदानसंज्ञं भवति । **चतुर्थी संप्रदाने** (II. 3. 13.)—तिङ्कृत्तद्धितसमासैरनभिहिते संप्रदानकारके चतुर्थीविभक्तिर्भवति । तत्रापि संप्रदानैकत्वविवक्षायां चतुर्थ्येकवचनम् ङे । **वृक्ष + ङे** इति स्थिते, ङकारस्य

इत्संज्ञया लोपः; प्रयोजनं **ङेर्यः** इति विशेषणम्। **ङेर्यः** (VII. 1. 13.)—अकारान्तादुत्तरस्य ङे इत्येतस्य य इत्ययमादेशो भवति। **वृक्ष+य** इति जाते **स्थानिवदादेशोऽनल्विधौ** (I. 1. 56.)—स्थानिवदादेशो भवति, स्थान्यलाश्रयाणि वर्णगतानि कार्याणि वर्जयित्वा; धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः समुदायगता एव अत्र प्रयोजनम्। **सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य** (परि. 85.) इत्यस्याः परिभाषायाः **कष्टाय क्रमणे** (III. 1. 14.) इति निर्देशेन अनित्यत्वात्, सुपि च (VII. 3. 101.) इति दीर्घः। तस्मात् **वृक्षाय**; यथा वृक्षाय जलं ददाति; जलेन वृक्षम् अभिप्रैति इत्यर्थः।

तस्याभावे निमित्तस्य नित्यभावो न विद्यते।
लिङ्गमस्य प्रयोगस्य कष्टायेति प्रकीर्तितम्॥

द्विवचनं पूर्ववत्; **वृक्षाभ्याम्**। बह्वर्थविवक्षायां बहुवचनम् भ्यस्। **वृक्ष + भ्यस्** इति स्थिते, **बहुवचने झल्येत्** (VII. 3. 103.)—झलादौ बहुवचने सुपि परतः अकारान्तस्य अङ्गस्य एकारादेशो भवति। इति एत्वं, **सुपि च** इति दीर्घत्वं च प्राप्नोति; इत्युभयप्राप्तौ परत्वात् एत्वमेव भवति। अथ रुत्वविसर्गौ; **वृक्षेभ्यः**। अपि च **तादर्थ्ये चतुर्थी वक्तव्या** (वा); तादर्थ्यं तदर्थभावः; यथा—यूपाय दारु, कुण्डलाय हिरण्यम्॥

11. तथैवापादानविवक्षायां, **ध्रुवमपायेऽपादानम्** (I. 4. 24.)—अपायोऽपगमः, अपाये साध्ये यत् ध्रुवं यत् अवधिभूतं विवक्षितं तत्कारकमपादानसंज्ञं भवति। **अपादाने पञ्चमी** (II. 3. 28.)—तिङ्कृत्तद्धितसमासैरनभिहितेऽपादानकारके पञ्चमीविभक्तिर्भवति। तत्राप्यपादानिकत्वविवक्षायां पञ्चम्येकवचनम् ङसि। **वृक्ष + ङसि** इति

स्थिते, इकारङकारयोरित्संज्ञा ; लोपः ; प्रयोजनम् **टाङसिङसा-मिनात्स्याः** (VII. 1. 12.) इति विशेषणम् । तेनैव आत् भवति ; सवर्णदीर्घः ; **वृक्षात्** पर्णं पतति । द्विवचन-बहुवचनयोः पूर्ववत् ; **वृक्षाभ्याम्, वृक्षेभ्यः** ॥

12. शेषविवक्षायां, **षष्ठी शेषे** (II. 3. 50.)। कश्च शेषः ? उपयुक्तादन्यो यः स शेषः ; कर्मादिभ्योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्व-स्वामिभावादिसम्बन्धः शेषः ; तत्र शेषे षष्ठीविभक्तिर्भवति । तत्रापि विशेषणतया विवक्षितादेव सम्बन्धिनः षष्ठी ; तथाचोक्तम्—

भेद्यभेदकयोश्चापि सम्बन्धोऽन्योऽन्यमिष्यते ।
द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥

शेषैकत्वविवक्षायां षष्ठ्येकवचनम् ङस् । **वृक्ष + ङस्** इति स्थिते, ङकारस्य इत्संज्ञा ; लोपः ; प्रयोजनं तु **टाङसिङसामिनात्-स्याः** इति विशेषणम् । तेनैव स्य इत्यादेशः ; **वृक्षस्य** फलम् । द्विवचनम् ओस् । **वृक्ष + ओस्** इति स्थिते, **बहुवचने झल्येत्** इत्यनुवर्तमाने, **ओसि च** (VII. 3. 104.)—ओसि च परतः अकारान्तस्य अङ्गस्य एकारादेशो भवति । एवं **वृक्षे + ओस्** इति जाते, अयादेशः ; रुत्व-विसर्गौ ; **वृक्षयोः** । बह्वर्थविवक्षायां बहुवचनम् आम् । **वृक्ष + आम्** इति स्थिते, **आमि सर्वनाम्नः सुट्** (VII. 1. 52.) इत्यनुवर्तमाने, **ह्रस्वनद्यापो नुट्** (VII. 1. 54.)—ह्रस्वान्तात् नद्यन्तात् आबन्तात् अङ्गाच्चोत्तरस्य आमः नुडागमो भवति । **नामि** (VI. 4. 3.)—नामि परतः अजन्तस्य अङ्गस्य दीर्घो भवति । अथ णत्वम् ; **वृक्षाणाम्** ।

नामि दीर्घ आमि चेत् स्यात् कृते दीर्घे न नुड् भवेत् ।
वचनाद्यत्र तन्नास्ति नोपधायाश्च चर्मणाम् ॥

13. तथैव अधिकरणविवक्षायाम्, **आधारोऽधिकरणम्** (I. 4. 45.)—आध्रियन्ते अस्मिन् क्रियाः इत्याधारः; कर्तृकर्मणोः क्रियाश्रयभूतयोः धारणक्रियां प्रति य आधारः तत् कारकम् अधिकरणसंज्ञं भवति । **सप्तम्यधिकरणे च** (II. 3. 36.)—तिङ्कृत्तद्धितसमासैरनभिहितेऽधिकरणकारके सप्तमीविभक्तिर्भवति । तत्राप्यधिकरणैकत्वविवक्षायां सप्तम्येकवचनम् ङि । **वृक्ष + ङि** इति स्थिते, ङकारलोपः; प्रयोजनं **ङेराम्नद्याम्नीभ्यः** (VII. 3. 116.) इति विशेषणम् । आद्गुणः; **वृक्षे** तिष्ठति । द्विवचनं षष्ठीवत् । बहुवचनम् सुप् । **वृक्ष + सुप्** इति स्थिते, पकारलोपः; प्रयोजनं सुबिति प्रत्याहारग्रहणार्थः । बहुवचने झल्येत् (VII. 3. 103.) इति एत्वम्; आदेश प्रत्यययोः (VIII. 3. 59.) इति षत्वम्; **वृक्षेषु** । एवमन्येषामप्यकारान्तानां पुंलिङ्गानां घटपटादिशब्दानां सप्तविभक्तिषु रूपं नेयम् ।

वृक्षस्तिष्ठति कानने कुसुमिता वृक्षं लता संश्रिता
वृक्षेणाभिहतो गजो निपातितो वृक्षाय देयं जलम् ।
वृक्षादानय मञ्जरीमभिनवां वृक्षस्य शाखोन्नता
वृक्षे नीडमिदं कृतं शकुनिना हे वृक्ष किं कम्पसे ॥

14. निर्जरशब्दस्य तु विशेष उच्यते । **निर्जर + औ** इति स्थिते, **जराया जरसन्यतरस्याम्** (VII. 2. 101.)—जराशब्दस्य जरसादेशो भवति वा अजादौ विभक्तौ परतः । **पदाङ्गाधिकारे तस्य च तदन्तस्य च** (परि. 29.) इति तदन्तस्य निर्जरशब्दस्य अनेकाल्त्वात् सर्वादेशे प्राप्ते; **निर्दिश्यमानस्यादेशा भवन्ति** (परि. 12.),

**एकदेशविकृतमनन्यवत्** (परि. 37.), इति अनन्यत्वात् अत्र जर-शब्दस्य जरस् इत्यादेशो भवति ; **निर्जरसौ, निर्जरौ** । एवमेव **निर्जरसः, निर्जराः**, इत्यादि । पक्षे, हलादि विभक्तौ परतश्च, वृक्षशब्दवत् ॥

15. पाददन्तादिशब्दानामपि केषां चित् विशेषोऽस्ति ; **पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु** (VI. 1. 63.)—पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष, दोष, यकृत्, शकृत्, उदक, आसन, इत्येतेषां क्रमात् पद्, दत्, इत्यादयः आदेशा वा भवन्ति शसादिविभक्तिषु परतः ; **पादान् पदः ; पादेन पदा ; पादाभ्याम् पद्भ्याम्** ; इत्येव । एवमेव दन्तादीनां द्विविधं रूपं बोध्यम् ॥

16. द्वयोरह्नोः भवः **द्व्यह्नः** ; अस्य सप्तम्येकवचने परं विशेषः । **द्व्यह्न + इ** इति स्थिते, **सङ्ख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ** (VI. 3. 110.)—सङ्ख्यादिपूर्वस्य अह्नशब्दस्य अहन् इत्यादेशो वा भवति सप्तम्येकवचने परतः ; **द्व्यह्नि द्व्यहनि** ; पक्षे—**द्व्यह्ने** । एवमन्यत्रापि द्रष्टव्यम् ॥

17. सर्वनामशब्दानामकारान्तानां पुंलिङ्गानां च प्रक्रियायां विशेषोऽस्ति । के पुनस्सर्वनामशब्दाः ? सर्व, विश्व, उभ, उभय, डतर, डतम, इतर, अन्य, अन्यतर, त्वत्, त्व, सम, सिम, नेम, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर, त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवत्, किम्, इत्येते सर्वनामशब्दाः । तत्र डतरडतमौ प्रत्ययौ ; ताभ्यां तदन्ता एव कतरकतमप्रभृतयो गृह्यन्ते । के पुनः कतरकतमप्रभृतयः ? कतर, यतर, ततर, एकतर ; कतम, यतम, ततम, एकतम ; इत्येते । गणे शिष्टानि प्रातिपदिकानि ।

एते सर्वनामशब्दाः अभिधेयवल्लिङ्गत्वात् न स्वतो नियतलिङ्गाः,इति त्रिलिङ्गा भवन्ति, अलिङ्गे युष्मदस्मदी वर्जयित्वा । उभशब्दः सदा द्विवचनान्तः । तस्य इह पाठः **अव्ययसर्वनाम्नामकच् प्राक् टेः** (V. 3. 71.) इत्यकच्प्रत्ययविधानाय । उभयशब्दः सदैकवचनान्तः बहुवचनान्तश्च । सर्वपर्यायस्यैव समशब्दस्य सर्वनामसंज्ञा, न तुल्यपर्यायस्य ; समानामिति सूत्रनिर्देशात् ॥

18. तत्र प्रथमं सर्वशब्दो व्याख्यायते । पुंलिङ्गविशिष्टार्थाभिधायी इति पुंलिङ्गे रूपं नेयम् । प्रथमैकवचनद्विवचनयोः वृक्षशब्दवत् ; **सर्वः**, **सर्वौ** । बहुवचने तु विशेषः । **सर्व + जस्** इति स्थिते, **सर्वादीनि सर्वनामानि** (I. 1. 27.)—सर्वः आदिः येषां तानि सर्वादीनि ; तद्गुणसंविज्ञानो बहुव्रीहिः ; सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि भवन्ति । **सर्वनाम्नः स्मै** (VII. 1. 14.) इति वर्तमाने, **जसश्शी** (VII. 1. 17.)—अकारान्तात् सर्वनाम्नोऽङ्गात् उत्तरस्य जसः शी इत्ययमादेशो भवति । शकारस्सर्वादेशार्थः अननेकाल्त्वात् । गुणः ; **सर्वे** । सम्बोधनेऽपि तद्वत् । चतुर्थ्येकवचनम् ङे । **ङेर्यः** (VII. 1. 13.) इति वर्तमाने, **सर्वनाम्नः स्मै** (VII. 1. 14.)—अकारान्तात् सर्वनाम्नोऽङ्गादुत्तरस्य ङे इत्येतस्य स्मै इत्ययमादेशो भवति ; **सर्वस्मै** । पञ्चम्येकवचने सप्तम्येकवचने च, **ङसिङ्योः स्मात्स्मिनौ** (VII. 1. 15.)—अकारान्तात् सर्वनाम्नोऽङ्गादुत्तरयोः ङसि ङि इत्येतयोः स्मात् स्मिन् इत्येतावादेशौ भवतः ; **सर्वस्मात्**, **सर्वस्मिन्** । षष्ठीबहुवचने, **आज्जसेरसुक्** (VII. 1. 50.) इति वर्तमाने, **आमि सर्वनाम्नः सुट्** (VII. 1. 52.)—

अवर्णान्तात् सर्वनाम्नो विहितस्य अङ्गादुत्तरस्य आमः सुडागमो भवति । नुड्वदनुबन्धलोपः; एत्वं षत्वं च ; **सर्वेषाम्** । शेषं वृक्षशब्दवत् ॥

सर्वः, सर्वौ, सर्वे । हे सर्व, हे सर्वौ, हे सर्वे । सर्वम्, सर्वौ, सर्वान् । सर्वेण, सर्वाभ्याम्, सर्वैः । सर्वस्मै, सर्वाभ्याम्, सर्वेभ्यः । सर्वस्मात्, सर्वाभ्याम् ; सर्वेभ्यः । सर्वस्य, सर्वयोः, सर्वेषाम् । सर्वस्मिन्, सर्वयोः, सर्वेषु ॥

एवं विश्वादीनाम् एकशब्दपर्यन्तानां रूपं नेयम् ॥

19. पूर्वादीनां तु नवानां प्रक्रियाविशेषोऽस्ति । **विभाषा जसि** (I. 1. 32.) इत्यनुवर्तमाने, **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्** (I. 1. 34.)—पूर्वादीनि शब्दरूपाणि जसि विभाषया सर्वनामसंज्ञानि भवन्ति व्यवस्थायामसंज्ञायां च गम्यमानायाम् । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । अस्य अर्थः— स्वशब्देन पूर्वादिशब्दा उच्यन्ते ; तेषां अभिधेयः अर्थः स्वाभिधेयः ; तेन अपेक्ष्यते इति स्वाभिधेयापेक्षः ; अवधिः मर्यादा ; तस्य नियमः अवधिनियमः ; स्वाभिधेयापेक्षश्चासौ अवधिनियमश्च स्वाभिधेयापेक्षावधिनियमः ; स एव व्यवस्था । व्यवस्थायामिति किम् ? दक्षिणा गायकाः ; प्रवीणा इत्यर्थः । असंज्ञायामिति किम् ? उत्तराः कुरवः ; तेषामियं संज्ञा व्यवस्थायामेव । **पूर्वे पूर्वाः, दक्षिणे दक्षिणाः, उत्तरे उत्तराः** ॥

20. **स्वमज्ञातिधनाख्यायाम्** (I. 1. 35.)—स्वमित्येतत् शब्दरूपं जसि विभाषया सर्वनामसंज्ञं भवति ज्ञातिधनयोः संज्ञारूपेण न वर्तते चेत् । आत्मात्मीयज्ञातिधनवाची स्वशब्दः । **स्वे** पुत्राः, **स्वाः** पुत्राः ; आत्मीयाः पुत्राः आत्मान एव पुत्राः इति वा अर्थः । ज्ञातिप्रतिषेधः किमर्थः ?

धूमायन्त इवाश्लिष्टाः प्रज्वलन्तीव संगताः ।
उल्मुकानीव मेऽमी त्वा ज्ञातयो भरतर्षभ ॥

धनप्रतिषेधः किमर्थः? प्रभूताः स्वा न दीयन्ते; प्रभूतानि धनानि इत्यर्थः ॥

21. **अन्तरं बहिर्योगोपसंव्यानयोः** (I. 1. 36.)—अन्तरमित्येतत् शब्दरूपं जसि विभाषया सर्वनामसंज्ञं भवति बहिर्योगे उपसंव्याने च गम्यमाने । अनावृतदेशो बहिश्शब्देन उच्यते; तेन योगः बहिर्योगः। उपसंव्यानं परिधानीयमित्युच्यते न प्रावरणीयम् । **अन्तरे अन्तरा** वा गृहाः; अत्र अन्तरशब्दो बाह्यार्थः, नगरबाह्याः चण्डालगृहा उच्यन्ते। **अन्तरे अन्तरा** वा शाटकाः, परिधानीया इत्यर्थः। बहिर्योगोपसंव्यानयोरिति किम्? अनयोर्ग्रामयोः अन्तरे तापसाः प्रतिवसन्ति; अत्र मध्यवचनोऽन्तरशब्दः। गणसूत्रस्य एतत् प्रत्युदाहरणम् । **अपुरीति च वक्तव्यम्** (वा.); अन्तरायां पुरि भवति ।

सर्वादिः सर्वनामाख्यो न चेद्गौणोऽथवाभिधा ।
पूर्वादिश्च व्यवस्थायां समोऽतुल्येऽन्तरोऽपुरि ।
परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि ॥

22. **ङसिङ्योः स्मात्स्मिनौ** (VII. 1. 15.) इति वर्तमाने, **पूर्वादिभ्यो नवभ्यो वा** (VII. 1. 16.)—पूर्वादिभ्यः शब्देभ्यः नवभ्य उत्तरयोः ङसि ङि इत्येतयोः वा स्मात् स्मिन् इत्येतावादेशौ भवतः। शेषं सर्वशब्दवत् ॥

पूर्वः, पूर्वौ, पूर्वे पूर्वाः। हे पूर्व, हे पूर्वौ, हे पूर्वे हेपूर्वाः। पूर्वम्, पूर्वौ, पूर्वान्। पूर्वेण, पूर्वाभ्याम्, पूर्वैः। पूर्वस्मै, पूर्वाभ्याम्, पूर्वेभ्यः। पूर्वस्मात्

पूर्वात्, पूर्वाभ्याम्, पूर्वेभ्यः । पूर्वस्य, पूर्वयोः, पूर्वेषाम् । पूर्वस्मिन् पूर्वे, पूर्वयोः, पूर्वेषु ॥

एवं परादीनाम् अन्तरशब्दपर्यन्तानां रूपं नेयम् ॥

23. प्रथमादीनां तु सप्तानां प्रक्रियाविशेषोऽस्ति । **विभाषा जसि** (I. 1. 32.) इत्यनुवर्तमाने, **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च** (I. 1. 33.)—प्रथमादयः शब्दाः जसि विभाषा सर्वनामसंज्ञा भवन्ति । अत्र तय इति प्रत्ययः, तेन तदन्ता द्वितयादयो गृह्यन्ते । अवशिष्टानि प्रातिपदिकानि । नेमशब्दः सर्वादिषु पठ्यते; तस्य गणसूत्रात् सर्वनामत्वे प्राप्ते, अन्येषामप्राप्ते, अनेन सूत्रेण विभाषया सर्वनामत्वं विधीयतेजसि ॥

प्रथमः, प्रथमौ, प्रथमे प्रथमाः । हे प्रथम, हे प्रथमौ, हे प्रथमे हे प्रथमाः । शेषं वृक्षशब्दवत् ॥

एवं चरमादीनां कतिपयशब्दपर्यन्तानां रूपं नेयम् । नेमशब्दस्य तु जसि विकल्पः; अन्यत्र सर्वशब्दवत् ॥

विभाषाप्रकरणे द्वितीयतृतीयशब्दयोः ङित्सु प्रत्ययेषु पक्षतः वा सर्वनामसंज्ञा वक्तव्या । **द्वितीयस्मै द्वितीयाय; द्वितीयस्मात् द्वितीयात्; द्वितीयस्मिन् द्वितीये** । शेषं वृक्षशब्दवत् । तद्वत् तृतीयशब्दः ॥

इत्यदन्तपुंलिङ्गप्रातिपदिकानि ॥

## अथ आकारान्तपुंलिङ्गानि ॥

1. आकारान्तः पुंलिङ्गस्सोमपाशब्दः । स च सोमशब्दोपपदात् पिबतिधातोः विजन्तः। कथम्? पा पाने; पा इत्ययं धातुः पानार्थे वर्तते। **पा** इति स्थिते, **भूवादयो धातवः** (I. 3. 1.)—भू इत्येवमादयः शब्दाः गणपरिपठिताः क्रियावाचिनो धातुसंज्ञा भवन्ति। ततो धात्वधिकारविहितानेकप्रत्ययप्रसंगे, विवक्षावशात्, सोमं पिबतीति विग्रहे, **कर्मण्यण्** (III. 2. 1.) इत्यणि प्राप्ते, तदपवादतया **आतोऽनुपसर्गे कः** (III. 2. 3.) इति के प्राप्ते, तदपवादः—**विजुपे छन्दसि** (III. 2. 73.) इति वर्तमाने, **आतो मनिन्क्वनिब्वनिपश्च** (III. 2. 74.)—आकारान्ताद्धातोः सुबन्ते उपपदे मनिन् क्वनिप् वनिप् इत्येते प्रत्यया भवन्ति; चकाराद्विच्प्रत्ययश्च। इति विच्प्रत्ययः। **धातोः** (III. 1. 91.) इत्याधिकृत्य, **कृदतिङ्** (III. 1. 93.)—सन्निहिते धात्वधिकारे यस्तिङ्वर्जितप्रत्ययः स कृत्संज्ञो भवति। **कर्तरि कृत्** (III. 4. 67.)—यः कृत्संज्ञकः प्रत्ययः स कर्तरि भवति। एवं च विचः सर्वलोपे, **पा** इत्यस्य कृदन्ततया तेन सोमशब्दस्य समासे, **सोमं + पा** इति स्थिते, **प्रत्ययलोपे प्रत्ययलक्षणम्** (I. 1. 62.)—प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं भवति; इति प्रत्ययलक्षणेन कृदन्ततायां प्राप्तायां, **कृत्तद्धितसमासाश्च** (I. 2. 46.)—कृदन्ताः तद्धितान्ताः समासाश्च प्रातिपदिकसंज्ञा भवन्ति। **सुपो धातुप्रातिपदिकयोः** (II. 4. 71.)—धातुप्रातिपदिकयोरवयवस्य सुपः लुक् भवति; इति अमो लुक्। एवं निष्पन्नात् सोमपाशब्दात् स्वाद्युत्पत्तिः; **सोमपाः** इत्यादि। सुटि न विशेषः।

शसाद्यजादौ तु, **शि सर्वनामस्थानम्** (I. 1. 42.) इति वर्तमाने, **सुडनपुंसकस्य** (I. 1. 43.)—सुट् प्रत्याहारः; स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि भवन्ति, नपुंसकं वर्जयित्वा । **स्वादिष्वसर्वनामस्थाने** (I. 4. 17.) इति वर्तमाने, **यचि भम्** (I. 4. 18.)—यकारादावजादौ च स्वादावसर्वनामस्थाने परतः पूर्वं भसंज्ञं भवति । इति भसंज्ञायाम्—**अङ्गस्य** (VI. 4. 1.), **भस्य** (VI. 4. 129.), **अल्लोपोऽनः** (VI. 4. 134.) इति वर्तमाने, **आतो धातोः** (VI. 4. 140.)—भस्य अङ्गस्य धातोराकारस्य लोपो भवति । एवं शसादौ परतः—सोमपः; सोमपा, सोमपाभ्याम्, सोमपाभिः; सोमपे, सोमपाभ्याम्, सोमपाभ्यः; सोमपः, सोमपाभ्याम्, सोमपाभ्यः; सोमपः, सोमपोः, सोमपाम्; सोमपि, सोमपोः, सोमपासु; इति रूपाणि भवन्ति ॥

एवं कीलालपा - शङ्खध्मा - गन्धघ्रा-प्रभृतयः ॥

2. हाहाशब्दस्य तु आकारस्य शसादौ न लोपः, धातुत्वाभावात् । हाहाम्, हाहौ, हाहान्; इत्यादि ॥

इत्याकारान्तपुंलिङ्गप्रातिपदिकानि ॥

---

अथ इकारान्तानि ॥

---

1. अथ इकारान्तः पुंलिङ्गः कविशब्दः । **कवि** इति स्थिते स्वाद्युत्पत्तिः; रुत्वविसर्गौ; **कविः** । द्विवचने, प्रथमयोः पूर्वसवर्णः (VI. 1. 102.), इति पूर्वसवर्णदीर्घः; **कवी** । बहुवचने, **ह्रस्वस्य गुणः** (VII. 3. 108.) इति वर्तमाने, **जसि च** (VII. 3. 109.)—

जसि परतो ह्रस्वान्तस्याङ्गस्य गुणो भवति। **इको गुणवृद्धी** (I. 1. 3.) —अनिर्दिष्टस्थानौ स्वसंज्ञाशिष्यमाणौ वृद्धिगुणौ इक एव स्थाने भवतः; अयादेशः; रुत्वविसर्गौ; **कवयः**। **सम्बुद्धौ च** (VII. 3. 106.) इति वर्तमाने, **ह्रस्वस्य गुणः** (VII. 3. 108.)—सम्बुद्धौ च परतः ह्रस्वान्तस्य अङ्गस्य गुणो भवति। एङ्ह्रस्वात् सम्बुद्धेः (VI. 1. 69.) इति सुलोपः; **हे कवे**। कविम्, कवी, कवीन्। तृतीयैकवचने तु, **शेषो घ्यसखि** (I. 4. 7.)—सखिशब्दादन्यदिकारोकारान्तं शब्दरूपं घिसंज्ञं भवति नदीसंज्ञं वर्जयित्वा। **घेर्ङिति** (VII. 3. 111.) इत्यनुवर्तमाने, **आङो नास्त्रियाम्** (VII. 3. 120.)—घेरुत्तरस्य आङो ना इत्ययमादेशो भवति अस्त्रियां विषये; आङिति तृतीयैकवचनस्य पूर्वाचार्याणां संज्ञा; **कविना**। कविभ्याम्, कविभिः। ङिति सुपि, **घेर्ङिति** (VII. 3. 111.)—घेरङ्गस्य गुणो भवति ङिति सुपि परतः। चतुर्थ्येकवचने गुणे कृते अयादेशः; **कवये**। कविभ्याम्, कविभ्यः। **घेर्ङिति** इति गुणे कृते, **एङः पदान्तादति** (VI. 1. 109.) इति वर्तमाने, **ङसिङसोश्च** (VI. 1. 110.)—एङः ङसिङसोरति परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति; **कवेः**। कविभ्याम्, कविभ्यः। कवेः, कव्योः, कवीनाम्। **औत्** (VII. 3. 118.) इत्यनुवर्तमाने, **अच्च घेः** (VII. 3. 119.)—घेरुत्तरस्य ङेरौकारादेशो भवति घेश्च अकारः; वृद्धिः; **कवौ**। कव्योः, कविषु॥

एवम् अग्नि-गिरि-हरि-रवि-मणि-प्रभृतयः॥

2. सखिशब्दस्य तु भेदः। **सखि + सु** इति स्थिते, **सख्युरसम्बुद्धौ** (VII. 1. 92.) इत्यनुवर्तमाने, **अनङ् सौ** (VII. 1. 93.) —सखिशब्दस्य अनङादेशो भवति सम्बुद्धिवर्जिते सौ परतः। ङिच्च (I.

1. 53.) इति स आदेशः अनेकालप्यन्त्यस्य भवति । अनङ् इत्यत्र नकारे अकार उच्चारणार्थः; ङकारः अन्त्यादेशार्थः । **सखन् + सु** इति जाते, **अलोऽन्त्यात् पूर्व उपधा** (I. 1. 65.)—धात्वादौ वर्णसमुदाये अन्त्यादलः पूर्वो यो वर्णः स उपधासंज्ञो भवति । **नोपधायाः** (VI. 4. 7.) इति वर्तमाने, **सर्वनामस्थाने चासम्बुद्धौ** (VI. 4. 8.)—नकारान्तस्य अङ्गस्य उपधायाः दीर्घो भवति सम्बुद्धिवर्जिते सर्वनामस्थाने परतः । **सखान् + स्** इति जाते, **अपृक्त एकाल्प्रत्ययः** (I. 2. 41.)—एकाल्प्रत्ययो यः सः अपृक्तसंज्ञो भवति । **लोपो व्योर्वलि** (VI. 1. 66.) इत्यनुवर्तमाने, **हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्** (VI. 1. 68.)—हलन्तात् परं दीर्घौ यौ ङ्यापौ तदन्ताच्चोत्तरं सु ति सि इत्येतदपृक्तं हल् लुप्यते । इति अपृक्तस्य सोः लोपे, **नलोपः प्रातिपदिकान्तस्य** (VIII. 2. 7.)—प्रातिपदिकरूपं यत्पदं तदन्तस्य नकारस्य लोपो भवति; इति **सखा** । हल्ङ्याब्भ्य इति किम्? ग्रामणीः । दीर्घात् किम्? निष्कौशाम्बिः, अतिमालः । अपृक्तमिति किम्? बिभर्ति । हलिति किम्? बिभेद । प्रथमहलः प्रयोजनं सखा इति रूपोत्पत्तौ नकारलोपः । यथा—

संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति ।
रात्तु तेनैव लोपः स्यात् हलस्तस्माद्विधीयते ॥

सम्बुद्धौ कविशब्दवत्; हे सखे । अन्यत्र सर्वनामस्थाने, **गोतो णित्** (VII. 1. 90.) इति वर्तमाने, **सख्युरसम्बुद्धौ** (VII. 1. 92.)—सखिशब्दात् परं सम्बुद्धिवर्जितं सर्वनामस्थानं णिद्वद्भवति; णिति

यत् कार्यं तदत्र भवति । **अङ्गस्य** (VI. 4. 1.), **मृजेर्वृद्धिः** (VII. 2. 114.) इत्यनुवर्तमाने, **अचो ञ्णिति** (VII. 2. 115.)—अजन्तस्याङ्गस्य वृद्धिर्भवति ञिति णिति च प्रत्यये परतः । आयादेशः; **सखायौ, सखायः; हे सखायौ, हे सखायः; सखायं, सखायौ ।** शसि तु असर्वनामस्थानत्वेन णिद्वद्भावाभावात् कविशब्दवत्; सखीन् । तृतीयाद्यजादौ असखि इति प्रतिषेधात् घिसंज्ञा न भवति । यणादेशः; **सख्या;** सखिभ्याम्, सखिभिः । **सख्ये,** सखिभ्याम्, सखिभ्यः। ङसिङसोर्यणादेशे कृते, **ऋत उत्** (VI. 1. 111.), **ङसिङसोश्च** (VI. 1. 110.) इति च वर्तमाने, **ख्यत्यात् परस्य** (VI. 1. 112.)—ख्यत्य इति खिशब्दखीशब्दयोः तिशब्दतीशब्दयोः कृतयणादेशयोर्ग्रहणाम्; ताभ्यामुत्तरस्य ङसिङसोः अकारस्य उकारादेशो भवति। **सख्युः,** सखिभ्याम्, सखिभ्यः । **सख्युः,** सख्योः, सखीनाम् । ङौ परतः, **इदुद्भ्याम्** (VII. 3. 117.) इति वर्तमाने, **औत्** (VII. 3. 118.)—इकारोकाराभ्याम् उत्तरस्य ङेः औकारादेशो भवति। यणादेशः; **सख्यौ;** सख्योः सखिषु ॥

3. पतिशब्दस्य भेदः । पा रक्षणे; **पातेर्डतिः** (उणा. 506.)—पातेर्धातोर्डतिप्रत्ययो भवति संज्ञायां विषये; अत्र डकारलोपः; प्रयोजनं डितीति विशेषणम् । डिति अभस्याप्यनुबन्धकरणसामर्थ्यात्, **टेः** (VI. 4. 143.) इति पाधातौ वर्तमानस्य आकारस्य लोपः । **पति** इति स्थिते कृदन्तत्वात् स्वाद्युत्पत्तिः । प्रथमाद्वितीययोः कविशब्दवत् । अन्यत्र घिसंज्ञायां प्राप्तायां, **पतिः समास एव** (I. 4. 8.)—पतिशब्दः समासे एव घिसंज्ञो भवति । इति नियमात् समासादन्यत्र न घिसंज्ञा । तस्मात् सखिशब्दवत् प्रक्रिया; समासे तु घिसंज्ञायां कविशब्दवत् ॥

पतिः, पती, पतयः । हे पते, हे पती, हे पतयः । पतिम्, पती, पतीन् । पत्या, पतिभ्याम्, पतिभिः । पत्ये, पतिभ्याम्, पतिभ्यः । पत्युः, पतिभ्याम्, पतिभ्यः । पत्युः, पत्योः, पतीनाम् । पत्यौ, पत्योः, पतिषु ॥

समासे—भूपतिना, भूपतये, भूपतेः, भूपतौ ॥

4. द्विशब्दस्य भेदः । तस्य द्वित्वसंख्यावाचित्वात् सर्वत्र द्विवचनमेव भवति । **त्यदादीनामः** (VII. 2. 102.)—त्यदादीनाम् अकारः विभक्तौ अन्तादेशो भवति । इति अत्वे कृते वृक्षशब्दवत् । द्वौ, द्वौ, द्वाभ्याम्, द्वाभ्याम्, द्वाभ्याम्, द्वयोः, द्वयोः ॥

त्रिशब्दस्य भेदः । सोऽपि बह्वर्थवाचित्वात् सर्वत्र बहुवचनान्तो भवति । षष्ठीबहुवचनादन्यत्र कविशब्दवत् प्रक्रिया । त्रयः, त्रीन्, त्रिभिः, त्रिभ्यः, त्रिभ्यः । षष्ठीबहुवचने तु, आमि इत्यनुवर्तमाने, **त्रेस्त्रयः** (VII. 1. 53.)—त्रिशब्दस्य आमि परतः त्रय इत्ययमादेशो भवति । ह्रस्वनद्यापो नुट् (VII. 1. 54.) इति नुट्; नामि (VI. 4. 3.) इति दीर्घः; णत्वम्; **त्रयाणाम्** । सप्तमीबहुवचने त्रिषु ॥

5 कतिशब्दस्य भेदः । किं परिमाणमेषामिति विग्रहे, **किमः संख्यापरिमाणे डति च** (V. 2. 41.)—संख्यापरिच्छेदे वर्तमानात् किमशब्दात् प्रथमासमर्थात् तस्येति षष्ठ्यर्थे डति प्रत्ययो भवति । **किम्+डति** इति स्थिते, डकारः टिलोपार्थः । **अङ्गस्य** (VI. 4. 1.), **भस्य** (VI. 4. 129.), **अल्लोपोऽनः** (VI. 4. 134.), **ति विंशतेर्डिति** (VI. 4. 142.), इति वर्तमाने, **टेः** (VI. 4. 143.) इति भस्य अङ्गस्य टेः लोपो भवति डिति प्रत्यये परतः । **तद्धिताः** (IV. 1. 76.)—आपञ्चमाध्यायपरिसमाप्तेरधिकारोऽयम्; यान् इत ऊर्ध्वमनुक्रमिष्यामः ते सर्वे तद्धितसंज्ञा वेदितव्याः । इति तद्धितसंज्ञायां प्रातिपदिकत्वात्

स्याद्युत्पत्तिः । बह्वर्थवाचित्वात् कतिशब्दस्य सर्वत्र बहुवचनम् । **बहु-गणवतुडति संख्या** (I. 1. 23.) इति संख्यात्वम् । **ष्णान्ता षट्** (I. 1. 24.) इति वर्तमाने, **डति च** (I. 1. 25.)—डत्यन्ता या संख्या सा षट्संज्ञा भवति । **जश्शसोः शिः** (VII. 1. 20.) इत्यनुवर्तमाने, **षड्भ्यो लुक्** (VII. 1. 22.)—षट्संज्ञकेभ्य उत्तरयोः जस्-शसोः लुक् भवति । अत्र एतयोः प्रत्यययोः लोपे, प्रत्ययलोपे प्रत्ययलक्षणम् (I. 1. 62.) इति जस्बुध्या, जसि च (VII. 3.109.) इति गुणेन च, कते इत्यनिष्टरूपे प्राप्ते, **न लुमताङ्गस्य** (I. 1. 63.)—लुक् श्लु लुप् इति लुमता शब्देन विहितलोपविषये लुप्तप्रत्ययनिमित्तक-मङ्गकार्यं न स्यात्; **कति, कति** । अन्यत्र कविशब्दवत्; कतिभिः, कतिभ्यः, कतिभ्यः । षष्ठीबहुवचने तु, **षट्चतुर्भ्यश्च** (VII. 1. 55.)—षट्संज्ञकेभ्यः चतुर्शब्दाच्चोत्तरस्य आमो नुडागमो भवति । नामि इति दीर्घः; **कतीनाम्** । सप्तमीबहुवचने कतिषु ॥

त्रिष्वपिलिङ्गेषु रूपं समानम् ॥

6. औडुलोमिशब्दस्यापि बहुवचने भेदः । **लोम्नोऽपत्येषु बहुष्व-कारो वक्तव्यः**(वा. IV. 1. 85.); उडुलोमन्शब्दात् अपत्यार्थे नि-ष्पन्नस्य इञ्प्रत्ययान्तस्य अस्य बहुवचने इञपवादतया अकारविधानात्, अत एव वृद्ध्यभावाच्च, **उडुलोमाः** इति वृक्षशब्दवत् ॥

इति इकारान्तपुंलिङ्गप्रातिपदिकानि ॥

---

## अथ ईकारान्तपुंलिङ्गानि ॥

1. ईकारान्तः पुंलिङ्गो ग्रामणीशब्दः । स च ग्रामशब्दोपपदान्नयतेर्धातोः क्विबन्तः । कथम्? णीञ् प्रापणे; नी इत्ययं णीञ्निष्पन्नः प्रापणे अर्थे वर्तते; अकारस्य हलन्त्यम् इति इत्संज्ञा; **णो नः** (VI.1.65.) इति धात्वादिणकारस्य नकारः । ग्रामशब्दस्य नी इत्यनेन समासे कृते सोमपाशब्दवत् कृदन्तत्वेन प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः; तत्र सौ **ग्रामणीः । ग्रामणी + औ** इति स्थिते, इको यणचि इति यणि प्राप्ते, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (VI. 4. 77.)—धातोरिवर्णोवर्णान्तस्य श्नुप्रत्ययान्तस्य भ्रू इत्येतस्य च अचि परतो यथाक्रमम् इयङुवङौ आदेशौ भवतः । इति इयङादेशे प्राप्ते, **इणो यण्** (VI. 4. 81.) इति वर्तमाने, **एरनेकाचोऽसंयोगपूर्वस्य** (VI. 4. 82.)—धातोरवयवः संयोगः पूर्वो यस्मादिवर्णात् नास्ति तदन्तस्य अनेकाचोऽङ्गस्य यणादेशो भवति अजादौ प्रत्यये परे। इति **ग्रामण्यौ, ग्रामण्यः।** सम्बोधनेऽपि तद्वत् । अमि यणादेश एव; शसि च । ङौ सप्तम्येकवचने तु **ङेराम्नद्याम्नीभ्यः** (VII. 3. 16.)—नद्यन्तादाबन्तान्नीशब्दाच्चोत्तरस्य ङेरामादेशो भवति । अथ यणादेशः; **ग्रामण्याम्** । एवम् अग्रणीसेनानी-प्रभृतयः ॥

ग्रामणीः, ग्रामण्यौ, ग्रामण्यः । हे ग्रामणीः, हे ग्रामण्यौ, हे ग्रामण्यः । ग्रामण्यम्, ग्रामण्यौ, ग्रामण्यः । ग्रामण्या, ग्रामणीभ्याम्, ग्रामणीभिः । ग्रामण्ये, ग्रामणीभ्याम्, ग्रामणीभ्यः । ग्रामण्यः, ग्रामणीभ्याम्, ग्रामणीभ्यः । ग्रामण्यः, ग्रामण्योः, ग्रामण्याम् । ग्रामण्याम्, ग्रामण्योः, ग्रामणीषु ॥

2. वातं प्रमिमीते इति **वातप्रमीः** । उणादिनिष्पन्नः; पूर्ववत् स्वाद्युत्पत्तिः । **वातप्रमी + औ** इति स्थिते, प्रथमयोः पूर्वसवर्णः इति पूर्वसवर्णदीर्घे प्राप्ते, **दीर्घाज्जसि च** (VI. 1. 105.)—दीर्घात् जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात् । प्रमी इत्यत्र ईप्रत्ययदर्शनेन अधातुत्वात् इको यणचि इति यणादेशः; **वातप्रम्यौ, वातप्रम्यः** ॥

अमि वातप्रमीं विद्याच्छसि वातप्रमीनिति ।
ङौ तु वातप्रमी शेषं ग्रामण्या सदृशं स्मृतम् ॥

एवमेव ययी पपी इत्यादयः ॥

3. बह्व्यः श्रेयस्यः यस्य सः **बहुश्रेयसी** । दीर्घङ्यन्तात् परस्य सोः लोपः । वातप्रमीशब्दवत् प्रक्रिया । सम्बुद्धौ तु **अम्बार्थनद्योर्ह्रस्वः** (VII. 3. 107.)—अम्बार्थानां नद्यन्तानां च ह्रस्वः सम्बुद्धौ स्यात्; **हे बहुश्रेयसि** । चतुर्थ्येकवचने **यू स्त्र्याख्यौ नदी** (I. 4. 3.)—ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । **प्रथमलिङ्गग्रहणं च** (भा. इ.) इति पूर्वं स्त्रीलिङ्गस्य संप्रति विशेषणत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः । **आण्नद्याः** (VII. 3. 112.)—नद्यन्तात् परेषां ङिताम् आडागमः स्यात् । **बहुश्रेयसी+आ + ए** इति स्थिते, **आटश्च** (VI.1.90.)—आटः आगमस्य अचि परतः वृद्धिरेकादेशः स्यात् । यण्; **बहुश्रेयस्यै** । एवमन्यत्रापि ङिति; **बहुश्रेयस्याः** । आमः नद्यन्तात् परस्य नुट्; **बहुश्रेयसीनाम्** । ङौ तु ग्रामणीवत्; **बहुश्रेयस्याम्** ॥

4. सुधीशब्दस्य भेदः । सोऽपि सुपूर्वात् ध्यायतिधातोः क्विबन्तः । ध्यै चिन्तायाम् । ध्यै इति स्थिते, **आदेच उपदेशेऽशिति** (VI.1.45.)—एजन्तो यो धातुरुपदेशे तस्य आकारादेशो भवति, न तु शिति प्रत्यये विषयभूते । ध्या इति जाते, **प्राग्रीश्वरान्निपाताः** (I. 4.

56.), **चादयोऽसत्त्वे** (I. 4. 57.), इति वर्तमाने, **प्रादयः** (I. 4. 58.)—अद्रव्यार्थाः प्रादयो निपातसंज्ञा भवन्ति । के पुनः प्रादयः? प्र, परा, अप, सम्, अनु, अव, निस्, दुस्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप, इति प्रादयो विंशतिः ।

प्रपरापसमन्ववनिर्दुर्व्याङ्न्यधयोप्यतिसूदभयश्च ।
प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र ॥

पृथग्योगकरणमुत्तरसंज्ञाविशेषणार्थम् । **उपसर्गाः क्रियायोगे** (I. 4. 59.)—प्रादयः क्रियायोगे उपसर्गसंज्ञका भवन्ति ।

धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते ।
तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा ॥

**गतिश्च** (I. 4. 60.)—प्रादयः क्रियायोगे गतिसंज्ञकाश्च भवन्ति । **ते प्राग्धातोः** (I. 4. 80.)—ते गत्युपसर्गसंज्ञका धातोः प्राक् प्रयोक्तव्याः । इति इह सु इत्यस्य प्राक्प्रयोगः । सुशब्दस्य क्रियाविशेषणत्वात् अर्थवत्त्वात् प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । सु इत्यस्य निपातत्वादव्ययसंज्ञायाम् **अव्ययादाप्सुपः** (II. 4. 82.) इति सुपो लुक् । सुध्या इति जाते, सुध्यातुं शीलमस्य इति विग्रहे, ध्याधातोः क्विपि क्विपः सर्वलोपे च, **इग्यणः संप्रसारणम्** (I. 1. 45.)—यणः स्थाने भूतो भावी वा य इक् स संप्रसारणसंज्ञो भवति; **ध्यायतेः संप्रसारणं च** (वा. III. 2. 178.) इति संप्रसारणे कृते, सुधि + आ इति जाते, **अमि पूर्वः** इति वर्तमाने, **संप्रसारणाच्च** (VI.1. 108.)—संप्रसारणादचि परतः पूर्वपरयोः पूर्वरूपमेकादेशो भवति । इति सुधि इति जाते, **संप्रसारणस्य** (VI. 3. 139.) इति वर्तमाने, **हलः** (VI. 4. 2.)—अङ्गावयवाद्धलो यदुत्तरं संप्रसारणं तदन्तस्य

अङ्गस्य दीर्घो भवति ; इति सुधी इति भवति । सुधी इत्यस्य पूर्ववत् कृदन्तत्वेन प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तौ, सौ **सुधीः** । द्विवचनादिषु **एरनेकाचोऽसंयोगपूर्वस्य** (VI. 4. 82.) इति यणादेशे प्राप्ते, **न भूसुधियोः** (VI. 4. 85.)—भू सुधी इत्येतयोः अजादौ सुपि प्रत्यये परतो यणादेशो न भवति । अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (VI. 4. 77.) इति पुनरियङादेशो भवति । एवं **सुधियौ सुधियः** इत्यादिरूपाणि भवन्ति ॥

सुधीः, सुधियौ, सुधियः । हे सुधीः, हे सुधियौ, हे सुधियः । सुधियम्, सुधियौ, सुधियः । सुधिया, सुधीभ्याम्, सुधीभिः । सुधिये, सुधीभ्याम्, सुधीभ्यः । सुधियः, सुधीभ्याम्, सुधीभ्यः । सुधियः, सुधियोः, सुधियाम् । सुधियि, सुधियोः, सुधीषु ॥

5. एवं सुश्रीप्रभृतयः । अत्र धातोः ईकारस्य संयोगपूर्वत्वात् न यणादेशः । प्रधीशब्दस्य तु सर्वत्र अजादौ प्रत्यये यणादेश एव । **गतिकारकेतरपूर्वपदस्य यण् नेष्यते** (भा. इ.) इत्यनेन गतिकारकभिन्नपूर्वपदत्वात् शुद्धधी परमनी इत्यादौ यण् न भवति । तस्मात् **प्रध्यौ शुद्धधियौ परमनियौ** इति भवन्ति ॥

इति ईकारान्तपुंलिङ्गप्रातिपदिकानि ॥

---

## अथ उकारान्तपुंलिङ्गानि ॥

1. उकारान्तः पुंलिङ्गः कारुशब्दः । कविशब्दवत् प्रक्रिया ॥

कारुः, कारू, कारवः । हे कारो, हे कारू, हे कारवः । कारुम्, कारू, कारून्, । कारुणा, कारुभ्याम्, कारुभिः । कारवे, कारुभ्याम्, कारुभ्यः । कारोः, कारुभ्याम्, कारुभ्यः । कारोः, कार्वोः, कारूणाम् । कारौ, कार्वोः, कारुषु ॥

एवं भानु-बाहु-विष्णु-शंभु-कंबु-प्रभृतयः ॥

2. क्रोष्टुशब्दस्य तु भेदः । क्रुश आह्वाने रोदने च ; अकार उच्चारणार्थः । अस्य धातुत्वात् **सि-तनि-गमि-मसि-सचि-अवि-धाञ्-क्रुशि भ्यस्तुन्** (उणादि. 72.)—षिञ् बन्धने, तनु विस्तारे, गम्लृ गतौ, मस परिमाणे, षच समवाये, अव रक्षणे, डुधाञ् धारणपोषणयोः, क्रुश आह्वाने रोदने च ; एतेभ्यो धातुभ्यः तुन् प्रत्ययो भवति । नकारस्य अस्मिन् प्रत्यये इत्संज्ञया लोपः । इति तुन्प्रत्ययान्तस्य क्रोष्टुशब्दस्य कृदन्तत्वेन प्रातिपदिकत्वात् स्वाद्युत्पत्तिः । तस्मादेव धातोः तृच्प्रत्यये कृते क्रोष्टृ इति शब्दः निष्पन्नो भवति । उभावपि सृगालवाचिनौ । उभयोरपि सर्वविभक्तौ प्रयोगप्रसङ्गे प्राप्ते, **तृज्वत् क्रोष्टुः** । (VII. 1. 95.)—क्रोष्टुशब्दस्य तृजन्तस्येव रूपं भवति असम्बुद्धौ सर्वनामस्थाने परतः; रूपातिदेशोऽयम् । असम्बुद्धौ सर्वनामस्थाने उकारान्तस्य क्रोष्टुशब्दस्य प्रयोगो निषिद्धः । क्रोष्टृ + सु इति स्थिते, **अनङ् सौ** (VII. 1. 93.) इत्यनुवर्तमाने, **ऋदुशनस्पुरुदंशोऽनेहसाञ्च** (VII. 1. 94.)—ऋकारान्तानामङ्गानाम् उशनस् पुरुदंशस् अनेहस् इत्येतेषां च अनङादेशो भवति असम्बुद्धौ सौ परतः । ङित्त्वादन्त्यस्य भवति ।

अनुबन्धलोपः । क्रोष्टन्+सु इति जाते, **सर्वनामस्थाने चासम्बुद्धौ** (VI. 4. 8.) इति वर्तमाने, **अप्-तृन्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तॄणाम्** (VI. 4. 11.)—अबादीनामङ्गानाम् उपधायाः दीर्घो भवत्यसम्बुद्धौ सर्वनामस्थाने परतः । एवं क्रोष्टान्+सु इति जाते सखिशब्दवत् सुलोपनलोपौ; **क्रोष्टा** । अन्यत्र सर्वनामस्थाने **ऋतो ङिसर्वनामस्थानयोः** (VII. 3. 110.)—ऋकारान्तस्याङ्गस्य गुणो भवति ङौ सर्वनामस्थाने च परतः । स च उरण् रपरः इति रपरः; पूर्ववद्दीर्घ उपधायाः; **क्रोष्टारौ, क्रोष्टारः** । सम्बुद्धौ शसि च तृज्वद्भावाभावात् कारुशब्दवत्; **हे क्रोष्टो, हे क्रोष्टारौ, हे क्रोष्टारः । क्रोष्टारम्, क्रोष्टारौ, क्रोष्टून्** । **विभाषा तृतीयादिष्वचि** (VII. 1. 97.)—तृतीयादिषु अजादिषु विभक्तिषु परतः क्रोष्टुशब्दस्य तृज्वद्भावो वा भवति । तृज्वद्भावे यणादेशः; अन्यत्र कारुशब्दवत् । एवं **क्रोष्टुना क्रोष्ट्रा** । एवमेव **क्रोष्टवे क्रोष्ट्रे** । अत्र ङसिङसोः तृज्वद्भावे, **ङसिङसोश्च** (VI. 1. 110.) इति वर्तमाने, **ऋत उत्** (VI. 1. 111.)—ऋकारान्तस्याङ्गस्य ङसिङसोः अति परतः पूर्वपरयोः उकारादेशो भवति; रपरत्वं च । **संयोगान्तस्य लोपः** (VIII. 2. 23.) इति वर्तमाने, **रात् सस्य** (VIII. 2. 24.)—रेफादुत्तरस्य संयोगान्तस्य पदान्तस्य सकारस्यैव लोपो भवति । रेफस्य विसर्गः; **क्रोष्टुः क्रोष्टोः** । षष्ठीबहुवचने क्रोष्टु+आम् इति स्थिते, आमि नुटः परत्वात् तृज्वद्भावे प्राप्ते, **नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन** (भा. I. 4. 2.) इति तृज्वद्भावं बाधित्वा नुट् भवति; **क्रोष्टूनाम्** । सप्तम्येकवचने ऋतो ङिसर्वनामस्थानयोः इति गुणः; **क्रोष्टरि क्रोष्टौ** ॥

क्रोष्टा, क्रोष्टारौ, क्रोष्टारः । हे क्रोष्टो, हे क्रोष्टारौ, हे क्रोष्टारः । क्रोष्टारम्, क्रोष्टारौ, क्रोष्टून् । क्रोष्टुना क्रोष्ट्रा, क्रोष्टुभ्याम्, क्रोष्टुभिः । क्रोष्टवे क्रोष्ट्रे, क्रोष्टुभ्याम्, क्रोष्टुभ्यः । क्रोष्टोः क्रोष्टुः; क्रोष्टुभ्याम्, क्रोष्टुभ्यः । क्रोष्टोः क्रोष्टुः, क्रोष्ट्वोः क्रोष्ट्रोः, क्रोष्टूनाम् । क्रोष्टौ क्रोष्टरि, क्रोष्ट्वोः क्रोष्ट्रोः, क्रोष्टुषु ॥

इति उकारान्तपुंलिङ्गप्रातिपदिकानि ॥

---

अथ ऊकारान्तपुंलिङ्गानि ॥

---

1. ऊकारान्तः पुंलिङ्गः खलपूशब्दः । स च खलशब्दोपपदात् पूञ् पवने इत्यस्मात् धातोः क्विबन्तः । सोमपाशब्दवत् कृदन्तत्वेन स्वाद्युत्पत्तिः । सौ **खलपूः** । द्विवचनादिषु अजादिषु, अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (VI. 4. 77.) इति उवङादेशे प्राप्ते, **ओः सुपि** (VI. 4. 83.)—धातोः अवयवः संयोगः यस्मात् उवर्णात् पूर्वो न भवति तदन्तस्याङ्गस्य अनेकाचो यणादेशो भवत्यजादौ सुपि विभक्तौ परतः; **खलप्वौ, खलप्वः** ॥

खलपूः, खलप्वौ, खलप्वः । हे खलपूः, हे खलप्वौ, हे खलप्वः । खलप्वम्, खलप्वौ, खलप्वः । खलप्वा, खलपूभ्याम्, खलपूभिः । खलप्वे, खलपूभ्याम्, खलपूभ्यः । खलप्वः, खलपूभ्याम्, खलपूभ्यः । खलप्वः, खलप्वोः, खलप्वाम् । खलप्वि, खलप्वोः, खलपूषु ॥

एवं काण्डलू-प्रभृतयः ॥

2. प्रतिभूशब्दस्य भेदः । सोऽपि प्रतिपूर्वात् भवतेर्धातोः क्विबन्तः । **भू** सत्तायाम् । भू इति स्थिते, प्रतिभवतीति विग्रहे, धातु संज्ञायां, पूर्ववद्धातोः प्राक् प्रतियोगः । **भुवः संज्ञान्तरयोः** (III 2.179.)—भवतेर्धातोः संज्ञायामन्तरे च गम्यमाने क्विप् प्रत्ययो भवति । लोपसमासादि पूर्ववत्; स्वाद्युत्पत्तिः । सौ **प्रतिभूः** । धनिकाधमर्णयोः योऽन्तरे तिष्ठति स प्रतिभूरित्युच्यते । विभूर्नाम कश्चित् । द्विवचनादिष्वजादिषु, ओः सुपि (VI. 4. 83.) इति यणादेशे प्राप्ते, **न भूसुधियोः** (VI. 4. 85.) इति प्रतिषेधः । पुनरुवङादेशः; **प्रतिभुवौ, प्रतिभुवः** ॥

प्रतिभूः, प्रतिभुवौ, प्रतिभुवः । हे प्रतिभूः, हे प्रतिभुवौ, हे प्रतिभुवः । प्रतिभुवम्, प्रतिभुवौ, प्रतिभुवः । प्रतिभुवा, प्रतिभूभ्याम्, प्रतिभूभिः । प्रतिभुवे, प्रतिभूभ्याम्, प्रतिभूभ्यः । प्रतिभुवः, प्रतिभूभ्याम्, प्रतिभूभ्यः । प्रतिभुवः, प्रतिभुवोः, प्रतिभुवाम् । प्रतिभुवि, प्रतिभुवोः, प्रतिभूषु ॥

एवं स्वयंभू-प्रभृतयः ॥

3. वर्षाभूशब्दस्य तु भेदः । अजादौ विभक्तौ परतः, **वर्षाभ्वश्च** (VI. 4. 84.)—वर्षाभूशब्दस्य यण् स्यात् । **वर्षाभूः, वर्षाभ्वौ, वर्षाभ्वः** । शेषं खलपूवत् ॥

पुनर्भूशब्दस्यापि—**पुनःपूर्वस्य भुवो यण् वक्तव्यः** (वा.)—इति अजादौ विभक्तौ यणादेशः । खलपूवत् प्रक्रिया ; **पुनर्भ्वौ, पुनर्भ्वः** ॥

इति ऊकारान्तपुंलिङ्गप्रातिपदिकानि ॥

---

अथ ऋकारान्तपुंलिङ्गानि ॥

1. ऋकारान्तः पुंलिङ्गः पितृशब्दः । एष औणादिकः; अव्युत्पन्नः। **पितृ** इति स्थिते स्वाद्युत्पत्तिः । **ऋदुशनस्पुरुदंशोऽनेहसाश्च** (VII. 1. 94.) इत्यनङादेशः । **सर्वनामस्थाने चासम्बुद्धौ** (VI. 4. 8.)—नोपधायाः असम्बुद्धौ सर्वनामस्थाने परतो दीर्घो भवति; इति दीर्घः । सखिशब्दवत् सुलोपनलोपौ; **पिता** । अन्यत्र सर्वनामस्थाने **ऋतो ङिसर्वनामस्थानयोः** (VII. 3. 110.) इति गुणः; रपरत्वं; **पितरौ, पितरः** । सम्बुद्धौ सुलोपे च गुणे च प्राप्ते **कृताकृतप्रसङ्गी यो विधिः स नित्यः** (परि. 42.) इति नित्यत्वाच्च परत्वात् गुणः । सुलोपः; रेफस्य विसर्गश्च; **हे पितः, हे पितरौ, हे पितरः** । **पितरम्, पितरौ**; शसि पूर्वसवर्णदीर्घः सस्य नत्वं च; **पितॄन्** । पित्रा, पितृभ्याम्, पितृभिः । पित्रे, पितृभ्याम्, पितृभ्यः। पञ्चम्येकवचने षष्ठ्येकवचने च **ऋत उत्** (VI. 1. 111.) इत्युत्त्वम्; **रात्सस्य** (VIII. 2. 24.) इति सकारलोपः; रेफस्य विसर्जनीयादेशः; **पितुः**; पितृभ्याम्, पितृभ्यः । पितुः, पित्रोः; आमि नुडागमः; ऋवर्णाच्च नकारस्य णत्वं वक्तव्यम्—इति णत्वम्; नामि (VI. 4. 3.) इति दीर्घः; **पितॄणाम्** । पितरि, पित्रोः, पितृषु ॥

एवं भ्रातृ-जामातृ-प्रभृतयः ॥

2. ऋकारान्ता अव्युत्पन्नशब्दाः सर्वनामस्थाने द्विवचनादौ तृजन्तत्वाभावात् दीर्घं न प्राप्नुवन्ति । भ्रातरौ, भ्रातरः; इत्यादि ॥

नृशब्दस्यापि पितृशब्दवत् प्रक्रिया । आमि तु नुडागमे कृते, **छन्दस्युभयथा** (VI. 4. 5.) इति वर्तमाने, **नृ च** (VI. 4. 6.)—नृ इत्येतस्य नामि परे उभयथा दृश्यते दीर्घश्च अदीर्घश्च; **नॄणाम् नृणाम्** ॥

3. तृजन्तस्य कर्तृशब्दस्य भेदः। डुकृञ् करणे; ञकारलोपः; धातुसंज्ञायां डुशब्दस्य, **आदिर्ञिटुडवः** (I. 3. 5.)—धात्वादिभूताः ञि टु डु इत्येते वर्णसमुदायाः इत्संज्ञा भवन्ति, इति इत्संज्ञायां लोपः। प्रयोजनं **ड्वितः क्त्रिः** (III. 3. 88.) इति विशेषणम्। कृ इति स्थिते, **ण्वुल्तृचौ** (III. 1. 133.)—सर्वधातुभ्यः कर्तरि ण्वुल्तृचौ प्रत्ययौ भवतः, इति अत्र तृच्प्रत्ययः। चकारलोपः; प्रयोजनं **तृजकाभ्यां कर्तरि** (II. 2. 15.) इति विशेषणम्। एवं तृच्प्रत्ययान्ततया निष्पन्नस्य कर्तृशब्दस्य कृदन्तत्वात् स्वाद्युत्पत्तिः। सौ **कर्ता**। तृजन्तत्वात् सर्वनामस्थाने **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्** (VI. 4. 11.) इति दीर्घः; **कर्ता, कर्तारौ, कर्तारः, कर्तारम्, कर्तारौ**। अन्यत्र पितृशब्दवत् ॥

एवं भर्तृ-हर्तृ-नेतृ-प्रभृतयः ॥

इति ऋकारान्तपुंलिङ्गानि ॥

---

ॠकारऌकारान्ताः शब्दा अप्रसिद्धाः ॥

---

अथ एकारान्तपुंलिङ्गानि ॥

---

एकारान्तः पुंलिङ्गः सेशब्दः। इः कामः; तेन सह वर्तते इति **सेः**; प्रथमैकवचनान्तः। अन्यत्र अजादौ विभक्तौ अयादेशः; **सयौ, सयः**; इत्यादि ॥

एवं स्मृते-जिते-प्रभृतयः ॥

इति एकारान्तपुंलिङ्गानि ॥

अथ ओकारान्तपुंलिङ्गप्रातिपदिकानि ॥

---

1. ओकारान्तः पुंलिङ्गो गोशब्दः । **गो** + **सु** इति स्थिते, **इतोऽत्सर्वनामस्थाने** (VII. 1. 86.) इति वर्तमाने, **गोतो णित्** (VII. 1. 90.)—गोशब्दात् परं सर्वनामस्थानं णिद्वद्भवति । **अचो ञ्णिति** (VII. 2. 115.)—अजन्तस्य अङ्गस्य ञिति णिति प्रत्यये परतः वृद्धिर्भवति । इति **गौः**, **गावौ**, **गावः** । अमि शसि च **औतोऽम्शसोः** (VI. 1. 93.)—आ ओतः इति पदच्छेदः; ओकारान्तात् अमि शसि च परतः पूर्वपरयोः स्थाने आकारादेशो भवति; **गाम्**, गावौ, **गाः** । अन्यत्र अजादौ विभक्तौ परतः अवादेशः । ङसिङसोस्तु **ङसिङसोश्च** (VI. 1. 110.) इति पूर्वरूपम्; **गोः** ॥

2. एवं सुद्यो-स्मृतो-प्रभृतयः । कथमेषां णिद्वद्भावः? **गोतोणित्** इत्यत्र गोत इति तपरकरणम् ओकारान्तोपलक्षणार्थम्; वर्णनिर्देशेषु हि तपरकरणस्य प्रसिद्धिः । एवं च सुद्योशब्दादपि परं सर्वनामस्थानं णिद्वत् भवति; सुद्यौः, सुद्यावौ, सुद्यावः; इत्यादि ॥

इति ओकारान्तपुंलिङ्गानि ॥

---

अथ ऐकारान्तपुंलिङ्गप्रातिपदिकानि ॥

---

ऐकारान्तः पुंलिङ्गो रैशब्दः । **रै** + **सु** इति स्थिते, **अष्टन आ विभक्तौ** (VII. 2. 84.) इत्यनुवर्तमाने, **रायो हलि** (VII. 2. 85.)—रैशब्दस्य हलादौ विभक्तौ परतः आकारः अन्तादेशो भवति ।

राः, रायौ, रायः । हे राः, हे रायौ, हे रायः । रायम्, रायौ, रायः । राया, राभ्याम्, राभिः । राये, राभ्याम्, राभ्यः । रायः, राभ्याम्, राभ्यः । रायः, रायोः, रायाम् । रायि, रायोः, रासु ॥

स्मृतै स्वरितै इत्यादिषु हलादिविभक्तौ परतः आकारादेशो न भवति । अन्यत्र रैशब्दवत् ॥

इति ऐकारान्तपुंलिङ्गानि ॥

---

अथ औकारान्तपुंलिङ्गप्रातिपदिकानि ॥

---

औकारान्तः पुंलिङ्गो ग्लौशब्दः । **ग्लैनुदिभ्याण्डौः** (उणा. 232.)——ग्लै हर्षक्षये, नुद प्रेरणे, इत्येताभ्यां धातुभ्यां डौ इति प्रत्ययो भवति; डकारष्टिलोपार्थः । कृदन्तत्वात् स्वाद्युत्पत्तिः । **ग्लौः**, **ग्लावौ**, **ग्लावः**; इत्यादि । अजादौ आवादेशः; हलादौ अविशेषः ॥

एवमेव अन्येऽप्यौकारान्तपुंलिङ्गशब्दा भवन्ति ॥

---

इति पुंलिङ्गे औकारान्तप्रातिपदिकानि ॥

---

## इति अजन्तपुंलिङ्गानि प्रातिपदिकानि ॥

---

## अथ अजन्तस्त्रीलिङ्गप्रकरणम् ॥

अथ आकारान्तस्त्रीलिङ्गप्रातिपदिकानि ॥

1. आकारान्तः स्त्रीलिङ्गो जायाशब्दः । जाय इति स्थिते, प्रातिपदिकसंज्ञायां, **ङ्याप्प्रातिपदिकात्** (IV. 1. 1.), **स्त्रियाम्** (IV. 1. 3.), इति च वर्तमाने, **अजाद्यतष्टाप्** (IV. 1. 4.)—अजादेर्गणादकारान्ताच्च प्रातिपदिकात् स्त्रियां टाप्प्रत्ययो भवति । पकारस्य लोपः; प्रयोजनम् आप् इति सामान्यग्रहणार्थः; टकारः सामान्यग्रहणाविघातार्थः । अन्यथाह्येकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य इति आप्ग्रहणे डाप्चापोर्ग्रहणं न स्यात्; इत्यत्र द्व्यनुबन्धकग्रहणम् । सवर्णदीर्घः । आबन्तत्वात् स्वाद्युत्पत्तिः । हल्ङ्यादिना (VI. 1. 68.) सुलोपः; **जाया** । द्विवचने, **जसः शी** (VII.1.17.) इति वर्तमाने, **औङ आपः** (VII. 1. 18.)—आबन्तादङ्गादुत्तरस्य औङः शी इत्ययमादेशो भवति । औङ् इति प्रथमाद्वितीययोः द्विवचनस्य पूर्वाचार्याणां संज्ञा; गुणः; **जाये** । बहुवचने जसि सवर्णदीर्घः; **जायाः** । सम्बुद्धौ, **बहुवचने झल्येत्** (VII. 3. 103.), **आङि चापः** (VII. 3. 105.), इति च वर्तमाने, **सम्बुद्धौ च** (VII. 3. 106.)—सम्बुद्धौ परतः आबन्तस्याङ्गस्य एकारादेशो भवति । **एङ्ह्रस्वात् संबुद्धेः** (VI.1.69.) इति सुलोपः; **हे जाये**; हे जाये, हे जायाः । तृतीयैकवचने **ओसि च** (VII. 3. 104.) इति वर्तमाने, **आङि चापः** (VII.3.105.)—आङि च ओसि च परतः

आबन्तस्य अङ्गस्य एकारादेशो भवति । अथ अयादेशः; **जायया**; जायाभ्याम्, जायाभिः । ङिद्वचने, **घेर्ङिति** (VII. 3. 111.) इति वर्तमाने, **याडापः** (VII. 3. 113.)—आबन्तादङ्गादुत्तरस्य ङिद्वचनस्य याडागमो भवति; वृद्धिः; **जायायै**; जायाभ्याम्, जायाभ्यः । **जायायाः**, जायाभ्याम्, जायाभ्यः । **जायायाः**, जाययोः; आमि **ह्रस्वनद्यापो नुट्** (VII. 1. 54.) इति **जायानाम्** । सप्तम्येकवचने **ङेराम्नद्याम्नीभ्यः** (VII. 3. 116.) इत्यामादेशः; **जायायाम्**; जाययोः, जायासु ॥

एवं शाला-माला-खट्वादीनां रूपं नेयम् ॥

2. जराशब्दस्य भेदः । जॄष् वयोहानौ; षकारलोपः; प्रयोजनं **षिद्भिदादिभ्योऽङ्** (III.3.104.) इति विशेषणम् । **षिद्भिदादिभ्योऽङ्**—षिद्भ्यो धातुभ्यो भिदादिभ्यः स्त्रियामङ्प्रत्ययो भवति । इति अङन्ततया निष्पन्नस्य जरशब्दस्य जायाशब्दवत् टाप् भवति; स्वाद्युत्पत्तिश्च; **जरा** । अजादौ विभक्तौ परतः **जराया जरसन्यतरस्याम्** (VII. 2. 101.) इति जराशब्दस्य जरसादेशो वा भवति । पक्षे हलादौ च जायाशब्दवत् ॥

जरा, जरे जरसौ, जराः जरसः । हे जरे, हे जरे हे जरसौ, हे जराः हे जरसः । जराम् जरसम्, जरे जरसौ, जराः जरसः । जरया जरसा, जराभ्याम्, जराभिः । जरायै जरसे, जराभ्याम्, जराभ्यः । जरायाः जरसः, जराभ्याम्, जराभ्यः, । जरायाः जरसः, जरयोः जरसोः, जराणाम् जरसाम् । जरायाम् जरसि, जरयोः जरसोः, जरासु ॥

3. सर्वनामशब्दानामकारान्तानां स्त्रीलिङ्गे, अजाद्यतष्टाप् (IV. 1. 4.) इति टापि कृते, जायाशब्दवत् प्रक्रिया ङिद्वचनादन्यत्र । सर्वा, सर्वे,

सर्वाः । हे सर्वे, हे सर्वे, हे सर्वाः । सर्वाम्, सर्वे, सर्वाः । सर्वया, सर्वाभ्याम्, सर्वाभिः । ङिद्वचने **घेर्ङिति** (VII. 3.111.) इति, **याडापः** (VII. 3. 113.) इति च वर्तमाने, **सर्वनाम्नः स्याड्ढ्रस्वश्च** (VII. 3. 114.)—आबन्तात् सर्वनाम्नोऽङ्गादुत्तरस्य ङिद्वचनस्य स्याडागमो भवति, आपो ह्रस्वश्च भवति । याटोऽपवादः । **सर्वस्यै**, सर्वाभ्याम्, सर्वाभ्यः । **सर्वस्याः**, सर्वाभ्याम्, सर्वाभ्यः । **सर्वस्याः**, सर्वयोः, सर्वासाम् । **सर्वस्याम्**, सर्वयोः, सर्वासु ॥

4. एवमन्तरशब्दपर्यन्तानां रूपं नेयम् । प्रथमादीनां तु सप्तानां जायाशब्दवत् । प्रथमा, प्रथमे, प्रथमाः; इत्यादि । द्वितीयतृतीयशब्दयोः भेदः । टापि कृते, **विभाषा द्वितीयातृतीयाभ्याम्** (VII. 3. 115.)—द्वितीयातृतीयाभ्यामुत्तरस्य ङिद्वचनस्य विभाषा स्याडागमो भवति, आपो ह्रस्वश्च भवति । पक्षे याडागमः । **द्वितीयस्यै द्वितीयायै; द्वितीयस्याः द्वितीयायाः; द्वितीयस्याम् द्वितीयायाम्** । अन्यत्र जायाशब्दवत् । एवं तृतीयाशब्दः ॥

5. उत्तरपूर्वाशब्दस्य तु दिग्वाचिनः भेदः ङिद्वचने; अन्यत्र जायाशब्दवत् । उत्तरपूर्वा + ङे इति स्थिते, **विभाषा दिक्समासे बहुव्रीहौ** (I. 1. 28.)—दिशां समासः दिक्समासः; अत्र बहुव्रीहौ सर्वनामसंज्ञा विभाषा भवति । सर्वनामपक्षे स्याडागमः; **उत्तरपूर्वस्यै** । पक्षान्तरे—**उत्तरपूर्वायै** । एवमेव दक्षिणपूर्वा-प्रभृतयः ॥

6. निशाशब्दस्यापि भेदः । असर्वनामस्थानविभक्तिषु शसादिषु पद्दन्नोमास् (VI. 1. 63.) इत्यादिना निशाशब्दस्य निश् इत्यादेशः । तथैव नासिकाशब्दस्यापि नस् इत्यादेशः । निशाः निशः, निशया निशा, इत्यादि । एवमेव—नासिकाः नसः, नासिकया नसा, इत्यादि । हलादौ

प्रत्यये **निश् +भ्याम्** इति स्थिते, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (VIII. 2. 36.)—व्रश्चादीनां सप्तानां छकार-शकारान्तयोश्च षकारः अन्तादेशो भवति झलि पदान्ते च । निष्+भ्याम् इति जाते, षस्य जश्त्वेन डकारः (VIII. 2. 39.); **निड्भ्याम्** । पक्षे—**निशाभ्याम्** । **नस् + भ्याम्** इत्यत्र सस्य रुत्वम्; रोः उत्वम्; गुणः; **नोभ्याम्** । पक्षे—**नासिकाभ्याम्** ॥

7. अम्बाशब्दस्य संबुद्धावेव भेदः । **अम्बा + सु** इति स्थिते, **अम्बार्थनद्योर्ह्रस्वः** (VII. 3. 107.) इति ह्रस्वः । अथ सुलोपश्च; **हे अम्ब** । एवं अक्का-अल्ला-प्रभृतीनामपि रूपं नेयम् ॥

पृतनाशब्दस्य शसादौ परतः, **मांसपृतनासानूनां मांस्पृत्स्नवो वा वाच्याः** (VI. 1. 63. वा.), इति पृत् इत्यादेशः; पृतनाः पृतः, पृतनया पृता, इत्यादि ॥

इति आकारान्तस्त्रीलिङ्गानि ॥

---

अथ इकारान्तस्त्रीलिङ्गप्रातिपदिकानि ॥

---

1. इकारान्तः स्त्रीलिङ्गो रुचिशब्दः । सर्वनामस्थाने हलादौ च कविशब्दवत्; शासि तु नत्वं न भवति स्त्रीलिङ्गत्वात्; **रुचीः** । तृतीयैकवचने घिसंज्ञायामपि अस्त्रियामिति निषेधात् नाभावो न भवति; **रुच्या** । ङिद्वचने, **यू स्त्र्याख्यौ नदी** (I. 4. 3.), **नेयङुवङ्स्थानावस्त्री** (I. 4. 4.), **वामि** (I. 4. 5.), इति वर्तमाने, **ङिति ह्रस्वश्च** (I. 4.6.)—ङिति परतो यः य्वोः ईकार-ऊकारयोः सम्बन्धी

ह्रस्वः स्त्र्याख्यौ इयङुवङ्स्थानौ च यू ईकार-ऊकारौ वा नदीसंज्ञौ भवतः, स्त्रीशब्दं वर्जयित्वा । यत्र नदीसंज्ञा तत्र न घिसंज्ञा, घिसूत्रे शेषग्रहणात् (I. 4. 7.)। **आण्नद्याः** (VII. 3. 112.)—नद्यन्तादङ्गात् उत्तरस्य ङिद्वचनस्य आडागमो भवति; **आटश्च** (VI. 1. 90.)—आटोऽचि परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशो भवति ; **रुच्यै**। घिपक्षे कविशब्दवत् ; **रुचये**। सप्तम्येकवचने ङेः, **औत्** (VII.3.118.) इत्यौत्वे प्राप्ते, **इदुद्भ्याम्** (VII. 3. 117.)—इकारोकाराभ्यां नदीसंज्ञकाभ्यामुत्तरस्य ङेरामादेशो भवति ; **रुच्याम्** । पक्षे—**रुचौ** ॥

एवं कृति-युवति-प्रभृतयः ॥

2. द्विशब्दस्य भेदः। द्वित्वसंख्यावाचित्वात् सर्वत्र द्विवचनं भवति। द्वि + औ इति स्थिते, त्यदादित्वात् अत्वे कृते, अजाद्यतष्टाप् (IV. 1. 4.) इति टापि कृते च, जाया-शब्दवत् । द्वे, द्वे, द्वाभ्याम्, द्वाभ्याम्, द्वाभ्याम्, द्वयोः, द्वयोः ॥

3. त्रिशब्दस्य भेदः। त्रित्वसंख्यावाचित्वात् सर्वत्र बहुवचनं भवति । **अष्टन आ विभक्तौ** (VII.2. 84.) इत्यधिकृत्य, **त्रिचतुरोः स्त्रियां तिसृचतसृ** (VII. 2. 99.)—त्रि चतुर् इत्येतयोः स्त्रियां वर्तमानयोः विभक्तौ परतो यथासंख्यं तिसृ चतसृ इत्येतावादेशौ भवतः। तिसृ + जस् इति स्थिते, **ऋन्नेभ्यो ङीप्** (IV. 1. 5.) इति स्त्रियां ङीपि प्राप्ते, **न षट्स्वस्रादिभ्यः** (IV. 1. 10.)—षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न भवतः।

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥

एवं ङीपि निषिद्धे, **अचि र ऋतः** (VII. 2. 100.)—तिसृ चतसृ इत्येतयोः अजादौ विभक्तौ परतः ऋकारस्य रेफादेशो भवति। गुणदीर्घयोरुत्वस्याप्यपवादः । **तिस्रः**, तिस्रः, तिसृभिः, तिसृभ्यः, तिसृभ्यः । आमि, तिसृ + आम् इति स्थिते, ह्रस्वत्वेन (VII. 1. 54.) नुडागमं परत्वेन बाधित्वा, अचि र ऋतः (VII. 2. 100.) इति रेफे प्राप्ते, **नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन** (भा.) इति रेफादेशं बाधित्वा नुडेव भवति । तिसृ + नाम् इति जाते, नामि (VI. 4. 3.) इति दीर्घे प्राप्ते, **न तिसृचतसृ** (VI. 4. 4.)—तिसृ चतसृ इत्येतयोः नामि दीर्घो न भवति । ऋवर्णाच्चेति वक्तव्यमिति णत्वम् ; **तिसृणाम्** । सप्तमीबहुवचने—तिसृषु ॥

एवमेव चतसृ-शब्दस्यापि रूपं नेयम् ॥

इति इकारान्तस्त्रीलिङ्गानि ॥

---

## अथ ईकारान्तस्त्रीलिङ्गप्रातिपदिकानि ॥

---

1. ईकारान्तः स्त्रीलिङ्गः कर्त्रीशब्दः । कर्तृ इति स्थिते, **स्त्रियाम्** (IV. 1. 3.) इत्यधिकृत्य, **ऋन्नेभ्यो ङीप्** (IV. 1. 5.)—ऋकारान्तेभ्यो नकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप् भवति । अत्र ङकारो ङी इति सामान्यग्रहणार्थः ; पकारस्तदविघातार्थः । ङ्यन्तत्वात् स्वाद्युत्पत्तिः ; हल्ङ्यादिलोपः ; **कर्त्री** । औजसोः, **दीर्घाज्जसि च** (VI. 1. 105.)—दीर्घात् जसि इचि च परतः पूर्वसवर्णदीर्घो न भवति ; इति पूर्वसवर्णदीर्घप्रतिषेधे कृते यणादेशः ; **कर्त्र्यौ, कर्त्र्यः** ।

सम्बुद्धौ तावत् **यू स्त्र्याख्यौ नदी** (I.4.3.)—ईकारान्तम् ऊकारान्तं च शब्दरूपं स्त्रीलिङ्गं नदीसंज्ञं भवति । **अम्बार्थनद्योर्ह्रस्वः** (VII. 3. 107.)—अम्बार्थानां नद्यन्तानां च ह्रस्वो भवति सम्बुद्धौ परतः । ह्रस्वविधानसामर्थ्यात् गुणो न भवति; सुलोपः; **हे कर्त्रि** । अमि यणादेशं बाधित्वा पूर्वरूपं भवति; **कर्त्रीम्** । ङिद्वचने नदीसंज्ञायाम् आडागमः; वृद्धिः; यणादेशश्च; **कर्त्र्यै** । शसः अन्यत्र बहुश्रेयसीवत्; शसि **कर्त्रीः** ॥

एवं भर्त्री-नेत्री-प्रभृतयः ॥

2. भवती-शब्दस्य भेदः प्रक्रियाविषये । भा दीप्तौ; भा इति स्थिते, **भातेर्डवतुः** (उणादि. 66.)—भातेर्धातोर्डवतुप्रत्ययो भवति । डकारः टिलोपार्थः । भवतु इति स्थिते उकारलोपः; प्रयोजनम् उगित्कार्यार्थः । **उगितश्च** (IV. 1. 6.)—उगिद्भ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति; **भवती** । कर्त्री-शब्दवत् रूपं नेयम् ॥

एवं गोमती-प्रभृतयः

3. यान्ती-शब्दस्य भेदः । या प्रापणे; या इति धातोः शतृप्रत्ययान्ततया निष्पन्नस्य यात् इत्यस्य कृदन्तत्वेन प्रातिपदिकत्वात्, स्त्रीत्वविवक्षायाम् उगितश्च (IV. 1. 6.) इति ङीपि कृते, यात् + ई इति स्थिते, ङीपि नदीसंज्ञायाम्, **आच्छीनद्योर्नुम्** (VII.1.80.)—अवर्णान्तादङ्गादुत्तरस्य शतुर्वा नुमागमो भवति शीनद्योः परतः । यात् इत्यत्र कथं वा नुमागमो भवति? या + अत् इति सवर्णदीर्घे सति शतृप्रत्ययस्य अवर्णान्ताङ्गोत्तरत्वं व्यपदेष्टुं न शक्यते । नैष दोषः; **अन्तादिवच्च** (VI. 1. 85.)—योऽयमेकादेशः स पूर्वं प्रति अन्तवत् परं प्रति आदिवत् भवति इति । **मिदचोऽन्त्यात् परः** (I. 1. 47.)—

अचां सन्निविष्टानां मध्ये अन्त्यादचः परो भवति मिदागमः । नुम् इत्यत्र उकार उच्चारणार्थः; मकारो देशविध्यर्थः; अनुस्वारपरसवर्णौ; **यान्ती** । पक्षे-**याती** । कर्त्री-शब्दवत् प्रक्रिया । याती यान्ती, यात्यौ यान्त्यौ, यात्यः यान्त्यः; इत्यादि रूपं नेयम् ॥

एवं भान्ती-प्रभृतयः ॥

4. भवन्ती-शब्दस्य भेदः । भू सत्तायाम् इति धातोः निष्पन्नस्य शतृप्रत्ययान्तस्य भवत्-शब्दस्य स्त्रीत्वविवक्षायां पूर्ववत् ङीपि कृते, नदी-संज्ञायां, भवत् + ई इति स्थिते, **शप्श्यनोर्नित्यम्** (VII.1.81.)—शप् श्यन् इत्येताभ्यामुत्तरस्य शतुर्नित्यं नुमागमो भवति शीनद्योः परतः । **भवन्ती, भवन्त्यौ, भवन्त्यः**; इत्यादीनि रूपाणि भवन्ति ॥

एवं पचन्ती-प्रभृतयः ॥

दीव्यन्ती-शब्दस्यापि श्यन्प्रत्ययान्तस्य तथैव रूपं नेयम् । दीव्यन्ती, दीव्यन्त्यौ, दीव्यन्त्यः; इत्यादि ॥

5. लक्ष्मी-शब्दस्य भेदः । लक्ष दर्शनाङ्कनयोः; **लक्षेर्मुट् च** (उणादि. 448.)—लक्षेः धातोरीकारप्रत्ययो भवति, तस्य मुडागमश्च संज्ञायां विषये; लक्ष्मी । कृदन्तत्वात् स्वाद्युत्पत्तिः । लक्ष्मी + सु इति स्थिते, कृत्प्रत्ययस्य ईकाररूपत्वेन तदन्तस्य अङ्यन्तत्वात् सुलोपाभावः; रुत्व-विसर्गौ; **लक्ष्मीः** । शेषं कर्त्रीवत् ॥

एवं तरी-तन्त्री-प्रभृतयः ॥

6. क्रोष्टु-शब्दस्य उकारान्तस्य स्त्रीलिङ्गे प्रयोगे प्राप्ते, **स्त्रियां च** (VII. 1. 96.)—स्त्रीवाची क्रोष्टुशब्दः तृजन्तवत् रूपं लभते । क्रोष्टृ इति स्थिते ङीप् भवति; क्रोष्ट्री; स्वाद्युत्पत्तिश्च । कर्त्रीशब्दवत् प्रक्रिया ॥

7. सखीशब्दस्य तु सखिशब्दात् इकारान्तात् स्त्रीत्वविवक्षायां **सख्यशिश्वीति भाषायाम्** (IV. 1. 62.) इत्यनेन ङीषन्ततया रूपं भवति। अस्य तु अत्र स्वाद्युत्पत्तौ, **प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्** (परि. 71.) इति परिभाषया, **अनङ् सौ** (VII. 1. 93.) इति सखिशब्दात् विहितस्य अनङादेशस्य प्राप्तौ, **विभक्तौ लिङ्गविशिष्टाग्रहणम्** (परि. 72.) इति विभक्तिकार्ये निषेधात् स न भवति। कर्त्रीशब्दवद्रूपम्॥

8. स्त्रीशब्दस्य भेदः। स्त्यै शब्दसंघातयोः; **स्त्यायतेर्ड्रट्** (उणा. 615.)—स्त्रीत्वे गम्यमाने स्त्यायतेर्धातोः ड्रट् प्रत्ययो भवति। डकारष्टिलोपार्थः; टकारो ङीबर्थः। स्त्र इति स्थिते, पूर्ववत् प्रातिपदिकसंज्ञायां, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्करप्ख्युनाम्** (IV.1.15.)—टिदादिप्रत्ययान्तेभ्यः शब्देभ्यः स्त्रियां ङीप् प्रत्ययो भवति। एवं स्त्र + ई इति जाते, स्त्र इत्यस्य भसंज्ञायां, **यस्येति च** (VI. 4. 148.)—भस्य इवर्णावर्णयोर्लोपो भवति ईकारप्रत्यये भसंज्ञानिमित्ते तद्धिते च परतः; स्त्री। प्रथमैकवचने सौ **स्त्री**। द्विवचनादिषु, **स्त्रियाः** (VI. 4. 79.)—स्त्रीशब्दस्य इयङादेशो भवति अजादौ विभक्तौ परतः; **स्त्रियौ, स्त्रियः**। सम्बुद्धौ नेयङुवङ्स्थानावस्त्री (I. 4. 4.) इति अत्र नदीसंज्ञानिषेधो नास्ति। एवं च नदीसंज्ञायाम् अम्बार्थनद्योः (VII. 3. 107.) इति ह्रस्वः; **हे स्त्रि**। **वाम्शसोः** (VI. 4. 80.)—अमि शसि च परतः स्त्रीशब्दस्य वा इयङादेशो भवति; **स्त्रियम्, स्त्रियौ, स्त्रियः**। पक्षे—**स्त्रीम्,** स्त्रियौ, **स्त्रीः**। आमि परतः परत्वात् नुट्; **स्त्रीणाम्**। शेषं कर्त्रीशब्दवत्॥

9. श्रीशब्दस्य भेदः । श्रिञ् सेवायाम् इति धातोः क्विपि दीर्घे च क्विपः सर्वलोपे, श्री इति स्थिते, कृदन्तत्वात् स्वाद्युत्पत्तिः । अङ्यन्तत्वात् सुलोपाभावः; रुत्वविसर्गौ; **श्रीः** । द्विवचनादिषु, अचि श्नुधात्वित्यादिना (VI. 4. 77.) इयङादेशः । सम्बुद्धौ, **नेयङुवङ्स्थानावस्त्री** (I. 4. 4.)–ईकारान्तमूकारान्तं च शब्दरूपं स्त्र्याख्यम् इयङुवङ्स्थानं नदीसंज्ञं न भवति स्त्रीशब्दं वर्जयित्वा ; इति नदीसंज्ञाप्रतिषेधात् ह्रस्वसुलोपौ न भवतः ; **हे श्रीः** । ङिद्वचने **ङिति ह्रस्वश्च** (I. 4. 6.) इति विकल्पेन नदीसंज्ञायां वृद्धिरियङादेशश्च ; अन्यत्र इयङेव ; **श्रियै श्रिये, श्रियाः श्रियः** । आमि, **वामि** (I. 4. 5.)—आमि परतः इयङुवङ्स्थानौ च यू वा नदीसंज्ञौ भवतः स्त्रीशब्दं वर्जयित्वा ; **श्रीणाम् श्रियाम्** ॥

इति ईकारान्तस्त्रीलिङ्गानि ॥

---

अथ उकारान्ताद्यजन्तस्त्रीलिङ्गानि ॥

---

1. उकारान्तः स्त्रीलिङ्गस्तनुशब्दः । स च शरीरवाची स्त्रीलिङ्गः; अल्पार्थस्तु त्रिलिङ्गः । रुचिशब्दवत् प्रक्रिया । **तनुः, तनू, तनवः**; इत्यादि । एवं रज्जु-धेन्वादयः ॥

2. ऊकारान्तः स्त्रीलिङ्गो जम्बूशब्दः । अस्य लक्ष्मीशब्दवत् प्रक्रिया । **जम्बूः, जम्ब्वौ, जम्ब्वः**; इत्यादि । एवं चमू-वधू-यवागू-प्रभृतयः ॥

भ्रूशब्दस्य भेदः । अस्य श्रीशब्दवत् प्रक्रिया । **भ्रूः, भ्रुवौ, भ्रुवः**; इत्यादि ॥

वर्षाभूशब्दस्य पुंवद्यणादेशो भवति। नदीकार्ये विशेषः। संबुद्धौ नदीत्वात् ह्रस्वसुलोपौ ; **हे वर्षाभु** । ननु नेयङुवङ्स्थानावस्त्री (I. 4. 4.) इति नदीसंज्ञाप्रतिषेधेन अत्र भवितव्यम्। नैतदस्ति ; यत्रेयङुवङोः अभिनिर्वृत्तिरस्ति तत्रानेन प्रतिषेधः ; नान्यत्र यणभिनिर्वृत्तिस्थाने अत एव नदीत्वात् आमि नुडागमः । **एकाजुत्तरपदे णः** (VIII. 4. 12.)—एकाजुत्तरपदे समासे प्रातिपदिकान्तनुमविभक्तिषु यो नकारः तस्य पूर्वपदस्थात् निमित्तात् उत्तरस्य णकारादेशो भवति । इति विभक्तिस्थनुडागमनकारस्य निमित्तसमानपदस्थत्वाभावेऽपि णकारः ; **वर्षाभूणाम्** । शेषं जम्बूशब्दवत् ॥

पुनर्भूशब्दस्यापि एवमेव प्रक्रिया । यणादेशस्तु पुनःपूर्वस्य भुवो यण् वक्तव्यः (वा. VI. 4. 84.) इति भवति ॥

3. ऋकारान्तः स्त्रीलिङ्गो मातृशब्दः। जननीवाचकोऽयम् स्वस्रादिसाहचर्यात्। ऋन्नेभ्यो ङीप् (IV.1. 5.) इति ङीपि प्राप्ते, न षट्स्वस्रादिभ्यः (IV. 1. 10.) इत्यत्र स्त्रियां ङीप्प्रत्ययो न भवति । शसः अन्यत्र पितृशब्दवत् रूपं नेयम् । शसि **मातॄः** ॥

एवं ननान्दृ-प्रभृतयः ॥

परिच्छेत्तृवाचकमातृशब्दस्य तु गणबहिर्भावात् स्त्रियां ङीप् प्रत्ययो भवति ; कर्त्रीवत् रूपं नेयम् ॥

4. स्वसृशब्दस्यापि मातृशब्दवत् प्रक्रिया। सर्वनामस्थाने परं विशेषः। स्वसृ+औ इति स्थिते, ऋतो ङिसर्वनामस्थानयोः (VII. 3. 110.) इति गुणः ; अप्तृन् (VI.4. 11.) इत्यादिना दीर्घः ; **स्वसारौ, स्वसारः** ; इत्यादि ॥

5. ॠकार-ऌकार-एकारान्ता अप्रसिद्धाः ॥

6. ओकारान्तः स्त्रीलिङ्गो गोशब्दः । पुंलिङ्गगोशब्दवत्; **गौः, गावौ, गावः**; इत्यादि । एवं द्योशब्दः ॥

7. ऐकारान्तः स्त्रीलिङ्गो रैशब्दः । पुंलिङ्गरैशब्दवत्; **राः, रायौ, रायः**; इत्यादि ॥

8. औकारान्तः स्त्रीलिङ्गो नौशब्दः । पुंलिङ्गग्लौशब्दवत्; **नौः, नावौ, नावः**; इत्यादि ॥

---

इत्यजन्तस्त्रीलिङ्गप्रातिपदिकानि ॥



## अथाजन्तनपुंसकलिङ्गप्रातिपदिकानि ॥

1. अकारान्तनपुंसकलिङ्गः कुण्डशब्दः । कुण्ड इति स्थिते स्वाद्युत्पत्तिः । **स्वमोर्नपुंसकात्** (VII. I. 23.)—नपुंसकलिङ्गादुत्तरयोः सु अम् इत्येतयोः विभक्त्योर्लुक् भवति । इति स्वमोर्लुकि प्राप्ते, **अतोऽम्** (VII.1.24.)—अकारान्तान्नपुंसकादङ्गादुत्तरयोः सु अम् इत्येतयोः अम् इत्ययमादेशो भवति ; अमि पूर्वः (VI.1.107.) ; **कुण्डम्** । द्विवचने, **जसः शी** (VII.1.17.) **औङ आपः** (VII.1.18.) इति वर्तमाने, **नपुंसकाच्च** (VII.1.19.)—नपुंसकादङ्गादुत्तरस्यौङः शी इत्ययमादेशो भवति । **यचि भम्** (I. 4. 18.) इति भसंज्ञायां, **यस्येति च** (VI. 4. 148.) इत्यकारलोपे प्राप्ते, **औङः श्यां प्रतिषेधो वाच्यः** (वा. VI. 4. 148.) इत्यकारलोपो न भवति; गुणः ; **कुण्डे** । बहुवचने **जश्शसोः शिः** (VII. 1. 20.)—नपुंसकादङ्गादुत्तरयोः जस्-शसोः शि इत्ययमादेशो भवति । **शि सर्वनामस्थानम्** (I.1.42.)—नपुंसकलिङ्गसम्बन्धी यः शिः स सर्वनामस्थानसंज्ञो भवति । **इदितो नुम् धातोः** (VII. 1. 58.) इति वर्तमाने, **नपुंसकस्य झलचः** (VII. 1. 72.)—झलन्तस्याजन्तस्य च नपुंसकस्याङ्गस्य नुमागमो भवति सर्वनामस्थाने परतः; सर्वनामस्थाने चासम्बुद्धौ (VI. 4.8.) इति दीर्घः ; **कुण्डानि** । सम्बुद्धौ सोः परत्वात् अमादेशे पूर्वरूपे च कृते, एङ्ह्रस्वात् सम्बुद्धेः (VI. 1. 69.) इति हल्मात्रस्य मकारस्य लोपः; **हे कुण्ड**, हे कुण्डे, हे कुण्डानि । शेषं वृक्षशब्दवत् । एवं वस्त्र-वसन-तुण्ड-नेत्रादयः ॥

2. सर्वनामशब्दानामकारान्तानां नपुंसकलिङ्गानां प्रथमाद्वितीययोः कुण्डशब्दवत्। शेषं पुंलिङ्गसर्वशब्दवत्। सर्वम्, सर्वे, सर्वाणि; इत्यादि॥

कतरादीनाम् अष्टानाम् इतरान्यान्यतरशब्दानां च भेदः। **अद्ड् डतरादिभ्यः पञ्चभ्यः** (VII. 1. 25.)—कतर कतम यतर यतम ततर ततम एकतर एकतम इति डतरप्रत्ययान्तेभ्यो डतम-प्रत्ययान्तेभ्यश्च इतर अन्य अन्यतर इत्येतेभ्यः पञ्चभ्यः नपुंसकलिङ्गेभ्य उत्तरयोः स्वमोः अद्डादेशो भवति।

एको वै डतरान्तश्च डतमान्तस्तथापरः।
अन्येतरौ तरान्तोऽन्यः सूत्रे पञ्चविधं स्मृतम्॥

अमोऽपवादः। कतर+अद्ड् इति स्थिते डकारलोपः। कतरद् इति जाते, **वावसाने** (VIII. 4. 56.)—अवसाने च विषये झलां वा चरादेशो भवति; **कतरत्, कतरद्, कतरे, कतराणि**। संबुद्धिविषये

अपृक्तश्चेदमो दोषो निवृत्ते डतरादिषु।
अद्ड्डित्वाड्डतरादीनां न लोपो न च दीर्घता॥

इति **हे कतरत्, हे कतरद्, हे कतरे, हे कतराणि**। द्वितीयायां **कतरत्, कतरद्, कतरे, कतराणि**। शेषं सर्वशब्दवत्॥

एकतरशब्दस्य तु भेदः। अस्य सर्वत्र अद्डादेशप्रतिषेध इष्यते। सर्वशब्दवत् रूपं नेयम्; **एकतरम्, एकतरे, एकतराणि**॥

अव्युत्पन्नस्य अन्यतमशब्दस्य अत्र विधानाभावात् **अन्यतमम्** इत्येव रूपं नेयम्॥

उभयोरिदमन्यतरत् कतरद्यतरत्ततरत् पुनरेकतरम्।
इतरत्पुनरन्यदथान्यतमं कतमत्प्रभृतिष्विदमेकतमत्॥

3. अकारान्तस्य नपुंसकलिङ्गस्य अजरशब्दस्य भेदः । अजर + सु इति स्थिते, सोः अमादेशे कृते, **जराया जरसन्यतरस्याम्** (VII. 2. 101.) इति जरसादेशे प्राप्ते, **सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य** (परि. 85.) इति अकारान्तत्वविघातकजरसादेशो न भवति; **अजरम्** । द्विवचने **अजरसी**; पक्षे **अजरे** । बहुवचने शिभावे कृते, अजर+इ इति स्थिते, नुमः परत्वात् जरसादेशे, झलन्तत्वात् नुमि, अजरनस् + इ इति जाते, **सान्त महतस्संयोगस्य** (VI 4. 10.)—सकारान्तस्य संयोगस्य यो नकारः महतश्च तस्य उपधायाः दीर्घो भवति सर्वनामस्थाने असंबुद्धौ परतः; **अजरांसि** । पक्षे—**अजराणि** । अमि लुकः अपवादम् अमादेशं बाधित्वा परत्वात् जरसि पूर्वोक्तपरिभाषया न लुक्; **अजरसम्** । पक्षे—**अजरम्** । तृतीयादिषु पुंवत् ॥

4. हृदय-उदक-आस्य-शब्दानां शसादिषु पद्दन्नोमास् (VI. 1. 63.) इत्यादिना क्रमेण हृद् उदन् आसन् इत्यादेशा भवन्ति वा । **हृन्दि, हृदा, हृद्भ्याम्** । उदन्नादेशविषये उपधादीर्घः, **उदानि**; **अल्लोपोऽनः** (VI. 4. 134.) इति अल्लोपः, **उद्ना**; नलोपः, **उदभ्याम्** । एवमेव **आसानि, आस्ना, आसभ्याम्**; इत्यादि । आदेशाभावपक्षे कुण्डशब्दवत् । मांसशब्दस्यापि शसादौ मांसपृतनासानूनाम् (VI. 1. 63.) इत्यादिना वार्तिकेन मांस् इत्यादेशो भवति वा । **मांसि, मांसा, मांभ्याम्**; इत्यादि । पक्षे कुण्डशब्दवत् ॥

इति अकारान्तनपुंसकलिङ्गप्रातिपदिकानि ॥

---

अथ आकारान्तनपुंसकलिङ्गानि ॥

आकारान्तः सोमपाशब्दः; तस्य क्लीबे विशेषः । **ह्रस्वो नपुंसके प्रातिपदिकस्य** (I. 2. 47.)—नपुंसके वर्तमानस्य प्रातिपदिकस्य ह्रस्वो भवति । कुण्डशब्दवत् प्रक्रिया; **सोमपम्, सोमपे, सोमपानि**; इत्यादि । एवं क्षीरपादयः ॥

इति आकारान्तनपुंसकलिङ्गप्रातिपदिकानि ॥

अथ इकारान्तनपुंसकलिङ्गानि ॥

1. इकारान्तनपुंसकलिङ्गो वारिशब्दः । वारि इति स्थिते स्वाद्युत्पत्तिः । स्वमोर्नपुंसकात् (VII. 1. 23.) इति सुपो लुक्; **वारि** । औङः शीभावः ; **इकोऽचि विभक्तौ** (VII. 1. 73.)—इगन्तस्य नपुंसकस्याङ्गस्य नुमागमो भवत्यजादौ विभक्तौ परतः; **वारिणी** । जस्शसोः शिः इत्यादेशो नुमागमश्च ; उपधादीर्घः ; **वारीणि** । संबुद्धौ वारि + सु इति स्थिते स्वमोर्नपुंसकात् इति सोर्लुक्; **हे वारि** । अत्र लुकि कृतेऽपि प्रत्ययलोपे प्रत्ययलक्षणम् इत्यनेन, वारिशब्दस्य संबुद्धिबुद्ध्या, ह्रस्वस्य गुणः (VII. 3. 108.) इति गुणोऽपि भवति; **हे वारे**। इकोऽचि विभक्तौ इत्यत्र अज्ग्रहणात्, न लुमताङ्गस्य (I.1.63.) इति विहितः प्रत्ययलक्षणनिषेधः वैकल्पिको भवति; एवं च संबुद्धौ रूपद्वयं सिद्धम् । तृतीयैकवचने नुमः परत्वान्नाभावः ; **वारिणा** । ङिद्वचने, घेर्ङिति (VII. 3. 111.) इति गुणे प्राप्ते, **वृद्ध्यौत्वतृज्वद्भाव-**

**गुणेभ्यो नुम् पूर्वविप्रतिषेधेन** (भा. I. 4.2.) इति गुणं बाधित्वा नुमेव भवति; **वारिणे, वारिणः**; इत्यादि । आमि नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन (भा. I. 4. 2.) इति नुट् भवति । नुम्नुटोः को वा विशेषः? नुमि सति अङ्गावयवत्वात् नामि (VI. 4. 3.) इति दीर्घो न स्यात्; **वारीणाम्, वारिणि, वारिणोः** । हलादौ कविशब्दवत् ॥

2. अस्थि दधि सक्थि अक्षि इत्येतेषां प्रथमाद्वितीययोः वारिशब्दवत् । तृतीयादिष्वजादिषु, **इकोऽचि विभक्तौ** (VII. 1. 73.) **तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य** (VII. 1. 74.) इति वर्तमाने, **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः** (VII.1.75.) —अस्थि दधि सक्थि अक्षि इत्येतेषां नपुंसकलिङ्गानां तृतीयादिष्वजादिषु परतः अनङादेशो भवति; स चोदात्तः । अङावितौ । **यचि भम्** (I. 4. 18.) इति भसंज्ञायाम्, **अङ्गस्य** (VI. 4. 1.) **भस्य** (VI.4.129.) इत्याधिकृत्य, **अल्लोपोऽनः** (VI. 4. 134.)—अन् इत्येवमन्तस्य भसंज्ञकस्याङ्गस्य अनः अकारस्य लोपो भवति; **अस्थ्ना, अस्थ्ने, अस्थ्नः, अस्थ्नः, अस्थ्नोः, अस्थ्नाम्** । ङौ तु अनङि कृते **विभाषा ङिश्योः** (VI. 4. 136.)—अन्नन्तस्य भसंज्ञकस्याङ्गस्य अनः अकारस्य ङिश्योः परतो विभाषा लोपो भवति; **अस्थनि अस्थ्नि** । हलादौ वारिशब्दवत् ॥

एवं दधि-प्रभृतयः ॥

3. द्विशब्दस्य भेदः । त्यदाद्यत्वे (VII. 1. 102.) कृते कुण्डशब्दवत् । द्वे, द्वे, द्वाभ्याम्, द्वाभ्याम्, द्वाभ्याम्, द्वयोः, द्वयोः ॥

त्रिशब्दस्य भेद: । **जश्शसो: शि:** (VII. 1. 20.) इति शि: इत्यादेशो भवति; नुमागमश्च; उपधादीर्घ:; णत्वञ्च; **त्रीणि, त्रीणि** । शेषं पुंवत् ॥

4. शुचिशब्दस्य भेद: । प्रथमाद्वितीययोर्वारिशब्दवत् । तृतीयादिष्वजादिषु **इकोऽचि विभक्तौ** (VII. 1. 73.) इत्यधिकृत्य, **तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य** (VII. 1. 74.)—तृतीयादिषु अजादिषु विभक्तिषु परतो भाषितपुंस्कमिगन्तनपुंसकलिङ्गं पुंवत् भवति गालवस्य आचार्यस्य मतेन । यत् पुंसि कार्यं तत् इहापि भवति; यथा पुंसि ह्रस्वनुमौ न भवत: तथा अत्रापि न भवत: इत्यर्थ: । तृतीयायामविशेष:, **शुचिना** । पुंवद्भावपक्षे कविशब्दवत्; **शुचिने शुचये, शुचिन: शुचे:, शुचिन: शुचे:, शुचिनो: शुच्यो:, शुचिनि शुचौ, शुचिनो: शुच्यो:** । शेषं वारिवत् ॥

इति इकारान्तनपुंसकलिङ्गप्रातिपदिकानि ॥

---

अथ ईकारान्तनपुंसकलिङ्गानि ॥

---

ईकारान्तो ग्रामणीशब्द: । तस्य नपुंसकलिङ्गे विशेष: । **ह्रस्वो नपुंसके प्रातिपदिकस्य** (I. 2. 47.) इति ह्रस्वत्वम् । प्रथमाद्वितीययोर्वारिशब्दवत् । तृतीयादिष्वजादिषु पुंवद्भावपक्षे पुंलिङ्गग्रामणीशब्दवत् ॥

ग्रामणि, ग्रामणिनी, ग्रामणीनि । हे ग्रामणि, हे ग्रामणिनी, हे ग्रामणीनि । ग्रामणि, ग्रामणिनी, ग्रामणीनि । ग्रामण्या ग्रामणिना, ग्राम-

णिभ्याम्, ग्रामणिभिः । ग्रामण्ये ग्रामणिने, ग्रामणिभ्याम्, ग्रामणिभ्यः । ग्रामण्यः ग्रामणिनः, ग्रामणिभ्याम्, ग्रामणिभ्यः । ग्रामण्यः ग्रामणिनः, ग्रामण्योः ग्रामणिनोः, ग्रामणीनाम् । ग्रामण्याम् ग्रामणिनि, ग्रामण्योः ग्रामणिनोः, ग्रामणिषु ॥

एवं सेनानी-सुधी-प्रभृतयः । अत्र पुंवद्भावपक्षे यथायथं यणियङादेशौ भवतः ॥

इति ईकारान्तनपुंसकलिङ्गप्रातिपदिकानि ॥

---

अथ उकारान्तनपुंसकलिङ्गप्रातिपदिकानि ॥

---

1. उकारान्तनपुंसकलिङ्गः त्रपुशब्दः । वारिशब्दवत् प्रक्रिया । सम्बुद्धौ सोर्लुकि कृते प्रत्ययलक्षणपक्षे **ह्रस्वस्य गुणः** (VII. 3. 108.) इति गुणः; **हे त्रपो**; अन्यथा **हे त्रपु** । न लुमताङ्गस्य (I. 1. 63.) इति अनित्योऽयं प्रत्ययलक्षणप्रतिषेधः । कुतोऽस्यानित्यत्वमवसीयते? इकोऽचि विभक्तौ (VII. 1. 73.) इत्यत्राज्ग्रहणात् । असत्यज्ग्रहणे हलादावपि नुम् कस्मात् न स्यात्? अस्तु; लोपो भविष्यति । कथम्? स्वादिष्वसर्वनामस्थाने (I. 4. 17.) इति पदसंज्ञायां, नलोपः प्रातिपदिकान्तस्य (VIII. 2. 7.) इति लोपविधानात् । एवं तर्हि सम्बुद्धौ नुम्श्रवणं स्यात्; **न ङिसम्बुद्ध्योः** (VIII. 2. 8.)—ङौ सम्बुद्धौ च परतः नलोपो न भवति—इति नलोपप्रतिषेधात् । सम्बुद्धौ सोर्लुकि कृते प्रत्ययलक्षणप्रतिषेधात् नुम् न भविष्यति । एवमनर्थकमज्ग्रहणं प्रत्ययलक्षणप्रतिषेधस्य अनित्यतां ज्ञापयति । एवं

च सम्बुद्धावपि नुम् प्राप्नोति; अतस्तन्निवृत्त्यर्थमज्ग्रहणं कृतम् । तेन सम्बुद्धावपि पक्षे गुणः इति युक्तम् ॥

त्रपु, त्रपुणी, त्रपूणि । हे त्रपो हे त्रपु, हे त्रपुणी, हे त्रपूणि । त्रपु, त्रपुणी, त्रपूणि । त्रपुणा, त्रपुभ्याम्, त्रपुभिः । त्रपुणे, त्रपुभ्याम्, त्रपुभ्यः । त्रपुणः, त्रपुभ्याम्, त्रपुभ्यः । त्रपुणः, त्रपुणोः, त्रपूणाम् । त्रपुणि, त्रपुणोः, त्रपुषु ॥

2. मृदुशब्दस्य भेदः । प्रथमाद्वितीययोः त्रपुशब्दवत् । तृतीयादिष्वजादिषु पुंवद्भावपक्षे पुंलिङ्गकारुशब्दवत् । अन्यत्र त्रपुशब्दवत् । **मृदु, मृदुनी, मृदूनि**; इत्यादि । एवं लघुप्रभृतयः ॥

सानुशब्दस्य शसादौ मांसपृतनासानूनाम् इत्यादिवार्तिकेन स्नु इत्यादेशो वा भवति । **स्नूनि, स्नुना, स्नुभ्याम्**; इत्यादि । पक्षे त्रपुवत् ॥

प्रियक्रोष्टुशब्दस्य जस्-शसोः शिभावे कृते तृज्वद्भावात् पूर्वविप्रतिषेधेन नुम्; **प्रियक्रोष्टु, प्रियक्रोष्टुनी, प्रियक्रोष्टूनि**; इत्यादि । तृतीयादावचि पुंवद्भावे क्रोष्टुशब्दवत्; पक्षे त्रपुशब्दवत् ॥

इति उकारान्तनपुंसकलिङ्गप्रातिपदिकानि ॥

---

अथ ऊकारान्तादीनि अजन्तनपुंसकलिङ्गप्रातिपदिकानि ॥

---

1. ऊकारान्तः खलपूशब्दः । तस्यापि नपुंसकलिङ्गे विशेषः । ह्रस्वो नपुंसके प्रातिपदिकस्य (I. 2. 47.) इति ह्रस्वत्वम् । प्रथमाद्वितीययोः त्रपुशब्दवत् । तृतीयादिष्वजादिषु पुंवद्भावपक्षे पुंलिङ्गखलपूशब्दवत्; अन्यत्र त्रपुशब्दवत् ॥

एवं काण्डलूप्रभृतयः ॥

2. ऋकारान्तो नपुंसकलिङ्गः कर्तृशब्दः । प्रथमाद्वितीययोः लुक्-शीभाव-शिभाव-नुम्-दीर्घाः पूर्ववत् । सम्बुद्धौ पूर्ववत् वा गुणः सुलोपश्च । तृतीयादिष्वजादिषु पुंवद्भावपक्षे पुंलिङ्गकर्तृशब्दवत् ; अन्यत्र नुमागमः । **कर्तृ, कर्तृणी, कर्तॄणि ; हेकर्तृ हेकर्तः ; कर्त्रा कर्तृणा ;** इत्यादि ॥

एवं हर्तृ-नेतृ-भर्तृ-प्रभृतयः ॥

3. ओकारान्तः प्रद्योशब्दः ; प्रकृष्टा द्यौः यस्मिन् तत् दिनम् इति विग्रहः । प्रद्यो इति स्थिते नपुंसकत्वात् ह्रस्वे प्राप्ते, **एच इग्घ्रस्वादेशे** (I.1.48.)—एचः स्थाने ह्रस्वादेशे कर्तव्ये इगेव ह्रस्वो भवति नान्यः । इति प्रद्यु इति जाते स्वाद्युत्पत्तौ प्रथमाद्वितीययोः त्रपुशब्दवत् ; तृतीयादिष्वजादिषु पुंवद्भावपक्षे पुंलिङ्गगोशब्दवत् ; अन्यत्र त्रपुशब्दवत् । **प्रद्यु, प्रद्युनी, प्रद्यूनि ; हे प्रद्यो हे प्रद्यु ; प्रद्युना प्रद्यवा ;** इत्यादि । केषांचिदभिप्रायानुसारेण एजन्तनपुंसकलिङ्गशब्दानां पुंवद्भावो नास्ति, तेषां शब्दानाम् इगन्तदशायां भाषितपुंस्कत्वाभावात् ॥

4. ऐकारान्तः अतिरैशब्दः ; रायमतिक्रान्तं ब्राह्मणकुलमिति विग्रहः । अतिरै इति स्थिते, ह्रस्वो नपुंसके प्रातिपदिकस्य (I. 2. 47.) इति ह्रस्वत्वम् ; एच इग्घ्रस्वादेशे (I. 1. 48.) इति इकारान्तत्वम् । अतिरि इति जाते वारिशब्दवत् प्रक्रिया । तृतीयैकवचने परत्वान्नाभावः ; **अतिरिणा । एकदेशविकृतमनन्यवद्भवति** इति न्यायेन, रायो हलि (VII. 2. 85.) इत्याकारादेशः ; **अतिराभ्याम्** । आमि, ह्रस्वनद्यापो नुट् (VII. 1. 54.) इति नुडागमो भवति ; अत्र रायो हलि इत्याकारादेशे प्राप्ते **सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य**

इति आकारादेशो न भवति; नामि (VI. 4. 3.) इति दीर्घस्तु सूत्रारम्भसामर्थ्यात् परिभाषां बाधते; **अतिरीणाम्** । अन्यत्र वारिशब्दवत् । पुंवद्भावपक्षे पुंलिङ्गरैशब्दवत् ॥

5. औकारान्तः अतिनौशब्दः; नावमतिक्रान्तं निषादकुलमिति विग्रहः । नपुंसके विशेषः; इग्रूपह्रस्वत्वम्; त्रपुशब्दवत् प्रक्रिया । पुंवद्भावपक्षे ग्लौशब्दवत् । **अतिनु, अतिनुनी, अतिनूनि**; इत्यादि ।

---

**इत्यजन्तनपुंसकलिङ्गप्रातिपदिकानि ॥**



## अथ हलन्तशब्दा यथासम्भवमुच्यन्ते ॥

---

### हलन्तपुंलिङ्गप्रकरणम् ॥

---

अथ हकारान्तपुंलिङ्गप्रातिपदिकानि ॥

---

1. हकारान्तः पुंलिङ्गः श्वलिह् इति शब्दः । लिह आस्वादने; श्वन् इत्युपपदम् ; श्वानं लेढीति विग्रहः ; क्विप्प्रत्ययान्तः । कृदन्तत्वात् प्रातिपदिकत्वेन स्वाद्युत्पत्तिः । श्वलिह् + सु इति स्थिते, सुलोपः । **हो ढः** (VIII. 2. 31.)—धातोर्हकारस्य ढकारादेशो भवति झलि परतः पदान्ते च । एवं श्वलिढ् इति जाते, **झलां जशोऽन्ते** (VIII.2.39.) **वावसाने** (VIII. 4. 56.) इति क्रमेण **श्वलिट् श्वलिड्** इति भवतः । श्वलिट् श्वलिड्, श्वलिहौ, श्वलिहः । संबोधनप्रथमायां पूर्ववत् । श्वलिहम्, श्वलिहौ, श्वलिहः । श्वलिहा, श्वलिड्भ्याम्, श्वलिड्भिः । श्वलिहे, श्वलिड्भ्याम्, श्वलिड्भ्यः । श्वलिहः, श्वलिड्भ्याम्, श्वलिड्भ्यः । श्वलिहः, श्वलिहोः, श्वलिहाम् । श्वलिहि, श्वलिहोः ; सप्तमीबहुवचने—खरि च (VIII. 4. 55.) इति चर्त्वम् ; श्वलिट्सु ॥

एवं मधुलिहादयः ॥

2. गोदुह् इति शब्दस्य भेदः । दुह प्रपूरणे; गां दोग्धीति विग्रहः ; क्विप्प्रत्यये कृदन्तत्वात् स्वाद्युत्पत्तिः ; सुलोपश्च । हो ढः (VIII.2.31.) इति ढत्वे प्राप्ते, **दादेर्धातोर्घः** (VIII. 2. 32.)—दकारादेर्धातोः

हकारस्य घकारादेशो भवति झलि परतः पदान्ते च । गोदुघ् इति स्थिते, **एकाचो बशो भष् झषन्तस्य स्ध्वोः** (VIII. 2. 37.)—धातोरवयवो य एकाच् झषन्तस्तदवयवस्य बशः स्थाने भषादेशो भवति सकारे ध्वे च परतः पदान्ते च । गोधुघ् इति जाते, झलां जशोऽन्ते (VIII. 2. 39.) इति गोधुग् इति भवति; वावसाने (VIII. 4. 56.) इति **गोधुक्**; पक्षे **गोधुग्** । सर्वनामस्थानादन्यत्र, **स्वादिष्वसर्वनामस्थाने** (I. 4. 7.)—स्वादावसर्वनामस्थाने परतः पूर्वं पदसंज्ञं भवति । इति पदसंज्ञायां **यचि भम्** (I. 4. 18.) इति भसंज्ञायां च प्राप्तायाम्, **आकडारादेका संज्ञा** (I. 4. 1.)—कडाराः कर्मधारये (II. 2. 38.) इति वक्ष्यति; आकडारादित्येतस्मात् कडारसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः तत्रैकस्यैव संज्ञा भवतीति वेदितव्या, या परा अनवकाशा च । इति अजादिषु स्वादिषु परतः भसंज्ञा; हलादिषु पदसंज्ञा । अङ्गसंज्ञया भसंज्ञापदसंज्ञयोः समावेशो वक्तव्यः । शसादावचि भत्वात् न भष्भावः । भ्यामादौ हलि पदत्वात् भष्भावजश्त्वे भवतः ॥ **गोधुक् गोधुग्, गोदुहौ, गोदुहः**; सम्बुद्धावपि प्रथमाविभक्तिवत्; **गोदुहम्, गोदुहौ, गोदुहः; गोदुहा, गोधुग्भ्याम्, गोधुग्भिः; गोदुहे, गोधुग्भ्याम्, गोधुग्भ्यः; गोदुहः, गोधुग्भ्याम्, गोधुग्भ्यः; गोदुहः, गोदुहोः, गोदुहाम्; गोदुहि, गोदुहोः**; सप्तमीबहुवचने—खरि च (VIII. 4. 55.) इति चर्त्वम्; षत्वम्; **गोधुक्षु** ॥

एवं दण्डदह् काष्ठदह् रत्नदुह् इत्यादयः ॥

3. मित्रद्रुह् इति शब्दस्य भेदः । द्रुह जिघांसायाम्; मित्राय द्रुह्यतीति विग्रहः; क्विप्प्रत्ययान्तत्वप्रातिपदिकत्वस्वाद्युत्पत्तयः पूर्ववत्; सुलो-

पश्च । मित्रद्रुह् इत्यत्र नित्यं घत्वे प्राप्ते, **वा द्रुहमुहष्णुहष्णिहाम्** (VIII. 2. 33.)—द्रुह जिघांसायाम्, मुह वैचित्त्ये, ष्णुह उद्गिरणे, ष्णिह प्रीतौ, इत्येतेषां धातूनां हकारस्य वा घकारादेशो भवति झलि परतः पदान्ते च । घत्वाभावे, हो ढः (VIII. 2. 31.) इति ढत्वमेव भवति । उभयत्रापि भष्भावश्च जश्त्वचर्त्वे । **मित्रध्रुक् मित्रध्रुट् मित्रध्रुग् मित्रध्रुड्, मित्रद्रुहौ, मित्रद्रुहः** । भ्यामि भिसि च—**मित्रध्रुग्भ्याम् मित्रध्रुड्भ्याम्, मित्रध्रुग्भिः मित्रध्रुड्भिः** । एवमेवान्यत्र हलादौ । शेषं श्वलिट्शब्दवत् । एवं वित्तमुह् इत्यादयः ॥

4. अनडुह् इति शब्दस्य भेदः । वह प्रापणे ; अनो वहतीति विग्रहः । **अनसि वहेः क्विबनसो डश्च** ( ) इति क्विप् प्रत्ययो भवति ; अनसः सकारस्य डकारादेशो भवति च । एवं क्विबन्ततया निष्पन्नस्य अनडुह् इति शब्दस्य प्रातिपदिकत्वेन स्वाद्युत्पत्तिः । अनडुह् + सु इति स्थिते, **चतुरनडुहोरामुदात्तः** (VII. 1. 98.)—चतुर् अनडुह् इत्येतयोः सर्वनामस्थाने परतः आमागमो भवति, स चोदात्तः । अत्र मकारः **मिदचोऽन्त्यात्परः** (I. 1. 47.) इति विशेषणार्थः । अनड्वाह् इति जाते, **सावनडुहः** (VII. 1. 82.)—सौ परतः अनडुह्शब्दस्य नुमागमो भवति । अत्रापि मकारो देशविध्यर्थः । अनड्वान्ह् + सु इति स्थिते, हल्ङ्यादिना (VI. 1. 68.) सुलोपः । संयोगान्तस्य लोपः (VIII. 2. 23.) इति संयोगान्तस्य पदान्तस्य हकारस्य लोपः । नलोपः प्रातिपदिकान्तस्य (VIII. 2. 7.) इति नकारलोपे प्राप्ते, पूर्वत्रासिद्धम् (VIII. 2. 1.) इति संयोगान्तस्य लोपस्यासिद्धत्वात्, नकारलोपो न भवति । **अनड्वान्, अनड्वाहौ, अनड्वाहः** । एवमेव अन्यत्रापि सर्वनामस्थाने रूपं नेयम् । सम्बुद्धौ तु अनडुह् + सु इति स्थिते,

आमि प्राप्ते, **अम् सम्बुद्धौ** (VII. 1. 99.)—चतुर् अनडुह् इत्येतयोरमागमो भवति सम्बुद्धौ परतः। आमोऽपवादः। सावनडुहः (VII. 1. 82.) इति नुमागमः; सुलोपसंयोगान्तलोपौ पूर्ववत्; **हे अनड्वन्**। शसः असर्वनामस्थानत्वात् आमागमो न भवति; **अनडुहः**। एवमेव असर्वनामस्थानविभक्तिषु अजादिषु परतः रूपं नेयम्। हलादौ तु, अनडुह्+भ्याम् इति स्थिते, **वसुस्रंसुध्वंस्वनडुहां दः** (VIII. 2. 72.)—सकारान्तस्य वस्वन्तस्य पदस्य स्रंसु ध्वंसु अनडुह् इत्येतेषां च दकारदेशो भवति पदान्ते। सकारान्तस्य इति किम्? विद्वान्। हो ढः (VIII. 2. 31.) इत्यस्य अपवादः; **अनडुद्भ्याम्**। एवमन्यत्रापि हलादौ। सप्तमीबहुवचने—खरि च (VIII. 4. 55.) इति चर्त्वे विशेषः; **अनडुत्सु**॥

5. विश्ववाह् इति शब्दस्य तु भेदः। विश्वं वहति वाहयति इति वा विग्रहः। वह प्रापणे इति धातोः विश्वोपपदात् ण्विप्रत्ययान्ततया णिजन्ते विच्प्रत्ययान्ततया वा निष्पन्नस्य प्रातिपदिकत्वात् स्वाद्युत्पत्तिः। विश्ववाह्+सु इति स्थिते हकारस्य ढत्वे जश्त्वे च कृते चर्त्वं वा भवति। **विश्ववाट् विश्ववाड्, विश्ववाहौ, विश्ववाहः**। एवमेव सर्वनामस्थाने अजादौ रूपं नेयम्। सम्बुद्धौ प्रथमैकवचनवत्। शसि, विश्ववाह्+अस् इति स्थिते, **इग्यणः सम्प्रसारणम्** (I. 1. 45.)—इकः यण्स्थाने प्रयुज्यमानस्य संप्रसारणसंज्ञा भवति; **वाह ऊठ्** (VI. 4. 133.)—वाह् इत्येवमन्तस्य भस्य ऊठ् इति संप्रसारणं भवति; अत्र ठकारः **एत्येधत्यूठ्सु** (VI. 1. 89.) इति विशेषणार्थः। विश्व+ऊ+आह्+अस् इति जाते, **संप्रसारणाच्च** (VI. 1. 108.)—संप्रसारणात् अचि परतः पूर्वरूपमेकादेशो भवति; विश्व+ऊह्+अस्

इति जाते, **एत्येधत्यूठ्सु** इति वृद्धिः ; सस्य रुत्वविसर्गौ; **विश्वौहः** । एवमेवान्यत्र असर्वनामस्थाने अजादौ विभक्तौ परतः रूपं नेयम् । हलादौ तु श्वलिट्शब्दवत् ॥

इति हकारान्तपुंलिङ्गानि ॥

---

अथ यणन्तपुंलिङ्गप्रातिपदिकानि ॥

---

1. यकारान्तपुंलिङ्गशब्दा अप्रसिद्धाः ॥

2. वकारान्तः पुंलिङ्गस्सुदिव्शब्दः । शोभना द्यौः यस्येति विग्रहः । समासत्वात् स्वाद्युत्पत्तिः । सुदिव् + सु इति स्थिते, **सावनडुहः** (VII. 1. 82.) इति वर्तमाने, **दिव औत्** (VII. 1. 84.)—दिव्-शब्दस्य सौ परतः औकारादेशो भवति । सुदि + औ + सु इति जाते, यणादेशो रुत्वविसर्गौ च—**सुद्यौः**; **सुदिवौ**, **सुदिवः** । अजादावन्यत्रापि एवमेव रूपं नेयम् । हलादौ तु, **दिव उत्** (VI. 1. 131.)—दिवः पदस्य उकारः अन्तादेशो भवति । सुदि + उ + भ्याम् इति जाते, यणादेशः; **सुद्युभ्याम्**; इत्यादि ॥

सुद्यौः, सुदिवौ, सुदिवः । हे सुद्यौः, हे सुदिवौ, हे सुदिवः । सुदिवम्, सुदिवौ, सुदिवः । सुदिवा, सुद्युभ्याम्, सुद्युभिः । सुदिवे, सुद्युभ्याम्, सुद्युभ्यः । सुदिवः, सुद्युभ्याम्, सुद्युभ्यः । सुदिवः, सुदिवोः, सुदिवाम् । सुदिवि, सुदिवोः, सुद्युषु ॥

3. रेफान्तः पुंलिङ्गश्चतुर्शब्दः । नित्यं बहुवचनान्तः । **चतुरनडुहोरामुदात्तः** (VII. 1. 98.) इत्यामागमः; यणादेशश्च ; **चत्वारः** । शसि असर्वनामस्थानत्वादामागमो न भवति ; **चतुरः** ।

आमि—**षट्चतुर्भ्यश्च** (VII. 1. 55.) इति नुट्; **रषाभ्यां नो णः समानपदे** (VIII. 4. 1.)—रेफषकाराभ्यामुत्तरस्य नकारस्य णकारादेशो भवति समानपदस्थौ चेत् निमित्तनिमित्तिनौ; **चतुर्णाम्** । सप्तमीबहुवचने चतुर्+सु इति स्थिते, रेफस्य विसर्जनीयादेशे प्राप्ते, **रोरसुपि** (VIII. 3. 6.)—सुपि परतो रोरेव रेफस्य विसर्जनीयादेशो भवति नान्यस्य रेफस्य । इति वचनात् विसर्जनीयादेशो न भवति; आदेशप्रत्यययोः (VIII. 3. 59.) इति षत्वम् । षकारस्य, अचो रहाभ्यां द्वे (VIII. 4. 46.) इति द्वित्वे प्राप्ते, **शरोऽचि** (III. 4. 49.)—रेफहकाराभ्यामुत्तरस्य शरः अचि परतो न द्वित्वम्; **चतुर्षु** ॥

चत्वारः, चतुरः, चतुर्भिः, चतुर्भ्यः, चतुर्भ्यः, चतुर्णाम्, चतुर्षु ॥

4. प्रियचतुर्शब्दस्य भेदः । चत्वारः प्रियाः यस्येति विग्रहः । **वा प्रियस्य** (वा. II. 2. 35.) इति प्रियशब्दस्य पूर्वनिपातः । प्रियचतुर् इति स्थिते स्वाद्युत्पत्तिः; आमागमश्च; हल्ङ्यादिना (VI. 1. 68.) सोर्लोपः; रेफस्य विसर्जनीयादेशश्च—**प्रियचत्वाः**; **प्रियचत्वारौ, प्रियचत्वारः** । सम्बुद्धौ तु अमागमः—**हे प्रियचत्वः**; हे प्रियचत्वारौ, हे प्रियचत्वारः । प्रियचत्वारम्, प्रियचत्वारौ; शसि असर्वनामस्थानत्वात् आमागमो न भवति—**प्रियचतुरः** । प्रियचतुरा, प्रियचतुर्भ्याम्, प्रियचतुर्भिः । प्रियचतुरे, प्रियचतुर्भ्याम्, प्रियचतुर्भ्यः । प्रियचतुरः, प्रियचतुर्भ्याम्, प्रियचतुर्भ्यः । प्रियचतुरः, प्रियचतुरोः; चतुर्शब्दस्य अप्राधान्यात् आमि न नुडागमः—**प्रियचतुराम्** । प्रियचतुरि, प्रियचतुरोः, प्रियचतुर्षु ॥

5. लान्ता अप्रसिद्धाः ॥

इति यणन्तपुंलिङ्गानि ॥

अथ ञमन्तपुंलिङ्गप्रातिपदिकानि ॥

---

1. ञकारान्तपुंलिङ्गशब्दा अप्रसिद्धाः ॥

2. मकारान्तः पुंलिङ्गः प्रशाम्शब्दः । शमु उपशमने; प्रशाम्यतीति विग्रहः; क्विप्प्रत्ययनिष्पन्नत्वात् स्वाद्युत्पत्तिः । प्रशाम् + सु इति स्थिते सुलोपः । प्रशाम् इति जाते, **मो नो धातोः** (VIII. 2. 64.)—धातोः मकारस्य नकारादेशो भवति पदान्ते । नत्वस्यासिद्धत्वान्नलोपो न भवति; अपदान्ते तु नकाराभावः ॥

**प्रशान्**, प्रशामौ, प्रशामः । **हे प्रशान्**, हे प्रशामौ, हे प्रशामः । प्रशामम्, प्रशामौ, प्रशामः । प्रशामा, **प्रशान्भ्याम्, प्रशान्भिः** । प्रशामे, **प्रशान्भ्याम्, प्रशान्भ्यः** । प्रशामः, **प्रशान्भ्याम्, प्रशान्भ्यः** । प्रशामः, प्रशामोः, प्रशामाम् । प्रशामि, प्रशामोः, **प्रशान्सु** । एवं प्रताम् इत्यादयः ॥

3. किम्शब्दस्य भेदः । स च सर्वनामत्वात् त्रिलिङ्गः । पुंलिङ्गे, **अष्टन आ विभक्तौ** (VII. 2. 84.) इत्यनुवर्तमाने, **किमः कः** (VII. 2. 103.)—किम्शब्दस्य क इत्ययमादेशो भवति विभक्तौ परतः । पुंलिङ्गसर्वशब्दवत् प्रक्रिया । **कः, कौ, के**; इत्यादि । किम्-शब्दस्य सम्बोधनप्रथमा न सम्भवति; तस्य आभिमुख्यकरणयोग्यार्थकत्वाभावात् । एवमेव प्रायेण त्यदादीनामपि संबोधनाभावः ॥

4. इदम्-शब्दस्य भेदः । इदम् + सु इति स्थिते, त्यदाद्यत्वे (VII. 2. 102.) प्राप्ते, **इदमो मः** (VII. 2. 108.)—इदमः मकारस्य मकारादेशो भवति सौ परतः । अत्वापवादः । **इदोऽय् पुंसि** (VII. 2. 111.)—पुंलिङ्गविषये इदमः इद्रूपस्य सौ परतः अय् इत्यादेशो

भवति। अयम् + सु इति जाते सुलोपः; **अयम्**। अन्यत्र त्यदाद्यत्वं पररूपं च भवतः। एवं च इद+औ इति प्रथमाद्विवचने जाते, **दश्च** (VII. 2. 109.)—इदमो दकारस्य मकारादेशो भवति विभक्तौ परतः। वृद्धिः; **इमौ**। एवमेव **इमे, इमम्, इमौ, इमान्**, इति भवन्ति। तृतीयैकवचने, **अनाप्यकः** (VII. 2. 112.)—अन् आपि अकः इति पदविभागः; इदमः इद्रूपस्य अककारसम्बन्धिनः आपि विभक्तौ परतः अन् इत्ययमादेशो भवति। आप् इति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः। अन + आ इति जाते इनादेशः (VII. 1. 12.); गुणः; **अनेन**। अक इति किम्? इमकेन। भ्यामित्यत्र त्यदाद्यत्वे पररूपे च कृते, इद+भ्याम् इति जाते, **हलि लोपः** (VII. 2. 113.)—अककारसम्बन्धिनः इदमः इद्रूपस्य हलादौ विभक्तौ परतो लोपो भवति। अ + भ्याम् इति जाते, **आद्यन्तवदेकस्मिन्** (I. 1. 21.)—असहायस्य आद्यन्तोपदिष्टानि कार्याणि न सिध्यन्तीति अतिदेशसूत्रमिदम्; आदाविव अन्ते इव एकस्मिन्नपि कार्यं भवति। इति अन्तवद्भावात्, सुपि च (VII. 3. 102.) इति दीर्घः; **आभ्याम्**। भिसि पूर्ववत् इदो लोपे सति अ + भिस् इति जाते, ऐसादेशे (VII. 1. 9.) प्राप्ते, **नेदमदसोरकोः** (VII. 1. 11.)—अविद्यमानककारयोः इदम् अदस् इत्येतयोः ऐस् आदेशो न भवति। बहुवचने झल्येत् (VII. 3. 103.) इति एत्वम्; **एभिः**। चतुर्थ्येकवचने त्यदाद्यत्वे पररूपे च कृते, इद +ए इति जाते, अनादेशे (VII. 2. 112.) स्मायादेशे (VII. 1. 14.) च प्राप्ते, परमपि अनादेशं बाधित्वा कृताकृतप्रसङ्गित्वस्वरूपनित्यत्वेन स्मै इत्यादेशो भवति। इद + स्मै इति जाते, हलि लोपः (VII. 2. 113.) इति इदो लोपः; **अस्मै**। एवमेव ङसिङसोः आमि ङौ च अन्

इत्यादेशस्य बाधः । ओसि तु अजादित्वात् अविकृतत्वेन अन् इत्यादेश एव । शेषं सर्वशब्दवत् । **अस्मै, आभ्याम्, एभ्यः; अस्मात्, आभ्याम्, एभ्यः; अस्य, अनयोः, एषाम्; अस्मिन्, अनयोः, एषु ॥**

ककारयोगे तु अकः इति निषेधात् इदो लोपः अनादेशश्च न भवतः । **अयकम्, इमकौ, इमके । इमकम्, इमकौ, इमकान् । इमकेन, इमकाभ्याम्, इमकैः ।** भिसः एस् अकोरिति वचनात् (VII. 1. 11.) भवति । शेषं सर्वशब्दवत् ॥

अन्वादेशविषये **द्वितीयाटौस्स्वेनः** (II. 4. 34.)—द्वितीयायां टा ओस् इत्येतयोश्च परत इदमेतदोरन्वादेशविषये एनादेशो भवति । कथितस्य अनुकथनम् अन्वादेशः; इमं छात्रं छन्दोऽध्यापय अथो एनं व्याकरणमध्यापय । **एनम्, एनौ, एनान्, एनेन, एनयोः, एनयोः ॥**

5. ङकारान्तः अप्रसिद्धः ॥

6. णकारान्तः पुंलिङ्गः सुगण्शब्दः । गण संख्याने; शोभनं गणयतीति विग्रहः; क्विप्प्रत्ययेन निष्पन्नः । हल्ङ्यादिना (VI. 1. 68.) सुलोपः । **सुगण्, सुगणौ, सुगणः; हे सुगण्, हे सुगणौ, हे सुगणः**; इत्यादि । सप्तमीबहुवचने तु सुगण् + सु इति स्थिते, **ङ्णोः कुक्टुक्शरि** (VIII. 3. 28.) इति टुक्पक्षे **सुगण्ट्सु** इत्यपि भवति ॥

7. नकारान्तः पुंलिङ्गो राजन्शब्दः । स्वाद्युत्पत्तिः; सर्वनामस्थाने चासम्बुद्धौ (VI. 4. 8.) इति दीर्घः; सुलोपनलोपौ; **राजा** । सम्बुद्धौ नलोपे प्राप्ते, **न ङिसंबुद्ध्योः** (VIII. 2. 8.)—ङिसंबुद्ध्योः

परतो नकारस्य लोपो न भवति; **हे राजन्**। शसाद्यजादौ विभक्तौ भसंज्ञायाम्, **अल्लोपोऽनः** (VI.4.134.) इति अकारलोपः; श्चुत्वम्; **राज्ञः**, इत्यादि। हलादौ पदसंज्ञायां नलोपे सति अकारान्तत्वात्, सुपि च (VII. 3. 102.) इति दीर्घत्वे प्राप्ते, **नलोपस्सुप्स्वरसंज्ञातुग्विधिषु कृति** (VIII. 2. 2.)—सुब्विधौ, स्वरविधौ, संज्ञाविधौ, कृति तुग्विधौ च नलोपोऽसिद्धो भवति। नान्यत्र राजाश्व इत्यादौ। सुपः सुपि वा विधिः सुब्विधिः इति नियमात् दीर्घादयो न भवन्ति; **राजभ्याम्**। आदिग्रहणं किमर्थम्? ऐस्त्वैत्वोभयार्थम्। राज + भिस् इत्येवमादौ नलोपः असिद्धो भवति; **राजभिः, राजभ्यः**। सप्तम्येकवचने **विभाषा ङिश्योः** (VI. 4. 136.) इत्यल्लोपविकल्पः; **राज्ञि राजनि**॥

राजा, राजानौ, राजानः। हे राजन्, हे राजानौ, हे राजानः। राजानम्, राजानौ, राज्ञः। राज्ञा, राजभ्याम्, राजभिः। राज्ञे, राजभ्याम्, राजभ्यः। राज्ञः, राजभ्याम्, राजभ्यः। राज्ञः, राज्ञोः, राज्ञाम्। राज्ञि राजनि, राज्ञोः, राजसु॥

एवं मूर्धन्-उक्षन्-तक्षन्-प्रभृतयः॥

8. पूषन् शब्दस्य भेदः। पूषन् + सु इति स्थिते, **इन्हन्पूषार्यम्णां शौ** (VI. 4. 12.)—इन् हन् इत्यन्तानां पूषन् अर्यमन् इत्येतयोश्च अङ्गानां शावेव उपधादीर्घः नान्यत्र। इति दीर्घनिषेधे प्राप्ते, **सौ च** (VI. 4. 13.)—सौ परतः सम्बुद्धिवर्जम् इन् हन् पूषन् अर्यमन् इत्येतेषामुपधाया दीर्घो भवति। एवं च सु-विभक्तौ शि-विभक्तौ च दीर्घः नान्यत्र; सुलोपनलोपौ; **पूषा**। णत्वम्; **पूषणौ** इत्यादि। भसंज्ञायामल्लोपः; पदसंज्ञायां नलोपः॥

पूषा, पूषणौ, पूषणः । हे पूषन्, हे पूषणौ, हे पूषणः । पूषणम्, पूषणौ, पूष्णः । पूष्णा, पूषभ्याम्, पूषभिः । पूष्णे, पूषभ्याम्, पूषभ्यः । पूष्णः, पूषभ्याम्, पूषभ्यः । पूष्णः, पूष्णोः, पूष्णाम् । पूष्णि पूषणि ; पूष्णोः, पूषसु ॥

9. ब्रह्महन्शब्दस्य भेदः । हन हिंसागत्योः ; ब्रह्माणं हतवान् इति विग्रहः ; क्विप्प्रत्ययान्ततया निष्पन्नः । पूषन्शब्दवत् स्वाद्युत्पत्तिदीर्घ-सुलोपनलोपाः । णत्वं तु **एकाजुत्तरपदे णः** (VIII. 4. 12.) इति; **ब्रह्महा, ब्रह्महणौ**, इत्यादि । शसादावचि भसंज्ञायाम्, **अल्लोपोऽनः** (VI. 4. 134.) इत्यकारलोपे कृते, **चजोः कु घिण्ण्यतोः** (VII. 3. 52.) इति वर्तमाने, **हो हन्तेर्ञ्णिन्नेषु** (VII. 3. 54.) —हन्तेर्धातोर्हकारस्य ञिति णिति प्रत्यये नकारे च परतः कवर्गादेशो भवति । आन्तरतम्यात् हकारस्य घकारः । णत्वे प्राप्ते, **हन्तेरत्पूर्वस्य** (VIII. 4. 22.)—हन्तेर्धातोरत्पूर्वस्यैव नकारस्य णकारादेशो भवति । इति नियमादकारपूर्वस्यैव नकारस्य णकारादेशः ; **ब्रह्मघ्नः** । इह लुप्ताकारे णत्वं न भवति । हलादौ पदसंज्ञायां पूषन्शब्दवत् ॥

ब्रह्महा, ब्रह्महणौ, ब्रह्महणः । हे ब्रह्महन्, हे ब्रह्महणौ, हे ब्रह्महणः । ब्रह्महणम्, ब्रह्महणौ, ब्रह्मघ्नः । ब्रह्मघ्ना, ब्रह्महभ्याम्, ब्रह्महभिः । ब्रह्मघ्ने, ब्रह्महभ्याम्, ब्रह्महभ्यः । ब्रह्मघ्नः, ब्रह्महभ्याम्, ब्रह्महभ्यः । ब्रह्मघ्नः, ब्रह्मघ्नोः, ब्रह्मघ्नाम् । ब्रह्मघ्नि ब्रह्महणि, ब्रह्मघ्नोः, ब्रह्महसु । एवं वृत्रहन्-प्रभृतयः ॥

10. सुपर्वन्शब्दस्य भेदः । सुटि पूर्ववत् । शसादावचि भसंज्ञायाम् अल्लोपे प्राप्ते, **न संयोगाद्वमन्तात्** (VI.4.137.)—वकारमकारान्तात् संयोगादुत्तरस्य अनः अकारस्य लोपो न भवति ; **सुपर्वणः** । अन्यत्

हलादौ पदसंज्ञायां राजन्शब्दवत् । सुपर्वा, सुपर्वाणौ, सुपर्वाणः ; हे सुपर्वन्, हे सुपर्वाणौ, हे सुपर्वाणः ; सुपर्वाणम्, सुपर्वाणौ, सुपर्वणः ; सुपर्वणा, सुपर्वभ्याम्, सुपर्वभिः ; सुपर्वणे, सुपर्वभ्याम्, सुपर्वभ्यः ; सुपर्वणः, सुपर्वभ्याम्, सुपर्वभ्यः ; सुपर्वणः, सुपर्वणोः, सुपर्वणाम् ; सुपर्वणि, सुपर्वणोः, सुपर्वसु । एवं सुशर्मन्-यज्वन्-प्रभृतयः ॥

11. श्वन्-शब्दस्य भेदः । सुटि पूर्ववत् । शसादावचि भसंज्ञायां, **वसोः संप्रसारणम्**(VI.4.131.) इति वर्तमाने, **श्वयुवमघोनामतद्धिते** (VI. 4. 133.)—श्वन् युवन् मघवन् इत्येतेषां भसंज्ञानामतद्धिते परतः संप्रसारणं भवति । इति वकारस्य उकारः । संप्रसारणाच्च (VI. 1. 108.) इति पूर्वरूपत्वम् ; **शुनः**, इत्यादि नेयम् । अतद्धिते इति किम् ? शौवनं मांसम् ; यौवनम् ; माघवनः स्थालीपाकः । हलादौ पदसंज्ञायां तु नकारलोपः । श्वा, श्वानौ, श्वानः ; हे श्वन्, हे श्वानौ, हे श्वानः ; श्वानम्, श्वानौ, शुनः ; शुना, श्वभ्याम्, श्वभिः ; शुने, श्वभ्याम्, श्वभ्यः ; शुनः, श्वभ्याम्, श्वभ्यः ; शुनः, शुनोः, शुनाम् ; शुनि, शुनोः, श्वसु ॥

12. युवन्शब्दस्य वकारस्य संप्रसारणे कृते, पूर्वस्य यणः संप्रसारणे प्राप्ते, **न संप्रसारणे संप्रसारणम्** (VI. 1. 37.)—संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न भवति । युवा, युवानौ, युवानः ; हे युवन्, हे युवानौ, हे युवानः ; युवानम्, युवानौ, यूनः ; यूना, युवभ्याम्, युवभिः, यूने, युवभ्याम्, युवभ्यः । यूनः, युवभ्याम्, युवभ्यः । यूनः, यूनोः, यूनाम् । यूनि, यूनोः, युवसु ॥

13. मघवन्शब्दस्य भेदः । पूर्ववत् सम्प्रसारणपूर्वत्वे ; अथ गुणः ; मघवा, मघवानौ, मघवानः ; हे मघवन्, हे मघवानौ, हे मघवानः ; मघवानम्, मघवानौ, मघोनः ; मघोना, मघवभ्याम्, मघवभिः ; मघोने, मघ-

वभ्याम्, मघवभ्यः ; मघोनः, मघवभ्याम्, मघवभ्यः ; मघोनः, मघोनोः, मघोनाम् ; मघोनि, मघोनोः, मघवसु ॥

मघवन्शब्दस्य रूपान्तरमप्यस्ति । मघवन् + सु इति स्थिते, **मघवा बहुलम्** (VI. 4. 128.)—मघवन् इत्येतस्य अङ्गस्य बहुलं तृ इत्ययमादेशो भवति । ऋकार उगित्कार्यार्थः । **नानुबन्धकृतमनेकाल्त्वम्** (परि. 5.) इति वचनात् सर्वादेशो न भवति । मघवत् + सु इति जाते, **उगिदचां सर्वनामस्थानेऽधातोः** (VII.1.70.)—उगितामङ्गानां धातुभिन्नानां लुप्तनकारस्य अञ्चतेश्च नुमागमो भवति सर्वनामस्थाने परतः । सुलोपसंयोगान्तलोपौ । एवं जाते मघवन् इत्यत्र प्रत्ययलक्षणत्वेन सुपरकत्वात् उपधादीर्घः । इह दीर्घे कर्तव्ये संयोगान्तलोपस्य **पूर्वत्रासिद्धम्** इत्यसिद्धत्वम् न भवति बहुलग्रहणात् । बहून् अर्थान् लातीति बहुलम्—

क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥

मघवान्, मघवन्तौ, मघवन्तः ; मघवन्तम्, मघवन्तौ, मघवतः ; मघवता, मघवद्भ्याम्, मघवद्भिः ; इत्यादि ॥

14. अर्वन्शब्दस्य भेदः । प्रथमैकवचने राजन्शब्दवत् ; **अर्वा । अर्वणस्त्रसावनञः** (VI. 4. 127.)—अर्वन्शब्दस्य अनञ्पूर्वस्य असौ विभक्तौ परतः तृ इत्ययमादेशो भवति । अनेकाल् शित् सर्वस्य (I. 1. 55.) इति सर्वस्य तृ इत्यादेशे भवितव्ये, नानुबन्धकृतमनेकाल्त्वम् इति वचनात् सर्वादेशो न भवति । अत्रापि ऋकारः उगित्कार्यार्थः । उगिदचां सर्वनामस्थानेऽधातोः (VII. 1. 70.) इति नुमागमो भवति सर्वनामस्थाने परतः । अर्वन् + त् + औ इत्यत्र रषाभ्यामित्या-

दिना (VIII. 4. 1.) णत्वे प्राप्ते, नश्चापदान्तस्य झलि (VIII. 3. 24.) इत्यनुस्वारे च प्राप्ते, विप्रतिषेधे परं कार्यम् (I. 4. 2.) इति परत्वाण्णत्वम् इति णत्वे कर्तव्ये, पूर्वत्रासिद्धम् (VIII. 2. 1.) इति णत्वस्यासिद्धत्वात् पूर्वमनुस्वारः। अनुस्वारस्य ययि परसवर्णः (VIII. 4. 58.) इति परस्यासिद्धत्वात् पुनर्णत्वं न भवति। अनुस्वारपरसवर्णौ; **अर्वन्तौ**। शेषं तकारान्त-मघवत्-शब्दवद्रूपं नेयम्। अनञिति किम्? अनर्वाणौ॥

अर्वा, अर्वन्तौ, अर्वन्तः। हे अर्वन्, हे अर्वन्तौ, हे अर्वन्तः। अर्वन्तम्, अर्वन्तौ, अर्वतः। अर्वता, अर्वभ्याम्, अर्वद्भिः। अर्वते, अर्वभ्याम्, अर्वभ्यः। अर्वतः, अर्वभ्याम्, अर्वभ्यः। अर्वतः, अर्वतोः, अर्वताम्। अर्वति, अर्वतोः, अर्वत्सु॥

15. पञ्चन्शब्दस्य भेदः। नित्यं बहुवचनान्तः। **बहुगणवतुडति संख्या** (I. 1. 23.) इति वर्तमाने, **ष्णान्ता षट्** (I. 1. 24.)—षकारनकारान्ता या संख्या सा षट्संज्ञा भवति। **षड्भ्यो लुक्** (VII. 1. 22.) इति जस्-शसोः लुक्। पञ्चन् इति स्थिते प्रत्ययलक्षणेन दीर्घो न भवति, न लुमताङ्गस्य (I. 1. 63.) इति निषेधात्; नकारलोपः; **पञ्च**। आमि—षट्चतुर्भ्यश्च (VII. 1. 55.) इति नुडागमः; **नामि** (VI. 4. 3.) इति वर्तमाने, **नोपधायाः** (VI.4.7.)—नकारान्तस्य अङ्गस्य उपधाया दीर्घो भवति नामि परतः; **पञ्चानाम्**।

पञ्च, पञ्च, पञ्चभिः, पञ्चभ्यः, पञ्चभ्यः, पञ्चानाम्, पञ्चसु। एवं सप्तन्प्रभृतयः॥

16. अष्टन्शब्दस्य भेदः। नित्यं बहुवचनान्तः। **अष्टन आ विभक्तौ** (VII. 2. 84.)—अष्टन्शब्दस्य आकारादेशो भवति विभक्तौ

परतः । विकल्पेन अस्य प्रसक्तिः, **अष्टनो दीर्घात्** (VI. 1. 72.) इत्यत्र दीर्घग्रहणात् । स च आकारादेशः अलोऽन्त्यस्य (I. 1. 52.) इति नकारस्य भवति । अष्टा + जस् इति जाते, **जश्शसोः शिः** (VII. 1. 20.) इति वर्तमाने, **अष्टाभ्य औश्** (VII. 1. 21.)—अष्टन्-शब्दात् कृतात्वात् परौ यौ जस्-शसौ तयोः औश् इत्ययमादेशो भवति । शकारः सर्वादेशार्थः; वृद्धिः; **अष्टौ** । ष्णान्ता षट् (I. 1. 24.) इत्यत्र, येन विधिस्तदन्तस्य (I. 1. 72.) इति न्यायेनैव तदन्तलाभे, पृथगन्तग्रहणसामर्थ्यात् नकारान्तत्वाभावेऽपि षट्संज्ञायां, षट्चतुर्भ्यश्च (VII. 1. 55.) इति नुट् । यत्रात्वन्न भवति तत्र षड्भ्यो लुक् (VII. 1. 22.) इति जस्-शसोः लुक् भवति ; नलोपश्च ; **अष्टौ अष्ट, अष्टौ अष्ट, अष्टाभिः अष्टभिः, अष्टाभ्यः अष्टभ्यः, अष्टाभ्यः अष्टभ्यः, अष्टानाम्, अष्टासु अष्टसु ॥**

17. करिन्-शब्दस्य भेदः ; करोऽस्यास्तीति विग्रहः ; करशब्दात् इनिप्रत्ययान्ततया निष्पन्नस्य तद्धितान्तत्वेन प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः। **सौ च** (VI. 4. 13.) इति दीर्घः ; सुलोपो नलोपश्च ; **करी** । अन्यत्र सुपर्वन्-शब्दवत्प्रक्रिया ॥

करी, करिणौ, करिणः । हे करिन्, हे करिणौ, हे करिणः । करिणम्, करिणौ, करिणः । करिणा, करिभ्याम्, करिभिः । करिणे, करिभ्याम्, करिभ्यः । करिणः, करिभ्याम्, करिभ्यः । करिणः, करिणोः, करिणाम् । करिणि, करिणोः, करिषु । एवं दण्डिन्-प्रभृतयः ॥

18. पथिन्-शब्दस्य भेदः । **पतस्थ च** (उणादि. 460.) इत्युणादिनिष्पन्नस्य इन्नन्तस्य प्रातिपदिकत्वात् स्वाद्युत्पत्तिः । पथिन् + सु इति स्थिते, **पथिमथ्यृभुक्षामात्** (VII. 1. 85.)—पथिन् मथिन् ऋभु-

क्षिन् इत्येतेषामाकारादेशो भवति सौ परतः। पथि + आ + सु इति जाते, **इतोऽत्सर्वनामस्थाने** (VII. 1. 86.)—पथ्यादीनामिकारस्य अकारादेशो भवति सर्वनामस्थाने परतः। सवर्णदीर्घः ; पथा + सु इति जाते, **थो न्थः** (VII. 1. 87.)—पथि मथि इत्येतयोः थस्य न्थ इत्यादेशो भवति सर्वनामस्थाने परतः। पन्था + सु इति जाते, रुत्वविसर्गौ; **पन्थाः**। अन्यत्र सर्वनामस्थाने, इकारस्य पूर्ववत् अकारादेशे थकारस्य न्थादेशे च कृते, नान्तत्वात् उपधादीर्घः। शसादावचि, **भस्य टेर्लोपः** (VII. 1. 88.)—पथ्यादीनां भसंज्ञकानां टेर्लोपो भवति। हलादौ तु पदसंज्ञायां नकारलोपः। **पन्थाः, पन्थानौ, पन्थानः; हे पन्थाः, हे पन्थानौ, हे पन्थानः; पन्थानम्, पन्थानौ, पथः; पथा, पथिभ्याम्, पथिभिः;** इत्यादि। एवं मथिन्-ऋभुक्षिन्-शब्दौ ॥

इति अमन्तपुंलिङ्गप्रातिपदिकानि ॥

---

अथ झशन्तपुंलिङ्गानि ॥

---

1. अत्र पुंलिङ्गे झभघढान्ता अप्रसिद्धाः ॥

2. धकारान्तः पुंलिङ्गः तत्त्वबुध्-शब्दः। बुध अवगमने; तत्त्वं बुध्यते इति विग्रहः; क्विप्प्रत्ययात् निष्पन्नः। पूर्ववत् भष्भावश्च जश्त्वचर्त्वे। **तत्त्वभुत् तत्त्वभुद्, तत्त्वबुधौ**; इत्यादि। एवमर्थबुधादयः॥

3. जकारान्तः पुंलिङ्गो भिषज्-शब्दः। कृदन्तत्वात् स्वाद्युत्पत्तिः; सुलोपः। **चोः कुः** (VIII. 2. 30)—झलि पदान्ते चवर्गस्य कवर्गादेशो भवति। जश्त्वचर्त्वे; **भिषक् भिषग्, भिषजौ, भिषजः;** इत्यादि। एवं जन्मभाज्-वणिज्-प्रभृतयः॥

4. युज्-शब्दस्य भेदः । युजिर् योगे ; क्विन्प्रत्ययान्ततया निष्पन्नः कृदन्तोऽयं युजिति शब्दः । स्वाद्युत्पत्तिः ; युज् + सु इति स्थिते, **युजेरसमासे** (VII. 1. 71.)—युजेरङ्गस्य नुमागमो भवति सर्वनामस्थाने परतो न तु समासे । सुलोपसंयोगान्तलोपौ ; युन् इति जाते, **क्विन्प्रत्ययस्य कुः** (VIII. 2. 62.)—क्विन्प्रत्ययान्तस्य कवर्गादेशो भवति झलि परतः पदान्ते च । इति नकारस्य ङकारः । अन्यत्र अनुस्वारपरसवर्णौ ; **युङ्, युञ्जौ, युञ्जः** । शसादौ तु भिषज्-शब्दवत् । समासे तु अश्वयुज्-शब्दस्य सर्वत्र नुमागमाभावात् भिषज्-शब्दवत् रूपम् ॥

5. खञ्ज्-शब्दस्य भेदः । खजि गतिवैकल्ये इति धातोः क्विबन्ततया निष्पन्नस्य कृदन्तस्य स्वाद्युत्पत्तौ, खञ्ज् + सु इति स्थिते, सुलोपसंयोगान्तलोपौ । **खन्, खञ्जौ, खञ्जः; खञ्जम्, खञ्जौ, खञ्जः; खञ्जा, खन्भ्याम्, खन्भिः**; इत्यादि ॥

6. संराज्-शब्दस्य भेदः । राजृ दीप्तौ; सम् इत्युपसर्गस्य प्राक्प्रयोगः ; क्विप्प्रत्ययः ; कृदन्तत्वात् स्वाद्युत्पत्तिः । सं + राज् इति स्थिते, **मो राजि समः क्वौ** (VIII. 3. 25.)—समो मकारस्य मकारादेशो भवति राजतौ क्विप्प्रत्ययान्ते परतः । अनुस्वारापवादः । व्रश्चादिना (VIII. 2. 36.) षत्वम् ; जश्त्वचर्त्वे ; **सम्राट् सम्राड्, सम्राजौ, सम्राजः** ; इत्यादि । एवं विभ्राज्-देवेज्-विश्वसृज्-प्रभृतयः । अत्र विभ्राज्-शब्दविषये व्रश्चेति (VIII. 2. 36.) सूत्रे राजसाहचर्यात् फणाद्यन्तर्गतभ्राजधातोरेव ग्रहणं न तु गणबहिर्भूतस्य ; **सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्** (परि. 103.) । तस्मात् एजृ भ्राजृ दीप्तौ इति धातोः क्विपा निष्पन्नस्य विभ्राज्-शब्दस्य, झलि पदान्ते च,

चोः कुः (VIII. 2. 30.) इति कुत्वमेव न षत्वम् ; **विभ्राक् विभ्राग्**, **विभ्राग्भ्याम्**; इत्यादि ॥

7. परिव्राज् इति शब्दस्य परित्यज्य व्रजति इति विग्रहः । **परौ व्रजेः षश्च पदान्ते** (उणादि. 227.)—परि इत्युपपदे सति व्रज-धातोः क्विब्दीर्घौ भवतः पदान्तविषये षत्वं च । स्वाद्युत्पत्तिः ; जश्त्व-चर्त्वे ; **परिव्राट् परिव्राड्** । शेषं सम्राज्-शब्दवत् । विश्वराज्-शब्दस्यापि भेदः पदान्तविषये । स्वाद्युत्पत्तिषत्वजश्त्वचर्त्वानि सम्राज्-शब्दवत् । विश्वराट् इति स्थिते, **विश्वस्य वसुराटोः** (VI. 3. 128.)—विश्वस्य वसुशब्दे राट्शब्दे च परतः दीर्घो भवति । **विश्वाराट् विश्वाराड्**, **विश्वराजौ**, **विश्वराजः** । पदान्तविषये दीर्घः ; नान्यत्र ; **विश्वाराड्भ्याम्** इत्यादि ॥

8. ऊर्ज्-शब्दस्य स्वाद्युत्पत्तौ सुलोपः । रात् सस्य (VIII. 2. 24.) इति नियमात् न संयोगान्तलोपः ; चोः कुः (VIII. 2. 30.) इति कुत्वम् ; **ऊर्क् ऊर्ग्**, **ऊर्जौ** ; इत्यादि ॥

9. बगडान्ताः अप्रसिद्धाः ॥

10. दकारान्तः पुंलिङ्गो वेदविद्-शब्दः । विद् ज्ञाने ; वेदं वेत्तीति विग्रहः ; क्विप्प्रत्ययः । **वेदवित् वेदविद्**, **वेदविदौ**, **वेदविदः** ; इत्यादि । एवं सर्वविदादयः ॥

11. द्विपाद्-शब्दस्य भेदः । द्वौ पादौ यस्येति विग्रहः ; समासत्वात् स्वाद्युत्पत्तिः; वेदविद्-शब्दवत् रूपं नेयम् ; **द्विपात् द्विपाद्**, **द्विपादौ**, **द्विपादः** ; इत्यादि । शसादावचि भसंज्ञायां द्विपाद् + अस् इति स्थिते, **पादः पत्** (VI. 4. 130.)—पादशब्दस्य पदादेशो भवति भसंज्ञायाम् । तस्य पत् इत्यादेशस्य अनेकाल्त्वात् सर्वादेशे प्राप्ते, **निर्दिश्य-**

**मानस्यादेशा भवन्ति** (परि. 12.) इति पाद्-शब्दस्यैव भवति; **द्विपदः** । तथैव **द्विपदा, द्विपाद्भ्याम्, द्विपाद्भिः**; इत्यादि । एवं सुपादादयः ॥

12. यद्-शब्दस्य भेदः । यद्+सु इति स्थिते, त्यदादीनामः (VII. 2. 102.) इत्यत्वे कृते, य अ+सु इति जाते, अतो गुणे (VI. 1. 97.) इति पररूपम्; रुत्वविसर्गौ; **यः** । पुंलिङ्गसर्वशब्दवत् रूपं नेयम् ॥

13. तद्-शब्दस्य तु विशेषः । त्यदाद्यत्वं पररूपं च । त+सु इति जाते, तदोः सस्सावनन्त्ययोः (VII. 2. 106.) इति सकारः; **सः** । पुंलिङ्गसर्वशब्दवत् रूपं नेयम्; **तौ, ते**; इत्यादि । एवं त्यद्-शब्दश्च ॥

14. एतद्-शब्दस्य भेदः । त्यदाद्यत्वपररूपत्वसत्वानि पूर्ववत् । एस+सु इति स्थिते, आदेशप्रत्यययोः (VIII. 3. 59.) इति षत्वम्; रुत्वविसर्गौ; **एषः** । शेषं तद्-शब्दवत् । तदोरिति (VIII. 2. 106.) सत्वं द्विपर्यन्तानामेव इष्यते । तस्मात् युष्मद्-शब्दस्य प्रथमैकवचने न भवति । अन्वादेशविषये, द्वितीयाटौस्स्वेनः (II. 4. 34.) इति एतच्छब्दस्य एनादेशो भवति; **एनम्, एनौ, एनान्, एनेन, एनयोः, एनयोः** ॥

15. दकारान्तावपि युष्मदस्मद्-शब्दौ अलिङ्गत्वान्नात्र निरूपितौ ॥

इति झशन्तपुंलिङ्गप्रातिपदिकानि ॥

---

अथ खयन्तपुंलिङ्गानि ॥

---

1. खफछठान्ता अप्रसिद्धाः ॥

2. थकारान्तः पुंलिङ्गः अग्निमथ्-शब्दः। मन्थ विलोडने; अग्निं मथ्नातीति विग्रहः; क्विप्प्रत्ययः; स्वाद्युत्पत्तिः; सुलोपजश्त्वचर्त्वानि वेदविद्-शब्दवत्। **अग्निमत् अग्निमद्, अग्निमथौ, अग्निमथः**; इत्यादि। एवं दधिमथादयः॥

3. चकारान्तः पुंलिङ्गः सुवाच्-शब्दः। शोभना वाक् यस्येति विग्रहः; समासत्वात् स्वाद्युत्पत्तिः; सुवाच्+सु इति स्थिते सुलोपः; **चोः कुः** (VIII. 2. 30.) इति कुत्वम्; जश्त्वचर्त्वे; **सुवाक् सुवाग्, सुवाचौ, सुवाचः**; इत्यादि। एवं प्रवाच्-जलमुच्-प्रभृतयः॥

4. प्रत्यच्-शब्दस्य भेदः। अञ्चु गतिपूजनयोः; प्रत्यञ्चमञ्चतीति प्रत्यञ्चतीति वा विग्रहः; क्विन्प्रत्ययः। एवं रूपनिष्पत्तौ प्रत्यच् इति जाते, कृदन्तत्वात् स्वाद्युत्पत्तौ, प्रत्यच्+सु इत्यत्र, उगिदचाम् (VII. 1. 70.) इत्यादिना नुमागमो भवति; सुलोपसंयोगान्तलोपौ; क्विन्प्रत्ययस्य कुः (VIII. 2. 62) इति कुत्वम्; प्रत्यन् इत्यत्र नकारस्य आन्तरतम्यात् ङकार आदेशो भवति; **प्रत्यङ्**। अन्यत्र अनुस्वारपरसवर्णौ; **प्रत्यञ्चौ, प्रत्यञ्चः**, इत्यादि। शसादावचि भसंज्ञायाम्, **अचः** (VI. 4. 138.)—अत्र अच् इति न प्रत्याहारः; किंतु लुप्तनकारो अञ्चतिधातुः; तदन्तस्य भस्य अकारलोपो भवति। प्रत्यच्+अस् इत्यत्र यणादेशत्वेन प्राप्तयकारः, **निमित्तापाये नैमित्तिकस्याप्यपायः** (परि. 56.) इति अल्लोपे निवृत्य, इकारावस्थां लभते। प्रति च्+अस् इति जाते, **चौ** (VI. 3. 138.)—अत्र चि इत्यनेन अकारनकारवर्जितः अञ्चतिधातुः गृह्यते; तस्मिन् परे पूर्वस्य अणः दीर्घो भवति; **प्रतीचः**। तथैव **प्रतीचा, प्रतीचे**; इत्यादि। हलादौ पदसंज्ञायाम् अल्लोपाभावात् न दीर्घः; कुत्वम्; **प्रत्यग्भ्याम्** इत्यादि। एवं पर्यच्-अभ्यच्-मध्वच्-प्रभृतयः॥

5. उदच्-शब्दस्य भेदः । सुटि पूर्ववत्; शसादावचि, **अचः** (VI. 4. 138.) इति अल्लोपे प्राप्ते, **उद ईत्** (VI. 4. 139.)—उच्छब्दादुत्तरस्याश्वतेः ईकारादेशो भवति भसंज्ञायाम् । **आदेः परस्य** (I. 1. 54.)—विधीयमानं कार्यं परस्य आदेरेव भवति । अलोऽन्त्यस्य इति नियमस्याभावः । **उदङ्, उदञ्चौ, उदञ्चः; उदञ्चम्, उदञ्चौ, उदीचः; उदीचा, उदग्भ्याम्**; इत्यादि ॥

6. तिर्यच्-शब्दस्य विशेषः । तिरस्-शब्दोपपदात् अञ्चतेः क्विन्नन्ततया निष्पन्नस्य अस्य स्वाद्युत्पत्तिः । तिरस् + अच् + सु इति स्थिते, **तिरसस्तिर्यलोपे** (VI. 3. 94.)—तिरश्शब्दस्य तिरि इत्ययमादेशो भवति अलुप्ताकारे अश्वतौ वप्रत्ययान्ते उत्तरपदे परतः; वकारप्रत्ययो वप्रत्ययः; तदन्तः इत्यर्थः । यत्र अचः (VI. 4. 138.) इत्यकारलोपो न भवति तत्र एष तिर्यादेशः; नुम्; सुलोपसंयोगान्तलोपकुत्वानि पूर्ववत्; **तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चः** । शसादावचि, अचः (VI. 4. 138.) इति अकारलोपात्, तिरि इत्यादेशो न भवति; श्चुत्वम्; **तिरश्चः, तिरश्चा, तिर्यग्भ्याम्**, इत्यादि ॥

7. सम्यच्-शब्दस्य भेदः । समश्चति इति विग्रहः; क्विन्नन्ततया निष्पन्नः कृदन्तः; स्वाद्युत्पत्तिः । समच् + सु इति स्थिते, **समः समि** (VI. 3. 93.)—वप्रत्ययान्ते अश्चतौ उत्तरपदे परतः समः समि इत्यादेशो भवति । यणादेशः; नुमादिकं पूर्ववत्; **सम्यङ्, सम्यञ्चौ, सम्यञ्चः** । शसादावचि, अचः (VI. 4. 138.) इत्यकारलोपः; चौ (VI. 3. 188.) इति दीर्घश्च; **समीचः, समीचा, सम्यग्भ्याम्**; इत्यादि ॥

8. सध्र्यच्-शब्दस्य भेदः । सहाश्वतीति विग्रहः; क्विन्नन्ततया

निष्पन्नः कृदन्तः । सहाच् इत्यत्र **सहस्य सध्रिः** (VI. 3. 95.)—सहशब्दस्य सध्रि इत्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्ते उत्तरपदे परतः । यणादेशः ; नुमादिकं पूर्ववत् ; **सध्र्यङ्, सध्र्यञ्चौ, सध्र्यञ्चः** । शसादावचि अल्लोपो दीर्घश्च पूर्ववत् ; **सध्रीचः, सध्रीचा, सध्र्यग्भ्याम्**, इत्यादि ॥

9. विष्वद्र्यच्-देवद्र्यच्-शब्दयोर्भेदः । विष्वगञ्चति, देवानञ्चति, इति विग्रहः । विष्वक् + अच् इत्यत्र, **विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये** (VI. 3. 92.)—विष्वग्देवयोः सर्वनाम्नश्च टेः अद्रि इत्ययमादेशो भवति अञ्चतौ वप्रत्ययान्ते उत्तरपदे परतः । इति अक् इत्यस्य अद्रि इत्यादेशो भवति । विष्वद्रि + अच् इति जाते, यणादेशः ; सुबुत्पत्त्यादिकं पूर्ववत् ; **विष्वद्र्यङ्, विष्वद्र्यञ्चौ** । शसादावचि अल्लोपदीर्घौ पूर्ववत् ; **विष्वद्रीचः** । एवमेव देवद्र्यच्-तद्र्यच्-प्रभृतयः ॥

10. यदाञ्चतिः पूजायामर्थे वर्तते तदा प्राञ्च् इत्यस्य क्विन्नन्तत्वात् **अनिदितां हल उपधायाः क्ङिति** (VI. 4. 24.) इति नलोपे प्राप्ते, **नाञ्चेः पूजायाम्** (VI. 4. 30.)—पूजायामर्थे वर्तमानस्य अञ्चतेरुपधायाः नकारस्य लोपो न भवति । सुबुत्पत्त्यादिकं पूर्ववत् । नलोपाभावान्न नुमागमः । सुलोपसंयोगान्तलोपौ । **प्राङ्, प्राञ्चौ, प्राञ्चः; प्राञ्चम्, प्राञ्चौ, प्राञ्चः ; प्राञ्चा, प्राङ्भ्याम्** ; इत्यादि । सप्तमीबहुवचने **ङ्णोः कुक्टुक् शरि** (VII. 3. 28.)—ङकारणकारयोः पदान्तयोः शरि परतो वा कुक् टुक् इत्येतावागमौ भवतः । अनुबन्धलोपः ; **प्राङ्क्षु** ; पक्षे—**प्राङ्षु** । अपूजार्थे तु नलोपो भवत्येव ॥

11. टकारान्तः अप्रसिद्धः ॥

12. तकारान्तः पुंलिङ्गो मरुत्-शब्दः । स्वाद्युत्पत्तिः ; सुलोपः; जश्त्वचर्त्वे । **मरुत् मरुद् , मरुतौ, मरुतः** ; इत्यादि । एवम् अग्निचित्-सोमसुत्-प्रभृतयः ॥

13. भवत्-शब्दस्य भेदः । भातेर्डवतुः (उणादि. 66.) इति उणादिनिष्पन्नः ; भवतु इत्यत्र उकारः उगित्कार्यार्थः ; स्वाद्युत्पत्तिः । भवत्+सु इति स्थिते, **अत्वसन्तस्य चाधातोः** (VI. 4. 14.)—अत्वन्तस्य असन्तस्य च धातुवर्जितस्य अङ्गस्य उपधाया दीर्घो भवति सम्बुद्धिवर्जिते सौ परतः । उगित्त्वात् नुम् ; शेषं पूर्ववत् ; **भवान् , भवन्तौ, भवन्तः** । सम्बुद्धौ **विभाषा भवद्भगवदघवतामोच्चावस्य** (वा. VIII. 3. 1.) इति नकारस्य रुत्वम् अवशब्दस्य ओकारश्च ; **हे भोः हे भवन्, हे भवन्तौ, हे भवन्तः** । भवन्तम्, भवन्तौ, भवतः ; भवता, भवद्भ्याम्, भवद्भिः ; शेषं नेयम् । एवं भगवदघवच्छब्दौ ; तावपि उकारानुबन्धौ तकारान्तौ । शत्रन्तस्य भवच्छब्दस्यापि उगित्त्वात् नुम् भवति । उपधादीर्घस्तु अत्वन्तत्वाभावात् न भवति । **भवन्, भवन्तौ, भवन्तः हे भवन्, हे भवन्तौ, हे भवन्तः** ; इत्यादि । एवं पचत्-पठत्-प्रभृतयः ॥

14. महत्-शब्दस्य भेदः । मह पूजायां ; मह्यते इति महान् ; अतिप्रत्ययान्ततया उणादिनिष्पन्नः । **वर्तमाने पृषत्-बृहत्-महत्-जगत् शतृवत्** (उणादि. 250.) इति शतृकार्यातिदेशः । महत् इति स्थिते, शतृवद्भावात्, उगिदचाम् (VII. 1. 70.) इति नुम् । **सान्त महतः संयोगस्य** (VI. 4. 10.)—सकारान्तस्य संयोगान्तस्य महच्छब्दस्य च योऽवयवो नकारः तस्योपधाया दीर्घो भवति संबुद्धिवर्जिते सर्वनामस्थाने परतः । **महान्, महान्तौ, महान्तः ; हे महन्,**

**हे महान्तौ, हे महान्तः; महान्तम्, महान्तौ, महतः;** इत्यादि। शेषं नेयम् ॥

15. अभ्यस्तसंज्ञकानां ददत्-प्रभृतीनां तकारान्तानां भेदः। डुदाञ् दाने; शत्रन्ततया निष्पन्नः ददत्-शब्दः। ददत् इति स्थिते कृदन्तत्वात् स्वाद्युत्पत्तिः। उगिदचामित्यादिना नुमि प्राप्ते **नाभ्यस्ताच्छतुः** (VII. 1. 78.)—अभ्यस्तादङ्गादुत्तरस्य शतुर्नुमागमो न भवति। सुलोपः; जश्त्वचर्त्वे; **ददत्, ददद्, ददतौ, ददतः;** इत्यादि। एवं दधत्-प्रभृतयः ॥

16. जक्षत्-शब्दस्य भेदः। जक्ष भक्षहसनयोः इति धातोः शत्रन्ततया निष्पन्नः। जक्षत् इति स्थिते, **जक्षित्यादयः षट्** (VI. 1. 6.)—जक्ष इत्यादयोऽन्ये षट् धातवो जक्षिश्च अभ्यस्तसंज्ञका भवन्ति। पूर्ववन्नुम्प्रतिषेधः; स्वाद्युत्पत्तिः; सुलोपः; **जक्षत्, जक्षद्, जक्षतौ, जक्षतः;** इत्यादि। एवं जागृ निद्राक्षये, दरिद्रा दुर्गतौ, शासु अनुशिष्टौ, चकासृ दीप्तौ, दीधीङ् दीप्तिदेवनयोः, वेवीङ् वेतिना तुल्ये, इत्येतेभ्यः षड्धातुभ्यः शत्रन्ततया निष्पन्नानां जाग्रत् दरिद्रत् शासत् चकासत् दीध्यत् वेव्यत् इत्येतेषां रूपं नेयम् ॥

17. ककारान्तोऽप्रसिद्धः ॥

18. पकारान्तः पुंलिङ्गो धर्मगुप्-शब्दः। गुपू रक्षणे; धर्म इत्युपपदम्; धर्मं गोपायतीति विग्रहः; क्विप्-प्रत्ययान्तः; पूर्ववत् प्रक्रिया। **धर्मगुप्, धर्मगुब्, धर्मगुपौ, धर्मगुपः;** इत्यादि ॥

इति खयन्तपुंलिङ्गप्रातिपदिकानि ॥

अथ शरन्तपुंलिङ्गानि ॥

1. शकारान्तः पुंलिङ्गो विश्-शब्दः । विश प्रवेशने ; क्विप्-प्रत्ययान्तः ; स्वाद्युत्पत्तिः ; व्रश्चादिना (VIII. 2. 36.) षत्वम् ; जश्त्व-चर्त्वे ; **विट् विड्, विशौ, विशः** । शेषं नेयम् ॥

2. तादृश्-शब्दस्य भेदः । दृशिर् प्रेक्षणे ; तमिवैनं पश्यतीति विग्रहः ; क्विन्प्रत्ययान्ततया निष्पन्नः ; अथ स्वाद्युत्पत्तिः । क्विन् प्रत्ययस्य कुः (VIII. 2. 62.) इति कुत्वम् । **तादृक् तादृग्, तादृशौ, तादृशः** । शेषं नेयम् । एवं यादृश्-एतादृश्-प्रभृतयः ।

3. नश्-शब्दस्य भेदः । नश अदर्शने इति धातोः क्विबन्ततया निष्पन्नस्य स्वाद्युत्पत्तिः ; सुलोपः । नश् इति जाते, **नशेर्वा** (VIII.2. 63.)—नशेः कवर्गो अन्तादेशो वा भवति पदान्तविषये । जश्त्वचर्त्वे—**नक् नग्** ; पक्षे षत्वम्, जश्त्वचर्त्वे—**नट् नड्** ; **नशौ, नशः** ; इत्यादि ॥

4. षकारान्तः पुंलिङ्गो रत्नमुष्-शब्दः । मुष स्तेये ; रत्न इत्युपपदम् ; रत्नं मुष्णातीति विग्रहः ; क्विप्प्रत्ययान्तः । झलां जशोऽन्ते (VIII. 2. 39.) इति जश्त्वम् ; वावसाने (VIII. 4. 56.) इति चर्त्वम् ; **रत्नमुट् रत्नमुड्, रत्नमुषौ, रत्नमुषः** ; इत्यादि । एवं नवनीतमुषादयः ॥

5. षष्-शब्दस्य भेदः । तस्य बह्वर्थवाचित्वात् बहुवचनमेव भवति । ष्णान्ता षट् (I. 1. 24.) इति षट्संज्ञायां, षड्भ्यो लुक् (VII. 1.22.) इति लुक् ; जश्त्वचर्त्वे ; **षट् षड्, षट् षड्, षड्भिः, षड्भ्यः, षड्भ्यः** ; आमि—षट्चतुर्भ्यश्च (VII. 1. 55.) इति नुट् ; पूर्वस्य पद-

संज्ञायां, झलाञ्जशोऽन्ते (VIII. 2. 39.) इति जश्त्वम् ; डकारस्य यरोऽनुनासिकेऽनुनासिको वा (VIII. 4. 45.) इति विकल्पेन णकारे प्राप्ते, **प्रत्यये भाषायां नित्यम्** (वा. VIII. 4. 45.) इति नित्यं नकारस्य ष्टुत्वेन णकारः ; न पदान्तादित्यत्र (VIII. 4. 12) अनामिति पर्युदासात् न ष्टुत्वनिषेधः ; **षण्णाम्** । सप्तमीबहुवचने **ड्सि धुट्** (VII. 3. 29.) इति वा धुडागमः ; **षट्त्सु** ; पक्षे—**षट्सु** ॥

6. सकारान्तः पुंलिङ्गः सुवर्चस्-शब्दः । शोभनं वर्चो यस्य इति विग्रहः । सौ—अत्वसन्तस्य चाधातोः (VI.5.15.) इति दीर्घः ; सुलोपरुत्वविसर्गाः ; **सुवर्चाः, सुवर्चसौ, सुवर्चसः ; हे सुवर्चः, हे सुवर्चसौ, हे सुवर्चसः ; सुवर्चसम्, सुवर्चसौ, सुवर्चसः** । पदसंज्ञायां रुत्वोत्वगुणाः ; **सुवर्चोभ्याम्** । शेषं नेयम् । एवं उन्मनस्-चन्द्रमस्-प्रभृतयः ॥

7. चीरवस् - शब्दस्य भेदः । वस आच्छादने ; चीरं वस्ते इति विग्रहः ; क्विप्प्रत्ययः । धातुत्वात् दीर्घो न भवति ; **चीरवः, चीरवसौ, चीरवसः** । शेषं नेयम् ॥

8. स्रस्-शब्दस्य भेदः । स्रंसु ध्वंसु अवस्रंसने इति धातोः क्विबन्ततया निष्पन्नः स्रस्-शब्दः । दीर्घाभावसुलोपौ पूर्ववत् । पदान्तविषये वसुस्रंसुध्वंस्वनडुहान्दः (VIII. 2. 72.) इति सस्य दत्वम् ; जश्त्वचर्त्वे ; **स्रत् स्रद्, स्रसौ, स्रसः** ; इत्यादि । एवं ध्वस्-शब्दः ॥

9. विद्वस्-शब्दस्य भेदः । विद ज्ञाने इति धातोः वस्वन्ततया निष्पन्नोऽयं विद्वस्-शब्दः ; स्वाद्युत्पत्तिः कृदन्तत्वात् । उगिदचाम् (VII. 1. 70.) इति नुम् ; सान्तेत्यादिना (VI. 4. 10.) उपधादीर्घः ; सुलोपसंयोगान्तलोपौ । अत्र सान्तत्वाभावात् नात्र दत्वम् ; **विद्वान्** ।

द्विवचनादौ अनुस्वारः; **विद्वांसौ, विद्वांसः; हे विद्वन्**; इत्यादि। भसंज्ञायां **वसोस्सम्प्रसारणम्** (VI. 4. 131.)—वस्वन्तस्य भस्याङ्गस्य सम्प्रसारणं भवति। विदु अस् इति जाते पूर्वरूपत्वम्; आदेश-प्रत्यययोः (VIII. 3. 59.) इति षत्वम्; **विदुषः**। पदसंज्ञायां वसु-स्रंस्विति (VIII. 2. 72) दत्वम्; **विद्वद्भ्याम्**॥

विद्वान्, विद्वांसौ, विद्वांसः। हे विद्वन्, हे विद्वांसौ, हे विद्वांसः। विद्वांसम्, विद्वांसौ, विदुषः। विदुषा, विद्वद्भ्याम्, विद्वद्भिः। विदुषे, विद्वद्भ्याम्, विद्वद्भ्यः। विदुषः, विद्वद्भ्याम्, विद्वद्भ्यः। विदुषः, विदुषोः, विदुषाम्। विदुषि, विदुषोः विद्वत्सु॥

एवं सेदिवस्-तस्थिवस्-प्रभृतयः। एतेषाम् इड्विशिष्टवसुप्रत्ययान्तानां शसादावचि विशेषः। सम्प्रसारणे कृते वसुप्रत्ययस्य वलादित्वविनाशेन वलादित्वनिमित्तकस्य इडागमस्यापि नाशो भवति, निमित्तापाये नैमित्तिकस्याप्यपायः इति न्यायात्; **सेदुषः, सेदुषा,** इत्यादि॥

10. श्रेयस्-शब्दस्य भेदः। अयमनयोरातिशयेन प्रशस्यः इति विग्रहः; प्रशस्यशब्दस्य ईयसुन्प्रत्यये परतः श्रादेशे कृते निष्पन्नस्य अस्य तद्धितान्तत्वात् स्वाद्युत्पत्तिः। उगिदचामित्यादिना नुम्; सान्तेत्यादिना दीर्घः; **श्रेयान्, श्रेयांसौ, श्रेयांसः; हे श्रेयन्**; इत्यादि। शसादावचि तु असर्वनामस्थानत्वात् दीर्घनुमागमौ न भवतः; **श्रेयसः, श्रेयसा;** इत्यादि। हलादौ विभक्तौ सुवर्चस्-शब्दवद्रूपं नेयम्।

11. उशनस्-शब्दस्य भेदः। वश कान्तौ इति धातोः **वशेः कनसिः** (उणादि. 688.) इति कनसिप्रत्ययान्ततया निष्पन्नः; कृदन्तत्वात् स्वाद्युत्पत्तिः। उशनस् + सु इति स्थिते, **ऋदुशनस्पुरुदंशोऽनेहसाञ्च** (VII. 1. 94.) इत्यनङादेशः; **सर्वनामस्थाने**

**चासम्बुद्धौ** (VI. 4. 8.) इति दीर्घः ; सुलोपनलोपौ ; **उशना, उशनसौ, उशनसः । उशनसस्सम्बुद्धावपि पक्षेऽनङिष्यते** (वा. VII. 1. 94.); **नलोपप्रतिषेधोऽपि पक्षे इष्यते** (वा); तथा चोक्तम्—

सम्बोधने तूशनसस्त्रिरूपं
सान्तं तथा नान्तमथाप्यदन्तम् ।
माध्यंदिनिर्वष्टि गुणं त्विगन्ते
नपुंसके व्याघ्रपदां वरिष्ठः ॥ इति

**हे उशनन्, हे उशनः, हे उशन** । पदसंज्ञायां रुत्वोत्वगुणाः ; **उशनोभ्याम्** । सप्तमीबहुवचने—**वा शरि** (VIII. 3. 34.) इति विसर्जनीयविकल्पः ; **उशनःसु, उशनस्सु** । शेषं नेयम् । एवम् अनेहसूशब्दस्यापि रूपं नेयम् । सम्बुद्धौ तु सान्तमेकमेव रूपम्॥

12. सुपिस्-शब्दस्य भेदः । सुष्ठु पेसति इति विग्रहः ; पिस गतौ इति धातोः क्विबन्ततया निष्पन्नः ; स्वाद्युत्पत्तिः ; सुपिस्+सु इति स्थिते, सुलोपः सस्य रुत्वं च । सुपिर् इति जाते, **र्वोरुपधाया दीर्घ इकः** (VIII. 2 76.)—रेफवकारान्तस्य धातोरुपधाया इकः दीर्घो भवति पदान्ते। विसर्गः ; **सुपीः । सुपिसौ, सुपिसः** ; इत्यादि । सप्तमीबहुवचने सुपिस् + सु इति स्थिते, सोः इणः परत्वाभावात् षत्वे अप्राप्ते, **नुम्विसर्जनीयशर्व्यवायेऽपि** (VIII 3. 58.)—नुमा विसर्गेण शरा वा व्यवधानेऽपि इण्कोरुत्तरस्य सकारस्य मूर्धन्यादेशो भवति । वा शरि (VIII. 3. 36.) इति विसर्गविकल्पः ; **सुपीःषु** ; पक्षे सस्य ष्टुत्वम्—**सुपीष्षु** । एवं सुतुस् प्रभृतयः ॥

13. पुंस्-शब्दस्य भेदः । **पुंसोऽसुङ्** (VII. 1. 89.)—पुंस-

शब्दस्य असुङादेशो भवति सर्वनामस्थाने परतः । ङकारोऽन्त्यादेशार्थः; उकारो नुमर्थः । उगिदचामित्यादिना (VII. 1. 70.) नुम्; सान्तेत्यादिना (VI. 4. 10.) दीर्घः । सोः अन्यत्र सर्वनामस्थाने, नश्चापदान्तस्य झलि (VIII. 3. 24.) इत्यनुस्वारः । पदसंज्ञायां संयोगान्तस्य लोपः; मोऽनुस्वारः (VIII. 3. 23.) इत्यनुस्वारे कृते, वा पदान्तस्य (VIII. 4. 59.) इति परसवर्णविकल्पः । **पुमान्, पुमांसौ, पुमांसः; हे पुमन्, हे पुमांसौ, हे पुमांसः; पुमांसम्, पुमांसौ, पुंसः; पुंसा, पुंभ्याम्, पुम्भिः**; इत्यादि ॥

14. अदस्-शब्दस्य भेदः । अदस् + सु इति स्थिते, **अदस औ सुलोपश्च** (VII. 2. 107.)—अदस्-शब्दस्य औकारादेशो भवति सौ परतः, सुलोपश्च । अद+औ इति जाते, **तदोस्सस्सावनन्त्ययोः** (VII. 2. 106.) इति दकारस्य सकारः; वृद्धिः; **असौ** । अन्यत्र त्यदाद्यत्वम्; अतो गुणे (VI. 1. 97.) इति पररूपत्वं च । द्विवचने वृद्धिः; अदौ इति जाते, **अदसोऽसेर्दादु दो मः** (VIII.2.80.)–अदसः असकारसम्बन्धिनः दकारात् परस्य वर्णमात्रस्य उवर्णादेशो भवति, दकारस्य च मकारः । **भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति** (परि. 20.) इति ह्रस्वस्य उः, दीर्घस्य ऊः; **अमू** । जसि, जसः शी (VII. 1. 17.) इति शीभावे कृते, गुणः । अदे इति जाते, **एत ईद्बहुवचने** (VIII. 2. 81.)—अदसः असकारान्तस्य दकारात् परस्य एकारस्य ईकारादेशो भवति दकारस्य च मकारः बह्वर्थोक्तौ; **अमी** । **अमुम्, अमू, अमून्** । तृतीयैकवचने मुत्वे कृते घिसंज्ञायाम्, आङो नास्त्रियाम् (VII. 3. 120.) इति ना इत्यादेशः; **अमुना** । ननु च पूर्वत्रासिद्धम् (VIII. 2. 1.) इति मुत्वस्यासिद्धत्वात् नाभावो न

प्राप्नोति; नैष दोषः। **न मु ने** (VIII. 2. 3.)—नाभावे कर्तव्ये मुभावो नासिद्धो भवति। कृते तु नाभावे मुभावस्य असिद्धत्वात्, सुपि च (VII. 3. 102.) इति दीर्घत्वं प्राप्नोति। इति चेत् **सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य** (परि. 85.) इति न भवति। **अमूभ्याम्**; भिसः ऐसि प्राप्ते, नेदमदसोरकोः (VII. 1. 11.) इति ऐसः प्रतिषेधः; **अमीभिः**। पुंलिङ्गसर्वशब्दवत् शेषं नेयम्; मत्वेत्वे बहुवचने, अन्यत्र मत्वोत्वे॥

15. ककारविशिष्टस्य अदकस्-शब्दस्य भेदः। अदकस्+सु इति स्थिते, दस्य सत्वे कृते, अत्राप्यौकारे प्राप्ते, **औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः सादुत्वं च** (वा. VII. 2. 107.)। औत्वप्रतिषेधपक्षे सकारात् परस्य वर्णस्य उकारो भवति; रुत्वविसर्गौ; **असुकः**। अप्रतिषेधपक्षे दकारस्य सत्वे अन्त्यककारस्य औत्वे च कृते **असकौ** इति भवति। अन्यत्र मत्वोत्वे; **अमुकौ, अमुके**। सर्वशब्दवत् रूपं नेयम्॥

**इति हलन्तपुंलिङ्गानि परिसमाप्तानि॥**



## अथ हलन्तस्त्रीलिङ्गप्रातिपदिकानि ॥

1. हकारान्तस्त्रीलिङ्गः उपानह्-शब्दः । णह बन्धने ; उपनह्यते इति विग्रहः ; क्विप्प्रत्ययान्ततया निष्पन्नः ; कृदन्तत्वात्स्वाद्युत्पत्तिः ; सुलोपः ; उपानह् इति स्थिते, **नहो धः** (VIII. 2. 34.)—नहो हकारस्य धकारादेशो भवति झलि परतः पदान्ते च । जश्त्वचर्त्वे ; **उपानत्, उपानद्** । **उपानहौ, उपानहः**, इत्यादि । एवं परीणहादयः ॥

2. उष्णिह्-शब्दस्य भेदः । उत्पूर्वात् ष्णिह प्रीतौ इति धातोः क्विन्-प्रत्ययान्ततया निष्पन्नः ; सुलोपः ; क्विन्नन्तत्वात् कुत्वम् ; जश्त्वचर्त्वे ; **उष्णिक् उष्णिग्** । **उष्णिहौ, उष्णिहः**, इत्यादि । पुंलिङ्गगोधुक्-शब्दवत् रूपं नेयम् ॥

3. यकारान्तोऽप्रसिद्धः ॥

4. वकारान्तस्त्रीलिङ्गो दिव्-शब्दः । पुंलिङ्गसुदिव्शब्दवत् । **द्यौः, दिवौ, दिवः ; दिवम्, दिवौ, दिवः ; दिवा, द्युभ्याम्, द्युभिः** ; इत्यादि ॥

5. रेफान्तस्त्रीलिङ्गो गीर्-शब्दः । गॄ निगरणे ; क्विप्प्रत्ययः ; स्वाद्युत्पत्तिः ; सुलोपः । **र्वोरुपधाया दीर्घ इकः** (VIII. 2. 76.)—रेफवकारान्तस्य धातोः पदस्योपधायाः इको दीर्घो भवति पदान्ते । रेफस्य विसर्गः । **गीः, गिरौ, गिरः ; हे गीः** ; इत्यादि । एवं धूर्-पूर्-शब्दयोः रूपं नेयम् ॥

6. चतुर्-शब्दस्य भेदः । नित्यं बहुवचनान्तः । **त्रिचतुरोः स्त्रियां तिसृचतसृ** (VII. 2. 99.) इति चतस्रादेशः । **अचि र ऋतः**

(VII. 2. 100.) इति रेफादेशः। **नामि** (VI. 4. 3.) इति दीर्घत्वे प्राप्ते **न तिसृचतसृ** (VI. 4. 4.) इति प्रतिषेधः। **चतस्रः, चतस्रः, चतसृभिः, चतसृभ्यः, चतसृभ्यः, चतसृणाम्, चतसृषु** ॥

7. लकारान्तशकारान्तावप्रसिद्धौ ॥

8. मकारान्तः स्त्रीलिङ्गः किम्-शब्दः। **किमः कः** (VII. 2. 103.) इति क इत्यादेशे कृते टाप्; स्त्रीलिङ्गसर्वाशब्दवत्। **का, के, काः**; इत्यादि ॥

9. इदम्-शब्दस्य भेदः। त्यदाद्यत्वं बाधित्वा **इदमो मः** (VII. 2. 108.) इति मत्वम्। **यस्सौ** (VII. 2. 110.)—इदमो दकारस्य यकारादेशो भवति सौ परतः। उत्तरसूत्रे पुंसीति वचनात् स्त्रियामयं यकारः; सुलोपः; **इयम्**। अन्यत्र त्यदाद्यत्वम्, अतो गुणे (VI. 1. 97.) इति पररूपत्वं च; दश्च (VII. 2. 109.) इति मकारः; टाप्; शीभावगुणौ; **इमे, इमाः, इमाम्, इमे, इमाः**। आङि ओसि च अनाप्यकः (VII. 2. 112.) इत्यनादेशः; आङि चापः (VII. 3. 105.) इत्येत्वम्; अयादेशः; **अनया, अनयोः**। ङिद्वचने विभक्तौ सर्वनामत्वात् (VII. 3. 114.) स्याडागमः; हलि लोपः (VII. 2. 113.) इति इदो लोपः; **अस्यै, आभ्याम्**; इत्यादि ॥

अन्वादेशविषये एनादेशः; **एनाम्, एने, एनाः, एनया, एनयोः, एनयोः** ॥

10. ङकारान्तणकारान्तावप्रसिद्धौ ॥

11. नकारान्तस्त्रीलिङ्गः सीमन्-शब्दः। ऋन्नेभ्यो ङीप् (IV.1.5.) इति ङीपि प्राप्ते, **न षट्स्वस्रादिभ्यः** (IV. 1. 10) इति वर्तमाने,

**मनः** (IV. 1. 11.)—मन्नन्तात् प्रातिपदिकात् स्त्रियां ङीप्प्रत्ययो न भवति । राजन्-शब्दवत्; **सीमा, सीमानौ, सीमानः**; इत्यादि । एवं दामन्-बहुराजन्-प्रभृतयः ॥

12. पञ्चन्नादयो नकारान्ताः संख्याशब्दाः । तेषां पुंलिङ्गवत् ॥

13. झकारान्तोऽप्रसिद्धः ॥

14. भकारान्तः स्त्रीलिङ्गः ककुभ्-शब्दः । स्वाद्युत्पत्तिसुलोपजश्त्व-चर्त्वानि पूर्ववत् । **ककुप् ककुब्, ककुभौ, ककुभः**; इत्यादि ॥

15. घकारान्तढकारान्तावप्रसिद्धौ ॥

16. धकारन्तस्त्रीलिङ्गः समिध्-शब्दः । **समित् समिद्, समिधौ, समिधः**; इत्यादि । एवं वीरुधादयः ॥

17. जकारान्तस्त्रीलिङ्गः स्रज्-शब्दः । क्विन्नन्तत्वात् कुत्वम् । **स्रक् स्रग्, स्रजौ, स्रजः**; इत्यादि ॥

18. बगडान्ता अप्रसिद्धाः ॥

19. दकारान्तस्त्रीलिङ्गो दृषद्-शब्दः । **दृषत् दृषद्, दृषदौ, दृषदः** । एवं शरदादयः ॥

20. तद्-शब्दस्य भेदः । त्यदाद्यत्वे कृते टाप् । तदोः सः सौ (VII. 2. 106.) इति सत्वम् । स्त्रीलिङ्गसर्वाशब्दवत् । **सा, ते, ताः**; इत्यादि । एवं त्यद्-एतद्-शब्दयोः रूपं नेयम् । एतद्-शब्दस्य सस्य षत्वम्; अन्वादेशविषये एनादेशश्च ॥

21. खफछठान्ता अप्रसिद्धाः ॥

22. चकारान्तस्त्रीलिङ्गो वाच्-शब्दः । **वाक् वाग्, वाचौ, वाचः** । एवं त्वच्-प्रभृतयः ॥

23. टकारान्ता अप्रसिद्धाः ॥

24. तकारान्तस्त्रीलिङ्गो विद्युत्-शब्दः । द्युत दीप्तौ; विद्योतत इति विग्रहः; क्विप्प्रत्ययान्तः। **विद्युत् विद्युद्, विद्युतौ, विद्युतः**; इत्यादि ॥

25. ककारान्ता अप्रसिद्धाः ॥

26. पकारान्तस्त्रीलिङ्गः अप्-शब्दः । **अप् सुमनस्सिकतासमावर्षाशब्दानां बहुत्वम्** इति बहुवचनमेव भवति । अप्तृन्तृजित्यादिना (VI. 4. 11.) दीर्घः; **आपः**। शसि असर्वनामस्थानत्वात् न दीर्घः; **अपः । अपो भि** (VII. 4. 48.)—अपस्तकारादेशो भवति भकारादौ प्रत्यये परतः; **अद्भिः ।** आपः, अपः, अद्भिः, अभ्यः, अभ्यः, अपाम्, अप्सु ॥

27. शकारान्तस्त्रीलिङ्गो दृश्-शब्दः । क्विन्प्रत्ययस्य कुः (VIII. 2. 62.) इति कुत्वम् । **दृक् दृग्, दृशौ, दृशः**; इत्यादि ॥

28. षकारान्तस्त्रीलिङ्गः त्विष्-शब्दः । जश्त्वचर्त्वे; **त्विट् त्विड्, त्विषौ, त्विषः** ॥

29. सजुष्-शब्दस्य भेदः । सह जुषते इति विग्रहः; क्विप्प्रत्ययान्तः। सुलोपे कृते, **ससजुषो रुः** (VIII. 2. 66.) इति षकारस्य रुत्वम्; **र्वोरुपधाया दीर्घ इकः** (VIII. 2. 76.) इति दीर्घः; **सजूः । सजुषौ, सजुषः**; इत्यादि ॥

30. सकारान्तस्त्रीलिङ्गः सुवर्चस्-शब्दः । पुंलिङ्गसुवर्चस्-शब्दवत् । **सुवर्चाः, सुवर्चसौ, सुवर्चसः**; इत्यादि ॥

31. अदस्-शब्दस्य भेदः । अदस औ सुलोपश्च (VII.2.107.) इति सस्य औकारः सुलोपश्च; तदोस्सस्सावनन्त्ययोः (VII. 2. 106.) इति सकारादेशः; **असौ** । अन्यत्र त्यदाद्यत्वम्; अतो गुणे (VI. 1.

97.) इति पररूपत्वं च । अजाद्यतष्टाप् (IV. 1. 4.) इति टाप्; द्विवचने शीभावगुणौ; अदसोऽसेदादु दो मः (VIII. 2. 80.) इत्युत्वमत्वे; स्याडागमः ङिद्वचने; अत्र सकारस्य षत्वम्; आमि सुडागमः। असौ, अमू, अमूः; अमुम्, अमू, अमूः; अमुया, अमूभ्याम्, अमूभिः; अमुष्यै, अमूभ्याम्, अमूभ्यः; अमुष्याः, अमूभ्याम्, अमूभ्यः; अमुष्याः, अमुयोः, अमूषाम्; अमुष्याम्, अमुयोः, अमूषु॥

---

इति हलन्तस्त्रीलिङ्गप्रातिपदिकानि॥



## अथ हलन्तनपुंसकलिङ्गप्रातिपदिकानि ॥

1. हकारान्तो नपुंसकलिङ्गः स्वनडुह्-शब्दः। शोभनाः अनड्वाहः यस्मिन् तद्वनम् इति विग्रहः। नपुंसकत्वात् (VII. 1. 23.) स्वमोर्लुक्; हकारस्य (VIII. 2. 72.) दत्वम्; जश्त्वचर्त्वे; **स्वनडुत्, स्वनडुद्**; द्विवचने—**स्वनडुही**; शौ सर्वनामस्थानत्वात् (VII. 1. 98. & 72.) आमागमनुमागमौ; अनुस्वारः; **स्वनड्वांहि**। पुनस्तद्वत्। शेषं पुंवत् ॥

2. यकारान्तोऽप्रसिद्धः ॥

3. वकारान्तनपुंसकलिङ्गो विमलदिव्-शब्दः। विमला द्यौः यस्मिन् तत् दिनम् इति विग्रहः। स्वमोर्लुक्; वकारस्य उत्वम्; यणादेशः; **विमलद्यु, विमलदिवी, विमलदिवि**। पुनस्तद्वत्। शेषं पुंवत् ॥

4. रेफान्तो नपुंसकलिङ्गो वार्-शब्दः। **वाः, वारी, वारि**; इत्यादि॥

5. चतुर्-शब्दस्य भेदः। जस्-शसोश्शिरादेशः; चतुरनडुहोरामुदात्तः (VII. 1. 98.) इत्यामागमः; **चत्वारि, चत्वारि**। शेषं पुंलिङ्गवत् ॥

6. लकारान्तशकारान्तावप्रसिद्धौ ॥

7. मकारान्तनपुंसकलिङ्गः किम्शब्दः। स्वमोर्लुक्। प्रत्ययलक्षणेन किमः कः (VII. 2. 103.) इति कादेशे प्राप्ते, न लुमताङ्गस्य (I. 1. 63.) इति प्रतिषेधः। अन्यत्र कादेशे कृते नपुंसकलिङ्गसर्वशब्दवत्। **किम्, के, कानि**; इत्यादि ॥

8. इदम्-शब्दस्य भेदः । स्वाद्युत्पत्तिः; स्वमोर्लुक्; क्लीबत्वात् अय् इत्यादेशः (VII. 2. 111.) न भवति । अन्यत्र त्यदाद्यत्वम्, अतो गुणे (VI. 1. 97.) इति पररूपत्वञ्च; औङश्शीभावः; दश्च (VIII. 2. 75.) इति दकारस्य मकारः; जस्-शसोः शिरादेशो नुमागमश्च । **इदम्, इमे, इमानि** । अन्वादेशविषये एनादेशः । **एनदिति नपुंसकलिङ्गैकवचने वक्तव्यम्** (वा. II. 4. 34.); **एनत् एनद्, एने, एनानि, एनेन, एनयोः** ॥

9. ङकारान्तणकारान्तावप्रसिद्धौ ॥

10. नकारान्तनपुंसकलिङ्गः कर्मन्-शब्दः । भसंज्ञायामल्लोपे (VI.4 134.) प्राप्ते, **न संयोगाद्वमन्तात्** (VI. 4. 137.) इति प्रतिषेधः । **सम्बुद्धौ वा नपुंसकानां नलोपो वक्तव्यः** (वा. VIII. 2. 8.) इति वा नलोपः । **कर्म, कर्मणी, कर्माणि; हे कर्म हे कर्मन्, हे कर्मणी, हे कर्माणि** । पुनः प्रथमावत्; शेषं पुंवत् । एवं चर्मन्-प्रभृतयः ॥

11. सामन्-शब्दस्य भेदः । भसंज्ञायां, **विभाषा ङिश्योः** (VI. 4. 136.) इत्यल्लोपविकल्पः । अन्यत्र अजादौ नित्यमल्लोपः । **साम, साम्नी सामनी, सामानि** । पुनस्तद्वत् । शेषं पुंलिङ्गराजन्-शब्दवत् ॥

12. अहन्-शब्दस्य भेदः । **अह्नो नलोपप्रतिषेधो वक्तव्यः** (वा. VIII. 2. 7.) इति अहन् इति स्थिते, **अहन्** (VIII. 2. 68.)—अहन्शब्दस्य पदस्य रुः भवति; **अहः** । द्विवचने भसंज्ञायाम्, अल्लोपो विकल्पः; **अह्नी अहनी** । बहुवचने—**अहानि** । पुनस्तद्वत् । अन्यत्र भसंज्ञायां नित्यमल्लोपः; पदसंज्ञायां रुत्वम्; **अह्ना, अहोभ्याम्,**

**अहोभिः** । शेषं नेयम् । **अहन्** (VIII. 2. 68.) इति वर्तमाने, **रोऽसुपि** (VIII.2.69.)—अहन्शब्दस्य रेफादेशो भवति न तु सुपि परतः; **अहर्गच्छति, अहर्पतिः** ॥

13. पञ्चन्नादयो नकारान्ताः संख्याशब्दाः पुंलिङ्गवत् ॥

14. झभघढधान्ता अप्रसिद्धाः ॥

15. जकारान्तो नपुंसकलिङ्गः असृज्-शब्दः । चोः कुरिति (VIII. 2. 30.) कुत्वम्; जश्त्वचर्त्वे; पद्दन्नोमास् (VI.1.63.) इत्यादिना शस्-प्रभृतिषु असन् इत्यादेशः । **असृक् असृग्, असृजी, असृञ्जि; असानि, असृजा अस्ना**; इत्यादि । शेषं नेयम् ॥

16. बगडान्ता अप्रसिद्धाः ॥

17. दकारान्तनपुंसकलिङ्गः तद्-शब्दः । स्वमोर्लुगिति (VII. 1. 23.) लुप्तत्वात् न लुमतेति (I. 1. 63.) प्रत्ययलक्षणं न भवति; अतः सुपरत्वाभावात् तदोस्सस्साविति (VII. 2. 106.) सत्वं न भवति । **तत् तद्, ते, तानि**; पुनस्तद्वत्; शेषं पुंवत् । एवं यदेतच्छब्दौ ॥

18. खफछठान्ता अप्रसिद्धाः ॥

19. चकारान्तो नपुंसकलिङ्गः प्राच्-शब्दः । भसंज्ञायाम् **अचः** (VI. 4. 138.) इति अकारलोपः; **चौ** (VI. 3. 138.) इति दीर्घः; जस्-शसोः शिरादेशो नुमागमश्च । **प्राक् प्राग्, प्राची, प्राञ्चि** । एवं प्रत्यच् इत्यादयः । तथैव तिर्यच्-शब्दः; **तिर्यक् तिर्यग्**। भसंज्ञायामकारलोपे अलुप्ताकारत्वाभावात् न तिरसः तिरि इत्यादेशः; **तिरश्ची** । बहुवचने—**तिर्यञ्चि** । पुनस्तद्वत् । शेषं पुंवत् ॥

20. टकारान्तोऽप्रसिद्धः ॥

21. तकारान्तो नपुंसकलिङ्गः शकृत्-शब्दः। **शकृत् शकृद्, शकृती, शकृन्ति**। शसादौ पद्दन्नोमास् इति (VI. 1. 63.) शकृतो यकृतश्च शकन् यकन् इत्यादेशौ वा भवतः; **शकानि शकृन्ति, शक्ना शकृता, शकृद्भ्याम् शकभ्याम्**; इत्यादि। एवं यकृत्-शब्दः॥

22. शत्रन्तानां भेदः। या प्रापणे इति धातोः शत्रन्ततया निष्पन्नः यात्-शब्दः। स्वमोर्लुक्; **यात् याद्**। यात् + ई इति स्थिते, आच्छीनद्योर्नुम् (VII. 1. 80.) इति विकल्पेन नुमागमः; **यान्ती याती**। बहुवचने—**यान्ति**; इत्यादि॥

23. भवच्छब्दस्य भेदः। शप्श्यनोर्नित्यम् (VII. 1. 81.) इति नित्यं नुमागमः। **भवत् भवद्, भवन्ती, भवन्ति**; इत्यादि। तथैव दीव्यत्-शब्दः। **दीव्यत् दीव्यद्, दीव्यन्ती, दीव्यन्ति**; इत्यादि॥

24. अभ्यस्तसंज्ञकानां शत्रन्तानां भेदः। ददत् इति स्थिते स्वमोर्लुक्; औङः शीभावः; जस्-शसोः शिरादेशः; उगित्त्वात् नुमि प्राप्ते, **नाभ्यस्ताच्छतुः** (VII. 1. 78.) इति वर्तमाने, **वा नपुंसकस्य** (VII. 1. 79.)—अभ्यस्तसंज्ञकात् नपुंसकादङ्गादुत्तरस्य शतुर्वा नुमागमो भवति; **ददत् ददद्, ददती, ददति ददन्ति**। पुनस्तद्वत्; शेषं नेयम्। एवं जक्षदित्यादीनामपि रूपं बोध्यम्॥

25. पकारान्तनपुंसकलिङ्गः स्वप्-शब्दः। शोभनाः आपः यस्मिन् तत् सरः इति विग्रहः। स्वमोर्लुक्; **स्वप् स्वब्, स्वपी**। जसि नित्यं परमपि नुमं बाधित्वा प्रतिपदोक्तत्वात् (VI. 4. 11.) दीर्घो भवति। ततो नुम्; **स्वाम्पि**। पुनस्तद्वत्। शेषं स्त्रीलिङ्गक-अप्-शब्दवत्॥

26. अत्र शान्ता अप्रसिद्धाः॥

27. षकारान्तः षष्-शब्दः पुंवत् ॥

28. सकारान्तो नपुंसकलिङ्गः पयस्-शब्दः । स्वमोर्लुक्; **पयः**। अत्र न लुमतेति (I. 1. 63.) निषेधात् अत्वसन्तस्येति (VI. 4. 14.) दीर्घो न भवति; **पयसी**। बहुवचने सान्तेत्यादिना (VI. 4. 10.) दीर्घः; **पयांसि**। शेषं सुवर्चस्-शब्दवत् । ॥

29. अदस्-शब्दस्य भेदः । स्वाद्युत्पत्तिः; स्वमोर्नपुंसकात् (VII. 1. 23.) इति लुक् । असेः इति (VIII. 2. 80.) प्रतिषेधान्न सान्तस्य मुत्वम्; **अदः**। अन्यत्र त्यदाद्यत्वम्, अतो गुणे (VI. 1. 97.) इति पररूपत्वं च; शीभावगुणमत्वोत्वानि; बहुवचने शिरादेशो नुमागमश्च; **अमू, अमूनि**। पुनस्तद्वत् । शेषं पुंवत् ॥

---

**इति हलन्तनपुंसकलिङ्गप्रातिपदिकानि ॥**

---

**इति लिङ्गविशिष्टा हलन्ताः परिसमाप्ताः ॥**



## अथ हलन्तेष्वलिङ्गप्रकरणम् ॥

1. अथ हलन्तेष्वलिङ्गौ युष्मदस्मच्छब्दौ उच्येते । तयोश्चालिङ्गत्वात् त्रिष्वपि लिङ्गेषु समानं रूपम् । कथं? त्वं पुमान्, त्वं स्त्री, त्वं नपुंसकम्; अहं पुमान्, अहं स्त्री, अहं नपुंसकम्; इति । युष्मद् अस्मद् इति स्थिते, **युष्मदस्मद्भ्यां ङसोऽश्** (VII. 1. 27.) इति वर्तमाने, **ङेप्रथमयोरम्** (VII. 1. 28.)—युष्मदस्मद्भ्यामुत्तरस्य ङे इत्येतस्य प्रथमाद्वितीययोश्च विभक्त्योः अमादेशो भवति । युष्मद्+अम्, अस्मद्+अम्, इति स्थिते, **मपर्यन्तस्य** (VII. 2. 91.) इत्यनुवर्तमाने, **त्वाहौ सौ** (VII. 2. 94.)—युष्मदस्मदोः मपर्यन्तस्य सौ परतः त्व अह इत्येतावादेशौ भवतः । त्व अद्+अम्, अह अद्+अम्, इति जाते, **शेषे लोपः** (VII. 2. 90.)—शेषे विभक्तौ परतो युष्मदस्मदोर्दकारस्य लोपो भवति । कश्च शेषः? यत्राकारो यकारश्च न विहितः स शेषः ।

पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।
यान्यद्विवचनान्यत्र शेषे लोपो विधीयते ॥

त्व अ+अम्, अह अ+अम् इति जाते, अतो गुणे (VI. 1. 97.), अमि पूर्वः (VI. 1. 107.), इति पररूपपूर्वरूपे भवतः; **त्वम्, अहम्** । **युवावौ द्विवचने** (VII. 2. 92.)—युष्मदस्मदोः मपर्यन्तस्य द्विवचनविषये युव आव इत्येतावादेशौ भवतः; द्विवचने इत्यर्थग्रहणम् । **प्रथमायाश्च द्विवचने भाषायाम्**

(VII. 2. 88.)—प्रथमायाश्च द्विवचने परतः युष्मदस्मदोः आकारादेशो भवति भाषायां विषये; **युवाम्, आवाम्** । **यूयवयौ जसि** (VII. 2. 93.)—युष्मदस्मदोः मपर्यन्तस्य जसि परतो यूय वय इत्येतावादेशौ भवतः। तथैव अमादेशः, दकारलोपः, पूर्वरूपत्वं च; **यूयम्, वयम्** । **त्वमावेकवचने** (VII. 2. 97.)—युष्मदस्मदोः मपर्यन्तस्यैकत्ववाचिनोः त्व म इत्येतावादेशौ भवतः । त्वद्+अम्, मद्+अम्, इति जाते, **द्वितीयायां च** (VII. 2. 87.)—द्वितीयायां च विभक्तौ परतः युष्मदस्मदोः आकारादेशो भवति; **त्वाम्, माम्** । द्वितीयाद्विवचने प्रथमाद्विवचनवत्; **युवाम्, आवाम्** । शसोऽमि प्राप्ते, **शसो न** (VII. 1. 26.)—युष्मदस्मद्भ्यामुत्तरस्य शसो नकारादेशो भवति । आदेः परस्य (I. 1. 54.) इति शसः अकारस्य नत्वम्; द्वितीयायां च इत्यात्वम्; सस्य संयोगान्तस्य लोपः; **युष्मान्, अस्मान्** । तृतीयैकवचने पूर्ववत् त्वमौ भवतः । **योऽचि** (VII. 2. 89.)—युष्मदस्मदोर्यकारादेशो भवत्यनादेशे अजादौ विभक्तौ परतः । इति दकारस्य यकारः; **त्वया, मया** । भ्यामि द्विवचनत्वात् युव आव इत्यादेशौ भवतः। **युष्मदस्मदोरनादेशे** (VII. 2. 86.)—युष्मदस्मदोराकारादेशो भवत्यनादेशे हलादौ विभक्तौ परतः। इति दस्य आत्वम्; **युवाभ्याम्, आवाभ्याम्** । एवमेव **युष्माभिः, अस्माभिः**। **तुभ्यमह्यौ ङयि** (VII. 2. 95.)—युष्मदस्मदोः मपर्यन्तस्य ङयि परतः तुभ्य मह्य इत्येतावादेशौ भवतः । ङेः अमादेशः (VII. 1. 28.); **तुभ्यम्, मह्यम्**। **भ्यसो भ्यम्** (VII. 1. 30.)—युष्मदस्मद्भ्यामुत्तरस्य भ्यसो भ्यमित्ययमादेशो भवति; दलोपः; **युष्मभ्यम्, अस्मभ्यम्** । अत्र बहुवचने झल्येत् (VII. 2. 102.) इत्येत्वे प्राप्ते,

**अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य** (परि. 92.) इत्येत्वं न भवति। **पञ्चम्या अत्** (VII. 1. 31.) इति वर्तमाने, **एकवचनस्य च** (VII. 1. 32.)—युष्मदस्मद्भ्यामुत्तरस्य पञ्चम्येकवचनस्य अत् इत्ययमादेशो भवति । पूर्ववत् त्वमौ आदेशौ भवतः; **त्वत्, मत्** । **भ्यसो भ्यम्** (VII. 1. 30.) इति वर्तमाने, **पञ्चम्या अत्** (VII. 1. 30.)—युष्मदस्मद्भ्यामुत्तरस्य पञ्चम्याः भ्यसः अत् इत्ययमादेशो भवति। दलोपः; **युष्मत्, अस्मत्** । **तवममौ ङसि** (VII. 2. 96.)—युष्मदस्मदोर्मपर्यन्तस्य ङसि परतः तव मम इत्येतावादेशौ भवतः । तवद्+अस्, ममद्+अस्, इति जाते, **युष्मदस्मद्भ्यां ङसोऽश्** (VII. 1. 27.)—युष्मदस्मद्भ्यामुत्तरस्य ङसः अश् इत्ययमादेशो भवति । दलोपपररूपत्वे; **तव, मम** । ओसि—युव आव इत्यादेशौ; योऽचि (VII. 2. 89.) इति दस्य यत्वं च; **युवयोः, आवयोः** । आमि—शेषे लोपः (VII. 2. 90) इति दकारलोपः; आमि सर्वनाम्नः सुट् (VII. 1. 52.) इति सुडागमः; युष्म + स्+आम्, अस्म+स्+आम्, इति जाते, **साम आकम्** (VII. 1. 33.)—युष्मदस्मद्भ्यामुत्तरस्य सामः आकम् इत्ययमादेशो भवति । ससुट्कस्योपादानं भाविनः सुटो निवृत्त्यर्थम्; **युष्माकम्, अस्माकम्** । ङौ परतः त्वमौ आदेशौ; दकारस्य यत्वम्; **त्वयि, मयि** । ओसि पूर्ववत् । सप्तमीबहुवचने दस्य आत्वम्; **युष्मासु, अस्मासु** ॥

2. अथैनयोरेव युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः क्वचिदादेशविधानाद्रूपभेदः । पुत्रो युवयोः स्वम्, पुत्र आवयोः स्वम्; राजा युवाभ्यां दास्यति, राजा आवाभ्यां दास्यति; देवो युवां रक्षतु, देव आवां रक्षतु । एवं व्यवस्थिते सति, **पदस्य** (VIII. 1. 16.),

**पदात्** (VIII. 1. 17.), **अनुदात्तं सर्वमपादादौ** (VIII. 1. 18.), इति वर्तमाने, **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ** (VIII. 1. 20.)—पदात् परयोः अपादादौ वर्तमानयोः पदत्वविशिष्टयोः युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः यथासंख्यं वाम् नौ इत्येतावादेशौ भवतः। पुत्रो **वां** स्वम्, पुत्रो **नौ** स्वम्; राजा **वां** दास्यति, राजा **नौ** दास्यति; देवो **वां** रक्षतु, देवो **नौ** रक्षतु। अपादादाविति किम्?

रुद्रो विश्वेश्वरो देवो युवयोः कुलदैवतम्।
स एव नाथो भगवान् आवयोः शत्रुकर्शनः॥

**बहुवचनस्य वस्नसौ** (VIII. 1. 21.)—पदात् परयोरपादादौ वर्तमानयोः पदत्वविशिष्टयोर्युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः बहुवचनान्तयोर्यथासंख्यं वस् नस् इत्येतावादेशौ भवतः। पुत्रो **वः** स्वम्, पुत्रो **नः** स्वम्; राजा **वो** दास्यति, राजा **नो** दास्यति; देवो **वो** रक्षतु, देवो **नो** रक्षतु। **तेमयावेकवचनस्य** (VIII. 1. 22.)—पदात् परयोरपादादौ वर्तमानयोः युष्मदस्मदोः षष्ठीचतुर्थीस्थयोरेकवचनान्तयोः यथासंख्यं ते मे इत्येतावादेशौ भवतः। पुत्रः **ते** स्वम्, पुत्रो **मे** स्वम्; राजा **ते** दास्यति, राजा **मे** दास्यति। **त्वामौ द्वितीयायाः** (VIII. 1. 23.)—पदात् परयोरपादादौ वर्तमानयोः युष्मदस्मदोः द्वितीयास्थयोरेकवचनान्तयोः यथासंख्यं त्वा मा इत्यादेशौ भवतः। देवः **त्वा** रक्षतु, देवो **मा** रक्षतु। **सर्वे एते वामनावादयः अनन्वादेशविषये विभाषा वक्तव्याः** (वा. VIII.1.26.); कम्बलः **ते** स्वम्, कम्बलः **तव** स्वम्, कम्बलो **मे** स्वम्, कम्बलो **मम** स्वम्। अनन्वादेश इति किम्? अथो ते ग्रामः, अथो मे ग्रामः। **न चवाहाहैवयुक्ते** (VIII.

1. 24.)—च वा ह अह एव इत्येतैर्युक्ते वान्नावादयो न भवन्ति । पुत्रो युवयोश्च स्वम्, पुत्र आवयोश्च स्वम्; राजा युवाभ्यां च दास्यति, राजा आवाभ्यां च दास्यति; देवो युवां च रक्षतु, देव आवां च रक्षतु। एवं वा ह अह एव इत्येतैः सहापि नेयम् । **पश्यार्थैश्चानालोचने** (VIII. 1. 25.)—पश्यार्था ज्ञानार्थाः; आलोचनं चक्षुर्विज्ञानम्; अनालोचनं मनसा ज्ञानम्; पश्यार्थे अनालोचनार्थे वर्तमानैर्युक्ते युष्मदस्मदोः वान्नावादयो न भवन्ति । ग्रामस्तव स्वं समीक्ष्यागतः, ग्रामो मम स्वं समीक्ष्यागतः; ग्रामस्तुभ्यं दीयमानं समीक्ष्यागतः, ग्रामो मह्यं दीयमानं समीक्ष्यागतः; ग्रामः त्वां समीक्ष्यागतः, ग्रामो मां समीक्ष्यागतः । अनालोचने इति किम्? ग्रामस्त्वा पश्यति ग्रामो मा पश्यति चक्षुषा ॥

3. **सामन्त्रितम्** (II. 3. 48.)—संबोधने या प्रथमा तदन्तं शब्दरूपम् आमन्त्रितसंज्ञं भवति । इति संबुद्ध्यन्तस्य आमन्त्रितसंज्ञायाम्, **आमन्त्रितं पूर्वमविद्यमानवत्** (VIII. 1. 72.) इति अविद्यमानवद्भावेन देव अस्मान् पाहि इत्यत्र पदात् परत्वाभावात् नसादेशो न भवति । संबुद्ध्यन्तस्य सविशेषणत्वे तु **नामन्त्रिते समानाधिकरणे सामान्यवचनम्** (VIII. 1. 73.) इति विशेषणे परतः संबुद्धेः अविद्यमानवद्भावो न भवति; यथा—देव दयालो नः पाहि ॥

---

**इति विभक्त्यवतारः ॥**



## अथ अव्ययावतारः ॥

1. अथ अलिङ्गान्यसंख्यान्यविभक्तिभेदान्यव्ययानि सुबन्तानीति अत्र संक्षेपेणोपदिश्यन्ते । तथाचोक्तम्—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

**स्वरादिनिपातमव्ययम्** (I. 1. 37.)—स्वरादयो निपाताश्च अव्ययसंज्ञाः स्युः ।

2. के पुनः स्वरादयः? स्वर्, अन्तर्, प्रातर्, पुनर्, सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, आरात्, ऋते, युगपत्, पृथक्, ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, आविस्, अवस्, अधस्, समया, निकषा, स्वयम्, मृषा, नक्तम्, नञ्, हे, है, इद्धा, अद्धा, सामि, वत्—ब्राह्मणवत् क्षत्रियवत्—सन्, सनात्, सनत्, तिरस्, अन्तरा, अन्तरेण, ज्योक्, कम्, शम्, सना, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मुधा, मिथ्या; क्त्वातोसुन्कसुनः; कृन्मकारान्तः सन्ध्यक्षरान्तोऽव्ययीभावश्च; पुरा, मिथो, मिथस्, नमस्, हिरुक्; तसिलादिस्तद्धित एधाच्पर्यन्तः; शस्तसी, कृत्वसुच्, सुच्, आच्थालौ, च्व्यर्थाश्च; अम्, आम्, प्रतान्, प्रताम्, प्रशान्; इत्यादयः । आकृतिगणोऽयम् ।

3. अत्र कानिचिदव्ययानि स्वरूपतो निपातितानि कानिचिल्लक्षणलब्धानि । लक्षणलब्धाव्ययानि त्रेधा भवन्ति अव्य-

यीभाव-कृदन्त-तद्धितान्त-भेदेन । **अव्ययीभावाव्ययानि** यथा—मध्येगङ्गम् प्रत्यहम् सूपप्रति इत्यादीनि । **कृदन्ताव्ययानि**—तुमुन्-क्त्वा-णमुल्-ल्यप्-प्रत्ययान्तानि । तोसुन्-कसुनोः प्रयोगो वेदे द्रष्टव्यः । तुमुन्—कर्तुम्; क्त्वा—त्यक्त्वा; णमुल्—इत्थंकारम् यावज्जीवम्; ल्यप्—उपसृत्य विहस्य । अथ **तद्धितान्ताव्ययानि**; आम्—सुतराम् सुतमाम्; वतिः—मातृवत्; तसिल्—सर्वतः परितः; त्रल्—कुत्र सर्वत्र; हः—इह कुह; अत्—क्व; दा—कदा सर्वदा; र्हिल्—एतर्हि; अधुना; दानीम्—इदानीम्; द्यस्—सद्यः; उत्—परुत्; आरिः—परारि; समसण्—ऐषमः; एद्यविः—परेद्यवि; द्यः—अद्य; एद्युस्—अपरेद्युः उभयेद्युः; द्युस्—उभयद्युः; थाल्—यथा सर्वथा; थमुः—इत्थम् कथम्; अस्तातिः—पुरस्तात् अधस्तात्; प्राक् प्रत्यक् उदक्; अतसुच्—दक्षिणतः परतः; रिल्—उपरि; रिष्टातिल्—उपरिष्टात्; आतिः—पश्चात् उत्तरात्; एनप्—अधरेण दक्षिणेन; आच्—दक्षिणा वसति; आहिः—दक्षिणाहि वसति; असिः—पुरः अधः अवः; धा—एकधा षोढा बहुधा; ध्यमुञ्—ऐकध्यं भुङ्क्ते; धमुञ्—द्वैधम् त्रैधम्; एधाच्—द्वेधा त्रेधा; शस्—बहुशः माषशः द्विशः; तसिः—आदितः सर्वतः कृष्णतः; कृत्वसुच्—पञ्चकृत्वः सप्तकृत्वः; सुच्—द्विः त्रिः चतुः; सकृत्; च्व्यर्थेषु—च्विः सातिः त्रा डाच्—कृष्णीभवति, विप्रसात्करोति, देवत्राकरोति, भद्राकरोति ॥

4. तत्र स्वर् इत्येतस्मात् स्वाद्युत्पत्तिः । **अव्ययादाप्सुपः** (II. 4. 82.)—अव्ययाद्विहितस्य आपः सुपश्च लुक् भवति । इति सर्वत्र तदेव रूपं **स्वर्** इति । एवमन्येषामपि रूपैक्यं ज्ञेयम् ॥

5. **प्राग्रीश्वरान्निपाताः** (I. 4. 56.) इति सूत्रवचनात् चादयः प्रादयो गतिसंज्ञका ऊर्यादयः साक्षात्-प्रभृतयश्च अन्ये च केचन गतिनामकाः शब्दा निपातसंज्ञा भवन्ति। **चादयः**—च वा ह अह एव एवम् नूनम् शश्वत् युगपत् सूपत् कूपत् कुवित् नेत् चेत् चण् कच्चित् यत्र नह हन्त माकिम् नकिम् माङ् नञ् यावत् तावत् त्वा त्वै द्वै रै श्रौषट् वौषट् स्वाहा वषट् स्वधा ओम् किल तथा अथ सु स्म अस्मि अ इ उ ऋ ऌ ए ऐ ओ औ अम् तक उञ् उकञ् वेलायाम् मात्रायाम् यथा यत् यम् तत् किम् पुरा अद्धा धिक् हाहा हे है प्याट् पाट् थाट् अहो उताहो हो तुम् तथाहि खलु आम् आहो अथो ननु मन्ये मिथ्या असि ब्रूहि तु नु इति इव वत् चन बत इह आम् शम् कम् अनुकम् नहिकम् हिकम् सुकम् सत्यम् ऋतम् श्रद्धा इद्धा मुधा नोचेत् नचेत् नहि जातु कथम् कुतः कुत्र अव अनु हाहौ हैहा ईहा आहोस्वित् छम्बट् खम् दिष्ट्या पशु वट् सह आनुषक् अङ्ग फट् ताजक् अये अरे चटु बाट् कुम् खुम् घुम् हुम् आईम् शीम् सीम् वै इत्यादयः। उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः। उपसर्गप्रतिरूपकाः—

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते॥

अच उपसर्गात्तः (VII. 4. 47.) इति अत्र तत्वं न भवति। दुर्नीतम्, दुर्नयः; अत्र उपसर्गादिति (VIII. 4. 14.) णत्वं न भवति। **प्रादयः**—प्र परा अप सम् अनु अव निस् दुस् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप। **ऊर्यादयः**—ऊरी-उररी-शब्दावङ्गीकरणे विस्तारे च—ऊरी उररी; पापी ताली आताली वेताली धूसी; शकला संशकला ध्वंसकला भ्रंशकला—एते शकलादयो हिंसायाम्; गुलु-

गुधा पीडार्थे; त्यजूः सहार्थे; फलू फली विक्ली आक्ली इति विकारे; अलोष्ठी कराली केवली शेवाली वर्षाली मस्मसा मसमसा—एते हिंसायाम्; वषट् वौषट् श्रौषट् स्वाहा स्वधा बन्धा प्रादुस् श्रत् आविस्; च्व्यन्ताश्च । **साक्षात्प्रभृतयः**—साक्षात् मिथ्या चिन्ता भद्रा लोचना विभाषा संपत्का आस्था अमा श्रद्धा प्राजर्या प्राजरुहा बीजर्या बीजरुहा संसर्या अर्थे लवणम् उष्णम् शीतम् उदकम् आर्द्रम् प्रादुस् नमस् आविस् । **अन्ये गतिसंज्ञकाः**—अस्तम् प्राध्वम् अलम् अच्छ इत्यादयः। इति एते सर्वेऽपि निपाताः । एभ्योऽपि स्वाद्युत्पत्तिः ; सुपो लुक् च ॥

6. वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपश्चैव हलन्तानां यथा वाचा निशा दिशा ॥

इति अवगाहः वगाहः, अपिधानम् पिधानम् ॥

---

इत्यव्ययावतारः ॥



## अथ स्त्रीप्रत्ययावतारः ॥

---

1. अथ स्त्रीप्रत्ययान्ता निर्दिश्यन्ते । के पुनः स्त्रीप्रत्ययाः? टाप् डाप् चाप् ङीप् ङीष् ङीन् ऊङ् ति इत्येते स्त्रीप्रत्ययाः । प्रथमं तावत् टाप् । **अजाद्यतष्टाप्** (IV. 1. 4.)—अत्र पकारः स्वरार्थः ; टकारः सामान्यग्रहणाविघातार्थः ; अजादिभ्यः प्रातिपदिकेभ्यः अकारान्ताच्च प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति । सवर्णदीर्घः । **अजा** एलका कोकिला चटका अश्वा मूषिका बाला वत्सा इत्येवमादयः अजादयः । **जाया** दत्ता देवदत्ता गता भक्ता भुक्ता इत्येवमादयः अकारान्ताः । अजादिग्रहणं किम्? जातेरस्त्रीविषयादयोपधात् (IV. 1. 63.), वयसि प्रथमे (IV. 1. 20.), इत्येवमादिभिः ङीष्ङीपौ प्राप्नुतः; तद्बाधनार्थमजादिग्रहणं कृतम् । **सम्भस्त्राजिनशणपिण्डेभ्यः फलात्** (वा. IV. 1. 4.) इति च टाप् ङीषो बाधनाय विधीयते; **संफला, पिण्डफला,** इत्यादि । **सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्** (वा.) इति टाप् तथैव; **सत्पुष्पा, एकपुष्पा,** इत्यादि । **शूद्रा चामहत्पूर्वा जातिः** (वा.) इति **क्रुञ्चा, कनिष्ठा**। शूद्रजातिवचने तु **महाशूद्री**—शब्दोऽयमाभीरजातिवचनः । **मूलान्नञः** (वा.) इति **अमूला** । इति टाप् ॥

2. अथ डाप् । दामन् सीमन् बहुयज्वन् इत्येतेषां डाप् भवति । बहुयज्वन इत्यत्र बहवो यज्वानो यस्यां नगर्यां सन्तीति विग्रहे बहुव्रीहिः ।

**ऋन्नेभ्यो ङीप्** (IV. 1. 5.) इति ङीपि प्राप्ते, **मनः** (IV.1.11.) —मन्नन्तात् प्रातिपदिकात् स्त्रियां ङीप्प्रत्ययो न भवति ; इति प्रतिषेधः। **अनो बहुव्रीहेः** (IV. 1. 12.)—अन्नन्तात् बहुव्रीहेः स्त्रियां ङीप्-प्रत्ययो न भवति । **डाबुभाभ्यामन्यतरस्याम्** (IV. 1. 13.)— मन्नन्तात् प्रातिपदिकात् अन्नन्ताच्च बहुव्रीहेः स्त्रियां डाप्प्रत्ययो भवति अन्यतरस्याम् । डकारष्टिलोपार्थः ; टेः (VI. 4. 143.) इति टिलोपः ; जायाशब्दवत् ; **दामा दामे दामाः, सीमा सीमे सीमाः, बहुयज्वा बहुयज्वे बहुयज्वाः** । अन्यत्र डापः अभावपक्षे राजन्-शब्दवत् । बहुराजन् इत्यत्र, **अन उपधालोपिनोऽन्यतरस्याम्** (IV. 1. 28.)—उपधालोपिनः अन्नन्तात् बहुव्रीहेः ङीप्प्रत्ययो भवत्यन्यतरस्याम् । यचि भम् (I.4.18.) इति भसंज्ञायाम्, **अल्लोपोऽनः** (VI. 4. 134.) इत्यकारलोपः ; स्तोः श्चुना श्चुः (VIII. 4. 40.) इति चुत्वम् ; **बहुराज्ञी** नगरी । पक्षे डाप् तन्निषेधश्च ; **बहुराजे बहुराजानौ** वा नगर्यौ । **अनो बहुव्रीहेः** इति बहुव्रीहौ अनुपधा-लोपिनो ङीप्प्रतिषेधार्थं वचनम् । इति डाप् ॥

3. अथ चाप् । कुमुदस्य गन्धः कुमुदगन्धः ; कुमुदगन्ध इव गन्धो यस्येति विग्रहे कुमुदगन्धिः ; कुमुदगन्धेरपत्यमिति विग्रहे कौमुद-गन्ध इति स्थिते, कौमुदगन्धस्यापत्यं स्त्री कुमुदगन्धेः गोत्रापत्यं स्त्री इति वा विग्रहे, ष्यङ्प्रत्ययान्ततया निष्पन्नस्य तद्धितान्तस्य ङीषि प्राप्ते, **यङश्चाप्** (IV. 1. 74.)—यङन्तात् प्रातिपदिकात् चाप् प्रत्ययो भवति । यङः इति ञ्यङ्ष्यङोः सामान्यग्रहणम् ; चकारः स्वरार्थः ; पकारः सामान्यग्रहणाविघातार्थः ; सवर्णदीर्घः ; जायाशब्दवत् ; **कौमुदगन्ध्या कौमुदगन्ध्ये कौमुदगन्ध्याः** । एवं **कौसल्या कारी-**

**षगन्ध्या** इत्यादयः। पूतिमाषस्य गोत्रापत्यं स्त्री इति विग्रहे यञ्प्रत्ययान्तात् पौतिमाष्यशब्दात् ङीपि प्राप्ते, **षाच्च यञः** (वा. IV. 1. 74.)—षकारात् परो यो यञ् तदन्तात् चाप् वक्तव्यः; इति **पौतिमाष्या**। अवटस्य गोत्रापत्यं स्त्री इति विग्रहे आवट्यशब्दात् यञ्प्रत्ययान्तात् ङीपि प्राप्ते, **आवट्याच्च** (IV. 1. 75.)—अस्मात् चाप् स्यात्; इति **आवट्या**। इति चाप्॥

4. अथ ङीप्। **ऋन्नेभ्यो ङीप्** (IV. 1. 5.)—ऋकारान्तानां नकारान्तानां च प्रातिपदिकानां स्त्रियां ङीप् प्रत्ययो भवति; **कर्त्री, राज्ञी**। **उगितश्च** (IV. 1. 6.)—उगिदन्तात् प्रातिपदिकात् स्त्रीत्वविवक्षायां ङीप् स्यात्; **भवती, अतिभवती, अर्वती, महती**। **धातोरुगितः प्रतिषेधो वक्तव्यः** (वा. IV. 1. 6.) इति पर्णध्वत् उखास्रत् इत्यत्र उगित्त्वेऽपि ङीप् न भवति। **प्राची अर्वाची प्रतीची उदीची** इत्यत्र तु, **अञ्चतेश्चोपसंख्यानम्** (वा. IV. 1. 6.) इति ङीप्। धीवन् पीवन् शर्वन् परलोकदृश्वन् इत्यत्र, **वनो र च** (IV. 1. 7.)—वन्नन्तात् प्रातिपदिकात् स्त्रियां ङीप्प्रत्ययो भवति रेफश्चान्तादेशः; **धीवरी पीवरी शर्वरी परलोकदृश्वरी**। ऋन्नेभ्यो ङीप् (IV. 1. 5.) इत्येव ङीपि सिद्धे तत्सन्नियोगेन रेफादेशार्थमिदं वचनम्। सहयुध्वन् अवावन् इत्यत्र वन्नन्तत्वात् ङीपि रेफे च प्राप्ते, **वनो न हशः** (वा. IV. 1. 7.)—हशन्तात् धातोः विहितो यो वन् तदन्तात् प्रातिपदिकात् स्त्रियां ङीप् रश्च न भवतः; इति **सहयुध्वा अवावा**। **बहुव्रीहौ वा** (वा. IV. 1. 7.) इत्यनेन ङीब्रयोः विकल्पः; **बहुधीवरी बहुधीवा**; पक्षे डाप्—**बहुधीवे** ब्राह्मण्यौ। द्विपात् त्रिपात् चतुष्पात् इति समासान्ततया निष्पन्नानां स्त्रीत्वविवक्षायां

**पादोऽन्यतरस्याम्** (IV. 1. 8.)—पादिति समासान्तः; पादशब्दो निर्दिश्यते; पादशब्दात् कृतसमासान्तात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति अन्यतरस्याम्। द्विपाद्+ई इति जाते, भसंज्ञायां, पाद्-शब्दस्य पद् इत्यादेशो भवति; **द्विपदी**; पक्षे—**द्विपात्**। एवमेव **त्रिपदी त्रिपात्**। चतुःपादित्यत्र, **इदुदुपधस्य चाप्रत्ययस्य** (VIII. 3. 41.)—इकारोकारोपधस्य च अप्रत्ययस्य विसर्जनीयस्य षकारादेशो भवति कुप्वोः परतः। चतुष्पाद् इति जाते ङीपि पदादेशे च **चतुष्पदी**। **चतुष्पात्** इति पक्षे। **टाबृचि** (IV. 1. 9.)—ऋचि वाच्यायां पाद् इति शब्दान्तात् स्त्रियां टाप् प्रत्ययो भवति। ङीपोऽपवादः; **त्रिपदा** गायत्री। ऋचीति किम्? द्विपदी देवता। **न षट्स्वस्रादिभ्यः** (IV. 1. 10.)—यो यः स्त्रीप्रत्ययः प्राप्तः स सर्वः अत्र न भवतीति प्रतिषिध्यते। पञ्च सप्त नव दश वा ब्राह्मण्यः; स्वस्रादिभ्यः इति—स्वसा, दुहिता, ननान्दा, याता, माता, तिस्रः, चतस्रः। **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ख्युनाम्** (IV. 1. 15.)—अत्र अत इति सर्वत्रानुवर्तते; ततः सति सम्भवे विशेषणं भवति; एतदन्तेभ्यः स्त्रियां ङीप्। टितस्तावत्—**चरेष्टः** (III. 2. 16.) इति टप्रत्ययः; **कुरुचरी, मद्रचरी**। ढस्य—**स्त्रीभ्यो ढक्** (IV. 1. 120.) इति **सौपर्णेयी, वैनतेयी**। अणः—**कर्मण्यण्** (III. 2. 1.) इति **कुम्भकारी, नगरकारी**। तस्येदम् (VI. 3. 120.) इति अणि च ङीप्; **ऐन्द्री**। **ताच्छीलिके णेऽपि अण्कृतानि भवन्ति** (परि. 87.); चुरा शीलं यस्याः सा **चौरी**। अञः—**उत्सादिभ्योऽञ्** (IV. 1. 86.) इति **औत्सी, औदपानी**। द्वयसचः—**जानुद्वयसी**; दघ्नचः—**ऊरुदघ्नी**; मात्रचः—

**ऊरुमात्री** । प्रमाणे द्वयसज्दघ्नञ्मात्रचः (V. 2. 37.) इति द्वयसज़ादयः प्रमाणवाचिनः । **संख्याया अवयवे तयप्** (V. 2. 42.) इति **पञ्चतयी, दशतयी** । ठकः—**तेन दीव्यति खनति जयति जितम्** (VI. 4. 2.) इति **आक्षिकी, शालाकिकी** । ठञः—**लवणाट्ठञ्** (IV. 4. 52.) इति **लावणिकी** । कञः—**त्यदादिषु दृशोऽनालोचने कञ्च** (III. 2. 60.) इति **तादृशी, यादृशी** । क्वरपः—**इण्णशजिसर्तिभ्यः क्वरप्** (III. 2. 163.) इति **इत्वरी, नश्वरी, जित्वरी, सृत्वरी** । ख्युनः—**आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्** (III. 2. 56.) इति **आढ्यंकरणी सुभगंकरणी** इत्यादि । **नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्**(वा.) इति **स्त्रैणी, पौंस्नी, शाक्तीकी, तरुणी, तलुनी** । **यञश्च** (IV. 1. 16.)—ङीप् इत्येव ; यञन्ताच्च प्रातिपदिकात् स्त्रियां ङीप्प्रत्ययो भवति । गर्गस्य गोत्रापत्यं स्त्री इति विग्रहे, गर्गशब्दात् **गर्गादिभ्यो यञ्** (IV. 1. 105.) इति यञि, **यस्येति च** (IV. 4. 181.) इति अकार लोपे कृते, गार्ग्य्+ई इति जाते, **हलस्तद्धितस्य** (VI. 4. 150.)—हल उत्तरस्य तद्धितयकारस्य उपधाभूतस्य लोपः स्यात् ईति परे ; **गार्गी** । **आपत्यग्रहणं कर्तव्यम्** (भा) ; इह माभूत्—**द्वैप्या** । **प्राचां ष्फ तद्धितः** (IV. 1. 17.)—यञ इत्येव ; प्राचामाचार्याणां मतेन यञन्तात् स्त्रियां ष्फप्रत्ययो भवति, स च तद्धितसंज्ञः । षकारो ङीषर्थः । प्रत्ययद्वयेन इह स्त्रीत्वं व्यज्यते ; तद्धितग्रहणं प्रातिपदिकसंज्ञार्थम् ; **गार्ग्यायणी** । अन्येषां मते **गार्गी, वात्सी** । सर्वत्रग्रहणमुत्तरसूत्रादिहापकृष्यते बाधकबाधनार्थम् ; आवट्याच्चापं वक्ष्यति, तं बाधित्वा ष्फ

एव यथा स्यात् ; **आवट्यायनी** । **सर्वत्र लोहितादिकतन्तेभ्यः** (IV. 1. 18.)—यञ इत्येव ; पूर्वेण विकल्पे प्राप्ते नित्यार्थं वचनम् ; लोहितादिभ्यः कतपर्यन्तेभ्यः यञन्तेभ्यः स्त्रियां ष्फप्रत्ययो भवति सर्वत्र ; **लौहित्यायनी, बाभ्रव्यायणी** । **कौरव्यमाण्डूकाभ्यां च** (IV. 1. 19.)—कौरव्यमाण्डूकाभ्यां स्त्रियां ष्फो भवति। यथाक्रमं टाप्ङीपोरपवादः ; **कौरव्यायणी माण्डूकायनी** । **आसुरेरुपसंख्यानम्** (वा.) इति **आसुरायणी** । **वयसि प्रथमे** (IV. 1. 20.)—कालकृतशरीरावस्था यौवनादिर्वयः ; तत्र प्रथमे वयसि यत्प्रातिपदिकं श्रुत्या वर्तते तत्र स्त्रियां ङीप्प्रत्ययो भवति ; **कुमारी, किशोरी, कलभी, तरुणी** । प्रथम इति किम् ? वृद्धा । अत इत्येव ; **शिशुः** । **वयस्यचरम इति वक्तव्यम्** (वा. IV. 1. 20.) इति **वधूटी चिरण्टी** इत्यत्रापि ङीप् ; द्वितीयवयोवचनावेतौ । श्रुत्येत्येव ; **उत्तानशया** । कथम् कन्या ? **कन्यायाः कनीन च** (IV.1.116.) इति निर्देशात् । **द्विगोः** (IV.1.21.)—द्विगुसमासात् स्त्रियां ङीप् प्रत्ययो भवति ; **पञ्चपूली, दशपूली** । त्रिफला. इत्यत्र अनेन सूत्रेण ङीप्प्रत्ययो न भवति अजादिगणे पाठात् । तद्धितार्थद्विगावपि अनेन सूत्रेण ङीपि प्राप्ते, **अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि** (IV. 1. 22.)—अपरिमाणान्तात् द्विगोः बिस्ताचितकम्बल्यान्ताच्च तद्धितलुकि सति ङीप्प्रत्ययो न भवति ; पञ्चभिरश्वैः क्रीता **पञ्चाश्वा** ; **द्विबिस्ता, द्व्याचिता, द्विकम्बल्या** । अपरिमाणेति किम् ? द्व्याढकी । द्वे काण्डे प्रमाणमस्या इति विग्रहे द्विकाण्डशब्दात् ङीपि प्राप्ते, **काण्डान्तात् क्षेत्रे** (IV. 1. 23.)—काण्डशब्दान्तात् द्विगोः तद्धितलुकि सति क्षेत्रे वाच्ये ङीप् न

भवति ; **द्विकाण्डा** क्षेत्रभक्तिः । पूर्वेणैव निषेधे सिद्धे क्षेत्र इति नियमार्थं वचनम् ; तस्मात् **द्विकाण्डी** रज्जुः । **पुरुषात् प्रमाणेऽन्यतरस्याम्** (IV. 1. 24.)—प्रमाणे यः पुरुषशब्दः तदन्तात् द्विगोः तद्धितलुकि सति ङीप् वा भवति ; द्वौ पुरुषौ प्रमाणमस्याः परिखायाः **द्विपुरुषी द्विपुरुषा** । विकल्पार्थमिदं वचनम् । **अन्तर्वत्पतिवतोर्नुक्** (IV. 1. 32.)—एतयोर्नुगागमो भवति ङीप् च ; **अन्तर्वत्नी** गर्भिणी, **पतिवत्नी** जीवत्पतिका । **पत्युर्नो यज्ञसंयोगे** (IV. 1. 33.)—पतिशब्दस्य नकारादेशो ङीप् च भवति यज्ञसंयोगे गम्यमाने ; यजमानस्य **पत्नी** । यज्ञसंयोग इति किम् ? ग्रामस्य पतिरियं ब्राह्मणी । वृषलस्य पत्नी इत्युपमानात् भविष्यति । कुण्डमिव ऊधो यस्याः इति विग्रहे, **ऊधसोऽनङ्** (V. 4. 131.)—ऊधोऽन्तस्य बहुव्रीहेः स्त्रियामनङादेशो भवति । कुण्डोधन् इति जाते, डाप्-ङीप्-निषेधेषु प्राप्तेषु, **बहुव्रीहेरूधसो ङीष्** (IV. 1. 25.) इति ङीष् भवति ; भसंज्ञायामल्लोपः ; **कुण्डोध्नी** । **संख्याव्ययादेर्ङीप्** (IV. 1.26.)इति ङीप् ; ङीषोऽपवादः ; **द्व्यूध्नी, अत्यूध्नी** । **दामहायनान्ताच्च** (IV. 1. 27.)—संख्यादेः बहुव्रीहेः दामान्तात् हायनान्ताच्च ङीप् भवति । दामान्ते डाप्प्रतिषेधयोः हायनान्ते टापश्च प्रसक्तौ वचनम् ; **द्विदाम्नी द्विहायनी** बाला । अव्ययपदस्य अननुवृत्त्या **उद्दामा** वडवा इति सिद्धम् । हायनो वयसि स्मृतः ; तेनेह न भवति—**द्विहायना** शाला । णत्वमपि त्रिचतुर्भ्यां हायनस्य वयस्येव स्मर्यते ; **त्रिहायणी** बाला, **त्रिहायना** शाला । **वर्णादनुदात्तात्तोपधात्तो नः** (IV. 1. 39.)—वर्णवाचिनः प्रातिपदिकादनुदात्तान्तात्तकारोपधात् स्त्रियां वा ङीप् प्रत्ययो भवति तकारस्य च नकारः ; **एता एनी, श्येता श्येनी**

**हरिता हरिणी । असितपलितयोः प्रतिषेधः** (वा.) ; इति **असिता, पलिता** । इति ङीप् ॥

5. अथ ङीष् । **अन्यतो ङीष्** (IV. 1. 40.)—वेति निवृत्तम् ; तोपधादन्यस्मात् प्रातिपदिकात् वर्णवाचिनः अनुदात्तान्तात् स्त्रियां ङीष्-प्रत्ययो भवति । ङीप्ङीषोः स्वरे विशेषः ; **सारङ्गी, कल्माषी, शबली । षिद्गौरादिभ्यश्च** (IV. 1. 41.)—षिद्भ्यः प्रातिपदिकेभ्यो गौरादिभ्यश्च स्त्रियां ङीष् प्रत्ययो भवति । षिद्भ्यस्तावत्, **जल्पभिक्षकुट्टलुण्टवृङः षाकन्** (III. 2. 155.) इति षाकन्-प्रत्ययान्तेभ्यः—**जल्पाकी, भिक्षाकी, कुट्टाकी, लुण्टाकी, वराकी । शिल्पिनि ष्वुन्** (III. 1. 145.) इति **नर्तकी, खनकी, रजकी** । गौरादिभ्यश्च—**गौरी, आमलकी, बदरी, शुनी । अनडुहः स्त्रियां वेति वक्तव्यम्** (वा. VII. 1. 98.) इत्यामागमो वा ; **अनड्वाही अनडुही । जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु** (IV. 1. 42.)—जानपदादिभ्यः एकादशप्रातिपदिकेभ्यः एकादशस्वेव वृत्त्यादिष्वर्थेषु ङीष् भवति । **जानपदी** भवति वृत्तिश्चेत् ; ङीबुत्पन्ना जानपदी अन्या ; स्वरे विशेषः । **कुण्डी** भवति अमत्रश्चेत् ; कुण्डान्या । **गोणी** भवत्यावपनश्चेत् ; गोणान्या । **स्थली** भवति अकृत्रिमा चेत् ; स्थलान्या । **भाजी** भवति श्राणा चेत् ; पक्वेत्यर्थः ; भाजान्या । **नागी** भवति स्थौल्यं चेत् ; नागान्या । **काली** भवति वर्णश्चेत् ; कालान्या । **नीली** भवति अनाच्छादनश्चेत् ; नीलान्या । **नीलादोषधौ** (वा.); **प्राणिनि च** (वा) ; इति नीली ओषधिविशेषः, नीली गौः । **कुशी** भवति

अयोविकारश्चेत् ; कुशान्या । **कामुकी** भवति मैथुनेच्छा चेत् ; कामुकान्या । **कबरी** भवति केशवेशश्चेत् ; कबरान्या । **शोणात् प्राचाम्** (IV. 1. 13.)—प्राचां मतेन शोणादपि ङीष् भवति ; **शोणी**। पक्षे—**शोणा** । **वोतो गुणवचनात्** (IV. 1. 44.)—गुणमुक्तवान् गुणवचनः ; गुणवचनात् उकारान्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो वा भवति ; **पट्वी पटुः, मृद्वी मृदुः** । उत इति किम्? शुचिरियं ब्राह्मणी । गुणवचनादिति किम्? आखुः । **खरुसंयोगोपधात् प्रतिषेधो वक्तव्यः** (वा. IV. 1. 44.) ; खरुरियं ब्राह्मणी इत्यत्र **खरुः** पतिंवरा कन्या ; सा च **पाण्डुः** इत्येव ।

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥

**बह्वादिभ्यश्च** (IV. 1. 45.)—बहु इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति ; **बह्वी बहुः , पद्धती पद्धतिः** । **प्राण्यङ्गवाचिनो वा ङीष् वक्तव्यः** (वा.) इति **अङ्गुली अङ्गुलिः, श्रोणी श्रोणिः** । **कृदिकारादक्तिनो वा ङीष् वक्तव्यः** (वा.) ; कृतः इकारः कृदिकारः ; **दर्विः दर्वी** ; दृ विदारणे इति धातोः विन् प्रत्ययः । अक्तिनः इति किम्? कृतिः, हृतिः । **सर्वतोऽक्तिन्नर्थादित्येके** (ग) इति **राजिः राजी, धूलिः धूली** । अक्तिन्नर्थादिति किम्? ग्लानिः, म्लानिः, ज्यानिः, हानिः । **पुंयोगादाख्यायाम्** (IV. 1. 48.)—पुंयोगः पुंसा योगः ; पुंस आख्याभूतं यत् प्रातिपदिकं पुंयोगात् स्त्रियां वर्तते तस्मात् ङीष् भवति ; गणकस्य स्त्री **गणकी** ; महामन्त्रस्य स्त्री **महामन्त्री** । योगस्तावत् सम्बन्धः, न तु दाम्पत्यमात्रम् । **गोपालिकादीनां प्रतिषेधो वक्तव्यः** (वा.) इति

गोपालकस्य स्त्री **गोपालिका** । **इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्** (IV. 1. 49.)—इन्द्रादिभ्यः शब्देभ्यः स्त्रियां ङीष्प्रत्ययो भवत्येषामानुगागमश्च; **इन्द्राणी, वरुणानी, भवानी, शर्वाणी, रुद्राणी, मृडानी** । हिमारण्ययोर्महत्त्वे—महद्धिमं **हिमानी**, महारण्यम् **अरण्यानी** ; यवाद्दोषे—दुष्टो यवो **यवानी** ; यवनाल्लिप्याम्—**यवनानी** लिपिः । **उपाध्यायमातुलाभ्यां वा** (वा.) इति **उपाध्यायी उपाध्यायानी, मातुली मातुलानी** । **आचार्यादणत्वं च** (वा) इति **आचार्यानी** ; पक्षे—**आचार्या** । **अर्यक्षत्रियाभ्यां वा** (वा.) इति **अर्या अर्याणी, क्षत्रिया क्षत्रियाणी** । विना पुंयोगेन स्वार्थ एवायं विधिः, पुंयोगे तु ङीषेव—**अर्यी, क्षत्रियी** । **क्रीतात् करणपूर्वात्** (IV. 1. 50.)—करणपूर्वात् क्रीतशब्दान्तात् अदन्तात् स्त्रियां ङीष्प्रत्ययो भवति ; वस्त्रेण क्रीयते सा इति **वस्त्रक्रीती** ; एवमेव **अश्वक्रीती** इत्यादि । करणपूर्वात् किम् ? सुक्रीता, दुष्क्रीता । सा हि तस्य धनक्रीता इत्यत्र क्रीताशब्देन टाबन्तेन समासः ; अदन्तत्वाभावान्न ङीष् । **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्** (IV. 1. 54.)—स्वाङ्गमिति प्राण्यङ्गमुच्यते ; उपसर्जनादसंयोगोपधात् स्वाङ्गवाचिनः प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो वा भवति ; **अतिकेशी अतिकेशा, चन्द्रमुखी चन्द्रमुखा** । असंयोगोपधात् इति किम् ? सुगुल्फा, सुपार्श्वा । स्वाङ्गादिति किम् ? बहुयवा । उपसर्जनादिति किम् ? शिखा ।

अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं चेत् तेन चेत् तत् तथा युतम् ॥

**अङ्गगात्रकण्ठेभ्य इति वक्तव्यम्** (वा.) इति **मृदङ्गी मृदङ्गा, मृदुगात्री मृदुगात्रा, किन्नरकण्ठी किन्नरकण्ठा। नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाच्च**(IV.1.55.)–उपसर्जनादित्येव; नासिकाद्यन्तात् प्रातिपदिकात् स्त्रियां वा ङीष् प्रत्ययो भवति। बह्वज्लक्षणे संयोगोपधलक्षणे च प्रतिषेधे प्राप्ते इदं वचनमारभ्यते; **तुङ्गनासिकी तुङ्गनासिका, तलोदरी तलोदरा, बिम्बोष्ठी बिम्बोष्ठा, दीर्घजङ्घी दीर्घजङ्घा, समदन्ती समदन्ता, चारुकर्णी चारुकर्णा, तीक्ष्णशृङ्गी तीक्ष्णशृङ्गा। पुच्छाच्चेति वक्तव्यम्** (वा.) इति **कल्याणपुच्छी कल्याणपुच्छा। न क्रोडादिबह्वचः** (IV. 1. 56.)—स्वाङ्गादिति ङीष् प्राप्तः प्रतिषिध्यते; क्रोडाद्यन्तात् बह्वजन्तात् च प्रातिपदिकात् स्त्रियां ङीष्प्रत्ययो न भवति; **कल्याणक्रोडा, कल्याणखुरा, कल्याणघोणा, कल्याणनखा।** क्रोडादिराकृतिगणः; **सुरागा, सुगला।** बह्वचः खल्वपि—**पृथुजघना, महाललाटा। सहनञ्विद्यमानपूर्वाच्च** (IV. 1. 57.)–सहादिपूर्वात् प्रातिपदिकात् स्वाङ्गवाचिनः स्त्रियां ङीष् न भवति; **सकेशा, अकेशा, विद्यमानकेशा; सोदरा, अनुदरा, विद्यमानोदरा। नखमुखात् संज्ञायाम्** (IV. 1. 58.)–नखमुखशब्दान्तात् संज्ञावाचिनः स्त्रियां ङीष् न भवति; **पूर्वपदात् संज्ञायामगः** (VIII.4.3.)–पूर्वपदस्थात् निमित्तात् परस्य नस्य णः स्यात् संज्ञायाम्, न तु गकारव्यवधाने; **शूर्पणखा, अयोमुखा।** संज्ञायामेव; अन्यत्र **ताम्रमुखी। जातेरस्त्रीविषयादयोपधात्** (IV. 1. 63.)–जातिवाचि यत्प्रातिपदिकं न च स्त्रियामेव नियतम् अयकारोपधश्च तस्मात् स्त्रियां ङीष् प्रत्ययो भवति।

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाऽख्यातनिर्ग्राह्या गोत्रञ्च चरणैस्सह ॥

**कुक्कुटी, सूकरी, ब्राह्मणी, वृषली**। जातेरिति किम् ? मुण्डा, श्लक्ष्णा । अस्त्रीविषयादिति किम् ? क्षत्रिया, वैश्या । **योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः** (वा.) इति **हयी** ; इत्यादि । **पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च** (IV. 1. 64.)—पाकाद्युत्तरपदात् जातिवाचिनः स्त्रियां ङीष् भवति ; **ओदनपाकी** इत्यादि । **इतो मनुष्यजातेः** (IV. 1. 65.)—इकारान्तात् मनुष्यजातिवाचिनः प्रातिपदिकात् स्त्रियां ङीष् भवति; **जानकी, वैदेही, अवन्ती, कुन्ती**। जातेरित्यनुवर्तमाने पुनः तद्ग्रहणं योपधादपि ङीष्-विधानार्थम् ; **औदमेयी**। मनुष्यजातिग्रहणं किम् ? तित्तिरिः । इति ङीष् ॥

6. अथ ङीन्। **शार्ङ्गरवाद्यञो ङीन्** (IV.1.73.)—शार्ङ्गरव इत्येवमादिभ्यः शब्देभ्यः अञन्तेभ्यश्च स्त्रियां ङीन् प्रत्ययो भवति ; **शार्ङ्गरवी, कापटवी, वैदी, और्वी** । **नृनरयोर्वृद्धिश्च** (ग) इति **नारी** । इति ङीन् ॥

7. अथ ऊङ् । **ऊङुतः** (IV.1.66.)—उकारान्तात् मनुष्यजातिवाचिनः प्रातिपदिकात् स्त्रियाम् ऊङ् प्रत्ययो भवति। ङकारो **नोङ्धात्वोः** (VI.1.175.) इति विशेषणार्थः ; सवर्णदीर्घः । **अन्तादिवच्च** (VI. 1. 85.)—योयमेकादेशः स पूर्वं प्रत्यन्तवत् भवति परं प्रत्यादिवच्च । इत्यन्तवद्भावात् प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । वर्णाश्रयविधाविति निषेधात् मालाभिरित्यत्र पूर्वान्तत्वेन अदन्तत्वेऽपि भिस एस् न भवति । **बाह्वन्तात्संज्ञायाम्** (IV. 1. 67.)—बाह्वन्तात् प्रातिपदिकात्

संज्ञायां स्त्रियाम् ऊङ्प्रत्ययो भवति ; **भद्रबाहूः** । **पङ्गोश्च** (IV. 1. 68.)—पङ्गुशब्दात् स्त्रियाम् ऊङ् प्रत्ययो भवति ; **पङ्गूः**। **श्वशुरस्योकाराकारलोपश्च वक्तव्यः** (वा.) इति **श्वश्रूः** । **ऊरूत्तरपदादौपम्ये** (IV. 1. 69.)—औपम्ये गम्यमाने ऊरूत्तरपदात् प्रातिपदिकात् स्त्रियाम् ऊङ् भवति ; **रम्भोरूः, नागनासोरूः** । औपम्य इति किम् ? वृत्तोरुः । **संहितशफलक्षणवामादेश्च** (IV.1.70.) —संहितशफलक्षणवामादेः ऊरूत्तरपदादूङ् प्रत्ययो भवति। अनौपम्यार्थमिदं सूत्रम्; **संहितोरूः, शफोरूः, वामोरूः, लक्षणोरूः** । **सहितसहाभ्यां चेति वक्तव्यम्** (वा.) इति **सहितोरूः, सहोरूः** । इति ऊङ् ॥

४. अथ तिः । **यूनस्तिः** (IV.1.77.)—युवन्शब्दात् ति इति प्रत्ययो भवति । **तद्धिताः** (IV. 1. 76.) इत्यधिकारेण तद्धितान्तत्वात् स्वाद्युत्पत्तिः ; पदसंज्ञायां नकारलोपः ; **युवतिः** ॥

---

**इति स्त्रीप्रत्ययावतारः** ॥



## अथ कारकावतारः ॥

1. अथ विभक्त्यर्थाः प्रदर्श्यन्ते । काः पुनर्विभक्तयः? सु औ जस् इति प्रथमा—इत्येवमादयः । कस्मिन्नर्थे प्रथमा? **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा** (II. 3. 46.) । किं प्रातिपदिकम्? **अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** (I. 2. 45.) । **अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञेष्यते** (भा.)। **कृत्तद्धितसमासाश्च** (I. 2. 46.) । अप्रत्यय इति पूर्वसूत्रेण पर्युदासात् कृदन्तस्य तद्धितान्तस्य चानेन सूत्रेण प्रातिपदिकसंज्ञा विधीयते । अर्थवत्समुदायानां समासग्रहणं नियमार्थम् ; तेन वाक्यस्यार्थवतः समुदायस्य प्रातिपदिकसंज्ञा न भवति—यथा देवदत्त गामानय शुक्लां दण्डेनेत्यत्र । प्रातिपदिकार्थः सत्ता ; प्रातिपदिकार्थमात्रे—**उच्चैः, नीचैः** ; लिङ्गमात्रे—**वृक्षः, कुमारी, कुण्डम्** ; परिमाणमात्रे—**प्रस्थो** व्रीहिः ; वचनमात्रे—**एकः, द्वौ, बहवः**—प्रातिपदिकेनैव उक्तार्थत्वात् अप्रयोगे विभक्त्यर्थमिदं वचनग्रहणम् । वृक्षः वृक्षौ वृक्षाः, कर्ता कर्तारौ कर्तारः, दण्डी दण्डिनौ दण्डिनः, राजपुरुषः राजपुरुषौ राजपुरुषाः, इति । तदधिके प्रथमा न प्राप्नोतीति इदं वचनमारभ्यते । **सम्बोधने च** (II. 3. 47.)—आभिमुख्यकरणं संबोधनम्; तस्मिन् प्रथमा भवति; **देवदत्त** एहि ॥

2. कस्मिन्नर्थे द्वितीया? **कर्मणि द्वितीया** (II. 3. 2.)—अनभिहिते कर्मणि द्वितीया। किं कर्म? **कर्तुरीप्सिततमं कर्म** (I. 4. 49.)। तच्च त्रिविधम्—

निर्वर्त्यश्च विकार्यश्च प्राप्यश्च त्रिविधं मतम्।
कर्तुर्यत् क्रियया व्याप्तं कटकाण्डगृहादिवत्॥

**कटं** करोति, **काण्डं** लुनाति, **गृहं** गच्छति।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।

आम्रेडितं द्विरुक्तस्य परम् (VIII. 1. 2.); **ग्राममुभयतो** नदी, **ग्रामं सर्वत** उद्यानम्; **धिक् देवदत्तं** जाल्मम्; **उपर्यध्यधः सामीप्ये** (VIII. 1. 7.)—उपरि अधि अधस् इत्येतेषां सामीप्ये गम्यमाने द्विर्वचनं भवति; **पर्वतमुपर्युपरि** वनम्, **पर्वतमध्यधि** वृक्षाः, **पर्वतमधोऽधो** वनानि; पर्वतस्य समीपे इत्यर्थः। **अभितः-परितस्समयानिकषाहाप्रतियोगेषु च दृश्यते** (वा.); **ग्राममभितो** नदी, **ग्रामं निकषा** नदी, **हा देवदत्तं** जाल्मम्, **बुभुक्षितं न प्रतिभाति** किञ्चित्। **अन्तरान्तरेण युक्ते** (II. 3. 4.)—आभ्यां योगे द्वितीया स्यात्; **अन्तरा अन्तरेण** वा **त्वां मां** च हरिः, **हरिमन्तरा अन्तरेण** वा न सुखम्। **कर्मप्रवचनीययुक्ते द्वितीया** (II. 3. 8.)—अनु-उप-प्रति-परि-प्रभृतीनां कर्मप्रवचनीयसंज्ञा वक्ष्यते; एषां योगेऽपि द्वितीया; **अनुहरिं** सुराः—हरिहीना इत्यर्थः। एवमन्यत्रापि। **कालाध्वनोरत्यन्तसंयोगे द्वितीया** (II. 3. 5.)—क्रियागुणद्रव्यैः साकल्येन सम्बन्धः अत्यन्तसंयोगः; तस्मिन् गम्यमाने कालशब्देभ्यः अध्वशब्देभ्यश्च

द्वितीया; **मासमधीते, मासं कल्याणी, मासं गुडधानाः, क्रोशमधीते, क्रोशं कुटिला, क्रोशं गिरिः।** अत्यन्तसंयोगे इति किम् ? मासस्य द्विरधीते, क्रोशस्यैकदेशे पर्वतः। कर्तरीति किम् ? माषेष्वश्वं बध्नाति ; अत्र कर्मण ईप्सिता माषाः न कर्तुः ॥

३. **तथा युक्तञ्चानीप्सितम्** (I. 4. 50.)—येन प्रकारेण कर्तुरीप्सिततमं क्रियया युज्यते तेनैव प्रकारेणानीप्सितमपि क्रियया युक्तं भवति चेत् तस्य कर्मसंज्ञा। ईप्सितादन्यदनीप्सितं द्वेष्यमितरच्च ; **विषं भक्षयति, चोरान् पश्यति, ग्रामं गच्छन् वृक्षमूलान्युपसर्पति । अकथितञ्च** (I.4.51.)—अपादानादिविशेषकथाभिः यदकथितं तत् कारकं कर्मसंज्ञं भवति ।

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना ॥

उपयुज्यते इति उपयोगः—पयःप्रभृति ; तस्य निमित्तं गवादि ; तस्य कर्मसंज्ञा विधीयते। पाणिना कांस्यपात्र्यां गान्दोग्धि पयः इत्यत्र पण्यादिकमुपयोगस्य निमित्तम् ; तस्य कस्मान्न भवति ? विहितात्र करणादिसंज्ञा। तदर्थमाह अपूर्वविधाविति । ब्रुविशास्योर्गुणः ब्रुविशासिगुणः—साधनं प्रधानं कर्म धर्मादिकम् ; तेन यत् सचते सम्बध्यते तदकथितमाह । दुहि—**गां दोग्धि पयः**; याचि—**पौरवं गां याचते**; रुधि—**गां रुणद्धि व्रजम्** ; प्रच्छि—**माणवकं पन्थानं पृच्छति**; भिक्षि —**पौरवं गां भिक्षते**; चिञ्—**वृक्षमपचिनोति फलानि** ; ब्रूञ् —**माणवकं धर्मं ब्रूते** ; शासि—**माणवकं धर्ममनुशास्ति** । गुणेन च इति चकारः अनुक्तसमुच्चयार्थः ; तेन **अजां ग्रामं नयति,**

**भारं ग्रामं वहति, देवदत्तं शतं जयति, देवदत्तं सहस्रं दण्डयति,** इत्येवमादि सिद्धं भवति ।

नीवह्योर्हरतेश्चैव गत्यर्थानां क्रुषेस्तथा ।
द्विकर्मकेषु ग्रहणं सिद्धं वाप्यन्यकर्मणः ॥

4. **गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ** (I.4.52)—गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानां शब्दकर्मणाम् अकर्मकाणां च अणौ यः कर्ता सः णौ कर्मसंज्ञो भवति । गत्यर्थानाम्—गृहं गच्छति देवदत्तः, **गृहं गमयति देवदत्तं** यज्ञदत्तः; बुद्ध्यर्थानाम्—शास्त्रं वेत्ति शिष्यः, **शास्त्रं वेदयति शिष्यम्** आचार्यः; प्रत्यवसानमभ्यवहारः—अन्नं भुङ्क्ते बालः, **अन्नं भोजयति बालं** माता; शब्दकर्मणः—अधीते माणवको वेदम्, **अध्यापयति माणवकं वेदम्**; अकर्मकाणाम्—आस्ते देवदत्तः, **आसयति देवदत्तं** यज्ञदत्तः। एतेषां गत्याद्यर्थानामिति किम्? देवदत्तः तण्डुलं पचति, पाचयति तण्डुलं देवदत्तेन यज्ञदत्तः । **गत्यर्थेषु नीवह्योः प्रतिषेधो वक्तव्यः** (वा.) इति—नयति वहति वा भारं देवदत्तः, **नाययति वाहयति** वा **भारं देवदत्तेन** । **वहेरनियन्तृकर्तृकस्येति वक्तव्यम्** (वा.) इति इह प्रतिषेधो मा भूत्—वहन्ति यवान् बलीवर्दाः, **वाहयति यवान् बलीवर्दान्** । **आदिखाद्योः प्रतिषेधो वक्तव्यः** (वा.) इति—अत्ति खादति वा ओदनं माणवकः, **आदयते खादयति** वा **ओदनं माणवकेन** । **भक्षेरहिंसार्थस्य प्रतिषेधो वक्तव्यः** (वा.) इति—भक्षयति पिण्डीं देवदत्तः, **भक्षयति पिण्डीं देवदत्तेन**; हिंसार्थे—भक्षयन्ति बलीवर्दाः सस्यम्, **भक्षयन्ति बलीवर्दान् सस्यं** गोपाः । **हृक्रोरन्यतरस्याम्** (I. 4

53.)—हरतिकरोत्योरणौ यः कर्ता सः णौ कर्मसंज्ञो वा भवति ; संदेशं हरति मेघः, **संदेशं हारयति मेघं यक्षः—मेघेन** इत्यपि स्यात् ; सेतुं करोति नलः, **सेतुं कारयति नलं** रामः—**नलेन** इत्यपि स्यात् ।

5. **उपान्वध्याङ्वसः** (I. 4. 48.)—उप अनु अधि आङ् इत्येतेभ्य उत्तरस्य वसतेः य आधारः तत् कारकं कर्मसंज्ञं भवति ; **ग्राममुपवसति, ग्राममनुवसति, ग्राममधिवसति, ग्राममावसति । वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः** (वा.) इति—**ग्रामे उपवसति** भिक्षुः । **अधिशीङ्स्थासां कर्म** (I. 4. 46.)—अधिपूर्वाणां शी स्था आस् इत्येतेषाम् आधारो यः तत् कारकं कर्मसंज्ञं भवति ; **ग्राममधिशेते अधितिष्ठति अध्यास्ते** वा । **अभिनिविशश्च** (I.4.47.)—अभि-नि इति समुदायपूर्वस्य विशतेराधारः कारकं कर्मसंज्ञं भवति वा ; **पापं पापे** वा **अभिनिविशते** दुर्जनः ॥

6. **कर्मप्रवचनीयाः** (I. 4. 83.) इत्यधिकृत्य, **अनुर्लक्षणे** (I. 4. 84.)—अनुशब्दो लक्षणे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति ; **तृतीयार्थे** (I. 4. 85.)—अनुशब्दः तृतीयार्थे द्योत्ये कर्मप्रवचनीयो भवति ; **हीने** (I. 4. 86.)—न्यूनार्थेऽपि तथैव । तेन द्वितीया भवतीत्युपपादितम् ; **जपमनु** प्रावर्षत् , **नदीमनु** अवसिता सेना, **अनु शाकटायनं** वैयाकरणाः । **उपोऽधिके च** (I. 4. 87.)—उपशब्दः अधिके हीने च उक्तसंज्ञो भवति; इति **उप शाकटायनं** वैयाकरणाः, **उप निष्के** कार्षापणम् । **अभिरभागे** (I. 4.91.)—भागभिन्नलक्षणादौ अभिः उक्तसंज्ञः ; इति **वृक्षमभि** विद्योतते, **मात-**

**रमभि** साधुः । **लक्षणेत्थंभूताख्यानभागवीप्सासु प्रति-पर्यनवः** (I. 4. 90.)—एते एष्वर्थेषु द्योत्येषु तथा भवन्ति ; लक्षणे—**वृक्षं प्रति परि** अनु वा विद्योतते विद्युत् ; इत्थंभूताख्याने—**मातरं प्रति परि अनु वा** साधुर्देवदत्तः ; भागे—यदत्र **मां प्रति परि अनु** वा स्यात् ; वीप्सायाम्—**वृक्षं वृक्षं प्रति परि अनु** वा सिञ्चति ॥

7. **गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि** (II. 3. 12.)—अध्वविवर्जिते गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ विभक्ती भवतः चेष्टायां क्रियायां सत्याम् ; **वनं गच्छति, वनाय गच्छति** वा । गत्यर्थग्रहणं किम् ? ओदनं पचति । कर्मणीति किम् ? अश्वेन व्रजति । चेष्टायामिति किम् ? मनसा पाटलिपुत्रं गच्छति । अन-ध्वनीति किम् ? अध्वानं गच्छति ॥

8. कुत्रार्थे तृतीया ? **कर्तृकरणयोस्तृतीया** (II. 3. 18.) । कः कर्ता ? **स्वतन्त्रः कर्ता** (I. 4. 54.) । किं करणम् ? **साधक-तमं करणम्** (I. 4. 42.) ।

यः क्रियाव्याप्तितः स्थानं कुरुते मुख्यभावतः ।
अप्रयुक्तः प्रयुक्तो वा स कर्ता नाम कारकम् ॥

समुद्दिष्टक्रियासिद्धौ यत्प्रकृष्टोपकारकम् ।
करणं बाह्यमन्यत्र नेत्रादि विविधं मतम् ॥

कर्तरि—**हस्तिना हतः, देवदत्तेन भुक्तम् ;** करणे—**कुठारेण** वृक्षं **छिनत्ति, चक्षुषा पश्यति। तृतीयाविधाने**

**प्रकृत्यादिभ्य उपसंख्यानम्** (वा. II. 3. 18.) इति—**प्रकृत्या अभिरूपः, गार्ग्योऽस्मि गोत्रेण, विषमेण धावति । दिवः कर्म च** (I. 4. 43.)—दिवः साधकतमं यत् कारकं तत् कर्मसंज्ञं भवति, चकारात् करणसंज्ञं च ; इति **अक्षान् दीव्यति, अक्षैर्दीव्यति । अपवर्गे तृतीया** (II. 3. 6.)—अपवर्गः फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः ; अपवर्गे गम्यमाने कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् ; **मासेन** अनुवाको **योजनेन** वा **अधीतः** । अपवर्गे किम् ? मासमधीतो नायातः । **सहयुक्तेऽप्रधाने** (II. 3. 19.)—सहार्थेन सम्बन्धः सहयोगः ; सहयुक्ते अप्रधाने तृतीया विभक्तिः ; **पुत्रेण सह गतः** पिता, **पुत्रेण सह गोमान्** पिता । पितुरत्र क्रियादिसम्बन्धः शब्देनोच्यते ; पुत्रस्य तु प्रतीयमानत्वात् तस्य अप्राधान्यम् । सहार्थेन योगे विधानात् पर्यायप्रयोगेऽपि भवति; **सेनया सार्धं गच्छति** सेनानीः । विनापि सहशब्देन तृतीया भवति—वृद्धो यूनेति (I.2.65.) निपातनात् ; **सुतेन** पिता **स्थितः** । **येनाङ्गविकारः** (II. 3. 20.) —अत्र अङ्गशब्दः समुदाये शरीरे वर्तते, येनेति तदवयवो हेतुत्वेन दृश्यते ; येनाङ्गेन विकृतेनाङ्गिनो विकारः लक्ष्यते तत्र तृतीया विभक्तिर्भवति ; **अक्ष्णा काणः, पाणिना कुणिः, पादेन खञ्जः ।** अवयवधर्मेण समुदायो व्यपदिश्यते । अङ्गविकार इति किम् ? अक्षि काणमस्य । **इत्थम्भूतलक्षणे** (II. 3. 21.)—कश्चित् प्रकारं प्राप्तः इत्थंभूतः ; तस्य लक्षणमित्यम्भूतलक्षणम् ; अत्र तृतीया विभक्तिर्भवति ; **श्वेतच्छत्रेण राजानमद्राक्षीत्, कमण्डलुना छात्रम् । संज्ञोऽन्यतरस्यां कर्मणि** (II. 3. 22.)—सम्पूर्वस्य जानातेः कर्मणि कारके तृतीया विभक्तिर्भवति अन्यतरस्याम् ; **मात्रा संजा-**

**नीते, मातरं संजानीते । हेतौ** (II. 3. 23.)—फलसाधनयोग्यः पदार्थो हेतुरित्युच्यते ; तद्वाचिनः तृतीया विभक्तिर्भवति ; **धनेन कुलं वर्धते, विद्यया यशः ॥**

9. **अकर्तर्यृणे पञ्चमी** (II. 3. 24.)—कर्तृवर्जितं यदृणं हेतुस्तत्र पञ्चमी विभक्तिः । तृतीयापवादो योगः ; **शतात् बद्धः, सहस्रात् बद्धः ।** अकर्तरीति किम् ? शतेन बन्धितः । अत्र शतमृणं भवति प्रयोजकत्वेन कर्तृसंज्ञकम् । तथाहि **तत्प्रयोजको हेतुश्च** (I. 4. 55.)—तदित्यनन्तरः कर्ता परामृश्यते, तस्य प्रयोजकः तत्प्रयोजकः ; स्वतन्त्रप्रयोजको योऽर्थः तत्कारकं हेतुसंज्ञं भवति, चकारात् कर्तृसंज्ञं च । **विभाषा गुणेऽस्त्रियाम्** (II. 3. 25.)—हेताविति वर्तते ; गुणे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी विभक्तिर्भवति तृतीया च ; **जाड्यात् गृहीतः जाड्येन गृहीतः, गर्वात् वक्ति गर्वेण वक्ति ।** अस्त्रियामिति किम् ? प्रज्ञया मुक्तः । गुणे इति किम् ? धनेन कुलं वर्धते । **षष्ठी हेतुप्रयोगे** (II. 3. 26.)—हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी विभक्तिर्भवति ; **अन्नस्य हेतोः** वसति । **सर्वनाम्नस्तृतीया च** (II. 3. 27.)—सर्वनाम्नो हेतौ द्योत्ये षष्ठी विभक्तिः ; तृतीया च हेतुशब्दस्य प्रयोगे ; **कस्य हेतोः केन हेतुना** वा वसति ॥

10. कस्मिन्नर्थे चतुर्थी ? **चतुर्थी संप्रदाने** (II. 3. 13.)। किं च संप्रदानम् ? **कर्मणा यमभिप्रैति स संप्रदानम्** (I. 4. 32.)—अन्वर्थसंज्ञाविज्ञानात् ददातिकर्मणेति विज्ञायते ; करणभूतेन कर्मणा कर्ता यमभिप्रैति तत् कारकं संप्रदानसंज्ञं भवति ; **उपाध्यायाय** गां **ददाति, दीनाय** भोजनं **देहि । क्रियाग्रहणं कर्तव्यम्**

(वा.)—इति क्रियया यमर्थमभिप्रैति तत्कारकं सम्प्रदानसंज्ञं भवति ; **श्राद्धाय निगर्हते, युद्धाय संनह्यते । कर्मणः करणसंज्ञा वक्तव्या संप्रदानस्य च कर्मसंज्ञा** (वा.)इति—**पशुना रुद्रं यजते**—रुद्राय पशुं ददातीत्यर्थः। **तादर्थ्ये चतुर्थी वक्तव्या** (वा.) ; तदर्थभावः तादर्थ्यम्—

हिरण्यं कुण्डलायेदं दारु यूपाय युज्यते ।
यज्ञाय पशवो नीता जाता विप्राः स्वकर्मणे ॥
संयमाय श्रुतं धत्ते धर्माय स यमं पुमान् ।
धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये ॥

**क्लृपिसंपाद्यमाने चतुर्थी वक्तव्या** (वा.) इति—**भक्तिर्ज्ञानाय कल्पते** । क्लप् इत्यर्थनिर्देशः ; **भक्तिर्ज्ञानाय जायते** । **उत्पातेन ज्ञाप्यमाने चतुर्थी विभक्तिर्वक्तव्या** (वा.) ; प्रकृतेरन्यत्वमुत्पातः प्राणिनां शुभाशुभसूचको विकारः—

वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥

**हितयोगे चतुर्थी वक्तव्या** (वा.) इति—**अरोचकिने हितम्, ब्राह्मणाय हितम्** । **रुच्यर्थानां प्रीयमाणः** (I. 4. 33.) —रुचिना समानार्थाः रुच्यर्थाः ; अन्यकर्तृकोऽभिलाषो रुचिः ; रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणो योऽर्थः तत् कारकं संप्रदानसंज्ञं भवति; **देवदत्ताय रोचते** मोदकः । देवदत्ताभिलाषस्य मोदकः कर्ता । प्रीयमाणः इति किम् ? देवदत्ताय रोचते मोदकः पथि । **श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः** (I. 4. 34.)—श्लाघ ह्नुङ् स्था शप इत्येतेषां

ज्ञीप्स्यमानो योऽर्थः तत् कारकं संप्रदानसंज्ञं भवति। ज्ञीप्स्यमानः ज्ञपयितुमिष्यमाणः बोधयितुमभिप्रेतः—

कृष्णाय श्लाघते गोपी ह्नुते कृष्णाय तिष्ठते।
शपते चापि तस्मै सा ज्ञीप्स्यमानाय कामतः॥

**धारेरुत्तमर्णः** (I. 4. 35.)—धारयतेः प्रयोगे उत्तमर्णो योऽर्थः तत् कारकं संप्रदानसंज्ञं भवति; **वणिजे** शतं **धारयति** देवदत्तः। **स्पृहेरीप्सितः** (I. 4. 36.)—स्पृहयतेर्धातोः प्रयोगे ईप्सितो योऽर्थः तत्कारकं सम्प्रदानसंज्ञं भवति। ईप्सितमित्यभिप्रेतमुच्यते; **पुष्पेभ्यः स्पृहयति**। ईप्सितः इति किम्? पुष्पेभ्यः स्पृहयति वने। **क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः** (I. 4. 37.)—अमर्षः क्रोधः, अपकारो द्रोहः, अक्षमा ईर्ष्या, गुणे दोषाविष्करणमसूया; क्रोधाद्यर्थानां धातूनां प्रयोगे यं प्रति कोपः तत् कारकं सम्प्रदानसंज्ञं भवति। क्रोधस्तावत् कोप एव—तत्र चतुर्थी; **देवदत्ताय क्रुध्यति, यज्ञदत्ताय द्रुह्यति, आढ्यायेर्ष्यति, बान्धवायासूयति**। यं प्रति कोप इति किम्? भार्यामीर्ष्यति एनामन्यो मा द्राक्षीदिति। **क्रुधद्रुहोरुपसृष्टयोः कर्म** (I. 4. 38.)—पूर्वेण संप्रदानसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते; क्रुधद्रुहोरुपसृष्टयोरुपसर्गसम्बद्धयोः प्रयोगे यं प्रति कोपः तत्कारकं कर्मसंज्ञं भवति; **देवदत्तमभिक्रुध्यति, मित्रमभिद्रुह्यति। राधीक्ष्योर्यस्य विप्रश्नः** (I. 4. 39.)—राधेः ईक्षेश्च कारकं सम्प्रदानसंज्ञं भवति? कीदृशम्? यस्य विप्रश्नः—विविधः प्रश्नः विप्रश्नः—स कस्य भवति, यस्य शुभाशुभं पृच्छ्यते। **देवदत्ताय राध्यति देवदत्तायेक्षते**—नैमित्तिकः पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयतीत्यर्थः॥

11. **प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता** (I. 4. 40.)—प्रति आङ् इत्येवंपूर्वस्य शृणोतेः कारकं संप्रदानसंज्ञं भवति ; कीदृशम्? पूर्वस्य कर्ता । प्रतिपूर्वः आङ्पूर्वश्च शृणोतिः अभ्युपगमे प्रतिज्ञाने वर्तते ; स चाभ्युपगमः परेण प्रयुक्तस्य सतो भवति ; तत्र प्रयोक्ता पूर्वस्याः क्रियायाः कर्ता संप्रदानसंज्ञो भवति ; देवदत्तो राजानं याचितवान्, राजा **देवदत्ताय गां प्रतिशृणोति गामाशृणोति** वा। **अनुप्रतिगृणश्च** (I. 4. 41.)—पूर्वस्य कर्ता इत्यनुवर्तते ; अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकं पूर्वस्याः क्रियायाः कर्तृभूतं संप्रदानसंज्ञं भवति ; **होत्रेऽनुगृणाति**—होता प्रथमं शंसति, तमन्यः शंसन्तं होतारं प्रोत्साहयतीत्यर्थः । **परिक्रयणे संप्रदानमन्यतरस्याम्** (I. 4. 44.)—परिक्रयणं नियतकालं भृत्यया स्वीकरणम् ; तस्मिन् साधकतमं कारकं वा संप्रदानसंज्ञं भवति ; **शताय परिक्रीतः**। पक्षे—करणे तृतीया—**शतेन परिक्रीतः** । **क्रियार्थोपपदस्य कर्मणि स्थानिनः** (II. 3. 14.)—क्रियार्था क्रिया उपपदं यस्य सः क्रियार्थोपपदः ; तुमुन्ण्वुलौ क्रियायां क्रियार्थायामित्येष विषयो लक्ष्यते ; क्रियार्थोपपदस्य स्थानिनः अप्रयुज्यमानस्य धातोः प्रयोगे कर्मणि कारके चतुर्थी विभक्तिर्भवति । द्वितीयापवादो योगः ; **पुष्पेभ्यो व्रजति, फलेभ्यो याति, नृसिंहाय नमस्कुर्मः** । क्रियार्थोपपदस्येति किम्? प्रविश पिण्डीम्, प्रविश तर्पणम् । भक्षिरत्र स्थानी न तु क्रियार्थोपपदः। कर्मणीति किम्? फलेभ्यो व्रजति शकटेन । स्थानिन इति किम्? फलान्याहर्तुं व्रजति । **तुमर्थाच्च भाववचनात्** (II. 3. 15.)—तुमुना समानार्थाः तुमर्थाः ; तुमर्थात् भाववचनप्रत्ययान्तात् प्रातिपदिकात् चतुर्थी विभक्तिर्भवति । भाववचनाश्च (III.3.11.)इति वक्ष्यति,

तस्येदं ग्रहणम्; **यागाय व्रजति, त्यागाय आजयति**—यष्टुं त्यक्तुम् इत्यर्थः । तुमर्थादिति किम्? यागः, त्यागः । भाववचनादिति किम्? कारको व्रजति । **नमस्स्वस्तिस्वाहास्वधालंवषड्योगाच्च** (II. 3. 16.)—नमः स्वस्ति स्वाहा स्वधा अलम् वषट् इत्येतैर्योगे चतुर्थी विभक्तिर्भवति । द्वितीयापवादो योगः; **नमो देवेभ्यः, स्वस्ति प्रजाभ्यः, स्वाहा हुताशनाय, स्वधा पितृभ्यः, अलं** मल्लो **मल्लाय**—अलमिति पर्याप्त्यर्थग्रहणात् **प्रभुः** शूरः **शूराय, समर्थः** सारमेयः **सारमेयाय—वषट् सोमाय**। चकारः पुनरस्यैव समुच्चयार्थः; तेनाशीर्विवक्षायां षष्ठीं बाधित्वा चतुर्थ्येव भवति; **स्वस्ति गोभ्यो** भूयात्, **स्वस्ति ब्राह्मणेभ्यः ।** गुरुं नमस्करोमि इत्यत्र—**उपपदविभक्तेः कारकविभक्तिर्बलीयसी** (परि. 94.)—इति द्वितीया । **मन्यकर्मण्यनादरे विभाषाऽप्राणिषु** (II. 3. 17.)—मन्यतेः कर्म मन्यकर्म; मन्यकर्मणि प्राणिवर्जिते विभाषा चतुर्थी विभक्तिर्भवति अनादरे गम्यमाने; अनादरस्तिरस्कारः; न त्वां **तृणाय मन्ये**, न त्वां **तृणं मन्ये** । मन्यतिग्रहणं किम्? न त्वां तृणं चिन्तयामि । अनादर इति किम्?

अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम् ।
अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति ॥

12. कस्मिन्नर्थे पञ्चमी? **अपादाने पञ्चमी** (II. 3. 28.)। किम् अपादानम्? **ध्रुवमपायेऽपादानम्** (I. 4. 24.)—ध्रुवं यदपाययुक्तं, अपाये साध्ये यदवधिभूतं, तत् कारकम् अपादानसंज्ञम्; **वृक्षात् पर्णं पतति।जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्** (वा. I. 4. 24.) इति—**पापात् जुगुप्सते, क्रौर्यात् विरमति,**

धर्मात् प्रमाद्यति । कर्माणि ल्यब्लोपे पञ्चमी वक्तव्या (वा.) इति प्रासादात् प्रेक्षते—प्रासादमारुह्य प्रेक्षते इत्यर्थः । अधिकरणे चोपसंख्यानम् (वा.) इति आसनात् प्रेक्षते—आसने उपविश्य प्रेक्षते इत्यर्थः । भीत्रार्थानां भयहेतुः (I. 4. 25.)—बिभेत्यर्थानां त्रायत्यर्थानां च धातूनां प्रयोगे भयहेतुर्यः तत् कारकम् अपादानसंज्ञं भवति ; व्याघ्रात् बिभेति, चोरात् उद्विजते, पापात् त्रायते । पराजेरसोढः (I. 4. 26.)—परापूर्वस्य जयतेः प्रयोगे असोढो योऽर्थः सोढुं न शक्यते तत् कारकमपादानसंज्ञं भवति ; अध्ययनात् पराजयते । असोढ इति किम् ? शत्रून् पराजयते । वारणार्थानामीप्सितः (I. 4. 27.)—निवारणार्थानां धातूनां प्रयोगे ईप्सितः यः तत्कारकम् अपादानसंज्ञं भवति ; यवेभ्यो गां वारयति क्षेत्रे । अन्तर्द्धौ येनादर्शनमिच्छति (I. 4. 28.)—व्यवधानमन्तर्द्धिः ; अन्तर्द्धिनिमित्तकं येन अदर्शनम् आत्मनः इच्छति तत् कारकमपादानसंज्ञं भवति ; उपाध्यायादन्तर्धत्ते माणवकः । आख्यातोपयोगे (I. 4. 29.)—आख्याता प्रतिपादयिता ; उपयोगो नियमपूर्वकं विद्याग्रहणम् ; उपयोगे गम्यमाने आख्याता यः तत्कारकमपादानसंज्ञं भवति ; उपाध्यायादधीते, उपाध्यायादागमयति । उपयोगे इति किम् ? नटस्य शृणोति । जनिकर्तुः प्रकृतिः (I. 4. 30.)—जनेर्धातोः कर्तुः या प्रकृतिः तत् कारकमपादानसंज्ञं भवति ; गोमयात् वृश्चिको जायते । भुवः प्रभवः (I. 4. 31.)—भवतेः कर्तुः प्रभवो यः तत् कारकमपादानसंज्ञं भवति ; हिमवतो गङ्गा प्रभवति । अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते (II. 3. 29.)—अन्य आरात् इतर ऋते दिक्-

शब्द अञ्चूत्तरपद आच् आहि इत्येतैर्योगे पञ्चमी विभक्तिर्भवति। अन्य इत्यर्थग्रहणम्, तेन पर्यायप्रयोगेऽपि भवति— **अन्यो ग्रामात्** विहारः, **भिन्नो विष्णुमित्रात्** यज्ञदत्तः ; आराच्छब्दो दूरान्तिकयोर्वर्तते—**सौधादारात्** उद्यानम्, **वनादारात्** नदी ; इतर इति निर्दिश्यमानस्य प्रतियोगी पदार्थ उच्यते—**स्वामिन इतरे** सेवकाः ; ऋते इत्ययं शब्दो वर्जनार्थे वर्तते—**वासुदेवादृते** न मुक्तिः ; दिक्शब्दयोगे—दिक्शब्दो देशे काले वा वर्तते इति कालशब्दयोगेऽपि पञ्चमी विभक्तिर्भवति ; तत्र देशवृत्तिना योगे—**ग्रामात् पूर्वो** देशः, कालवृत्तिना योगे—**ग्रीष्मात् पूर्वो** वसन्तः ; अञ्चूत्तरपदे—**प्राग्ग्रामाद्वसति** ; आचः—**दक्षिणा नगराद्वसति** ; आहिः—**नगरादुत्तराहि** वसति ॥

13. **षष्ठ्यतसर्थप्रत्ययेन** (II. 3. 30.)—अतसर्थप्रत्ययान्तेन दिक्शब्देन युक्ते षष्ठी विभक्तिर्भवति ; **पत्तनस्य दक्षिणतो** वसति, **पुरस्योत्तरतो** वसति। **एनपा द्वितीया** (II.3.31.)—एनवन्तेन दिक्शब्देन योगे द्वितीया विभक्तिर्भवति। पूर्वेण षष्ठ्यां प्राप्तायामिदं वचनम् ; **दक्षिणेन नगम्, उत्तरेण नगम्।** षष्ठ्यपीष्यते ; **दक्षिणेन नगस्य । पृथग्विनानानाभिस्तृतीयान्यतरस्याम्** (II. 3. 32.)—पृथक् विना नाना इत्येतैर्योगे तृतीया विभक्तिर्भवति, अन्यतरस्यां पञ्चमी च ; **पृथग्ग्रामेण** विहारः, **पृथग्ग्रामात्** विहारः ; **चन्द्रेण विना, चन्द्रात्** वा **विना,** नो कान्तिर्गगनस्य ; **ज्ञानेन नाना** लक्ष्मीः, **ज्ञानान्नाना** लक्ष्मीः। पृथग्विनानानाभिरिति योगविभागः कर्तव्यः द्वितीयार्थः ।

विना वातं विना वर्षं विद्युत्प्रपतनं विना ।
विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ ॥

**दूरान्तिकार्थैःषष्ठ्यन्यतरस्याम्** (II. 3. 34.)—दूरान्तिकार्थैः शब्दैः योगे षष्ठी भवत्यन्यतरस्यां पञ्चमी च ; **दूरं वनस्य, दूरं वनात् ; प्रकृष्टं वनस्य, प्रकृष्टं वनात् ; अन्तिकं वृक्षस्य अन्तिकं वृक्षात् ; अभ्याशं वृक्षस्य, अभ्याशं वृक्षात्** । **दूरान्तिकार्थेभ्यो द्वितीया च** (II. 3. 35.)—दूरान्तिकार्थेभ्यः शब्देभ्यः द्वितीया विभक्तिर्भवत्यन्यतरस्यां पञ्चमी च ; चकारात् तृतीया च ; **दूरं** ग्रामस्य, **दूरात्** ग्रामस्य, **दूरेण** ग्रामस्य ; **अन्तिकं** ग्रामस्य, **अन्तिकात्** ग्रामस्य, **अन्तिकेन** ग्रामस्य । एतत् प्रातिपदिकार्थमात्रे विधानम् । **पञ्चमी विभक्ते** (II. 3. 42.)—षष्ठीसप्तम्योरपवादोऽयं योगः ; विभागो विभक्तम् ; यस्मिन् निर्धारणाश्रये विभक्तमस्ति ततः पञ्चमी विभक्तिर्भवति ; माथुराः **पाटलिपुत्रकेभ्यः आढ्यतराः** ॥

14. कस्मिन्नर्थे षष्ठी ? **षष्ठी शेषे** (II. 3. 9.)—कर्मादिभ्योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः ; तत्र षष्ठी विभक्तिर्भवति ; **भूभृतो** धनम्, **समुद्रस्य** तीरम्, **पलालस्य** भस्म, **कुञ्जरस्य** हस्तः, **भूपस्य** सेवकः, **सेवकस्य** खड्गः, **आदित्यस्य** रश्मिः । **ज्ञोऽविदर्थस्य करणे** (II. 3. 51.)—जानातेः अविदर्थस्य करणे कारके षष्ठी विभक्तिर्भवति ; **सर्पिषो जानीते**—सर्पिषा उपायेन प्रवर्तते इत्यर्थः। **अधीगर्थदयेशां कर्मणि**

(II. 3. 52.)—अधीगर्थाः स्मरणार्थाः ; तदर्थानां धातूनां दय ईश इत्येतयोश्च कर्मणि षष्ठी विभक्तिर्भवति ; **मातुरध्येति, मातुः स्मरति, सर्पिषो दयते, देवदत्तस्य ईष्टे** । **कृञः प्रतियत्ने** (II. 3. 53.)—सतः गुणान्तराधानं प्रतियत्नः ; तस्मिन् गम्यमाने करोतेः कर्मणि षष्ठी विभक्तिर्भवति ; **एधोदकस्य उपस्कुरुते** । **आशिषि नाथः** (II. 3. 55.)—आशिषि गम्यमानायां नाथतेः कर्मणि षष्ठी विभक्तिर्भवति ; **सर्पिषो नाथते** । **जासिनिप्रहणनाटक्राथपिषां हिंसायाम्** (II. 3. 56.)—हिंसार्थानामेषां शेषे कर्मणि षष्ठी विभक्तिर्भवति ; राजा **शत्रूणामुज्जासयति, अविनीतस्य निप्रहन्ति, चौरस्योन्नाटयति, चौरस्य क्राथयति पिनष्टि** वा । **कर्तृकर्मणोः कृति** (II. 3. 65.)—कृदन्ते प्रयोगे कर्तरि कर्मणि च कारके षष्ठी विभक्तिर्भवति । शेषे इति निवृत्तम् ; कर्तरि—**भवतः शायिका, भवत आसिका** ; कर्मणि—**पायसस्य भोक्ता, जगतः कर्ता** । **उभयप्राप्तौ कर्मणि** (II. 3. 66.)—कर्तृकर्मणोरुभयोरपि प्राप्तौ कर्मण्येव षष्ठी विभक्तिर्भवति । पूर्वेण प्राप्ता षष्ठी नियम्यते ; आश्चर्यो **गवां दोहः** अगोपालकेन । **अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम्** (वा. II. 3. 66.) इति **देवदत्तस्य ओदनस्य भोजिका , चिकीर्षा देवदत्तस्य कटस्य** । **कृत्यानां कर्तरि वा** (II. 3. 71.)—कृत्यानां प्रयोगे कर्तरि वा षष्ठी विभक्तिर्भवति ; **भवतः** कटः **कर्तव्यः** । पक्षे तृतीया च—**भवता** कटः **कर्तव्यः** । **उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधोवक्तव्यः** (व); **नेतव्या** ग्राममजा **देवदत्तेन** ॥

15. **तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्** (II. 3. 72.)—तुल्यार्थैः शब्दैर्योगे तृतीया विभक्तिर्भवत्यन्यतरस्याम्, पक्षे षष्ठी च, तुलोपमाशब्दौ वर्जयित्वा । शेषविषये तृतीयाया विधानात् तया मुक्ते षष्ठी विभक्तिर्भवति ; **चन्द्रेण तुल्यं** मुखम्, **चन्द्रस्य तुल्यं** मुखम् ।

कमलेन समं वक्त्रं वक्त्रस्य सदृशः शशी ।
सदृक्षः शशिना राजा तस्य भास्वान् प्रभावतः ॥

अतुलोपमाभ्यामिति किम् ? तुला पार्थस्य नास्ति, उपमा कृष्णस्य नास्ति। **चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः** (II. 3. 73.)—आशिषि गम्यमानायाम् आयुष्य मद्र भद्र कुशल सुख अर्थ हित इत्येतैर्योगे चतुर्थी विभक्तिर्भवति अन्यतरस्याम् । शेषे विषये विधानात् तया मुक्ते षष्ठी विभक्तिर्भवति ; **आयुष्यं देवदत्ताय, आयुष्यं देवदत्तस्य**—इत्यादि । **न लोकाव्ययनिष्ठाखलर्थतृनाम्** (II. 3. 69.)—कर्तृकर्मणोः कृति इति प्राप्ता षष्ठी प्रतिषिध्यते ; ल उ उक अव्यय निष्ठा खलर्थ तृन् इत्येतेषां प्रयोगे षष्ठी न भवति । ल इति शतृ-शानचौ कानच्क्वसू गृह्यन्ते—**ओदनं पचन्, पचमानः, पेचानः, पेचिवान्** ; उ—**कटं चिकीर्षुः** ; उक—**आगामुकं वाराणसीं** रक्ष आहुः ; अत्र कर्मणि निषेधः—**लक्ष्म्याः कामुको** हरिः ; अव्यय—**भुवं सृष्ट्वा** ; निष्ठा—**ओदनं भुक्तवान्, रामेण परिणीता** सीता ; खलर्थ—**ईषत्करः** कटो **भवता, ईषत्पानः** सोमो **भवता** ; तृन्—तृन् इति अत्र प्रत्याहारः ; तेन शानन्-चानश्-

शतृ-तृनामपि प्रतिषेधः—**सोमं पवमानः, शिखण्डं वहमानः, वेदमधीयन्, कटं कर्ता । द्विषः शतुर्वा** (वा.)—इति **मुरस्य मुरं वा द्विषन् । क्तस्य च वर्तमाने** (II. 3. 67.)—न लोके-ति निषेधस्य (II.3.69.) अपवादः ; वर्तमानकालविहितस्य क्तस्य प्रयोगे षष्ठी विभक्तिर्भवति ; **राज्ञां मतः । नपुंसके भाव उपसंख्यानम्** (वा.)—इति **छात्रस्य हसितम्, कोकिलस्य रुतम् । अधिकरण-वाचिनश्च** (II. 3. 68.)—अधिकरणार्थस्य क्तस्य योगे षष्ठी विभ-क्तिर्भवति । अयमपि पूर्ववत् निषेधापवादः ; **इदमेषामासितम्** ॥

16. कस्मिन्नर्थे सप्तमी ? **सप्तम्यधिकरणे च** (II. 3. 36.) । किमधिकरणम् ? **आधारोऽधिकरणम्** (I. 4. 45.)—आध्रियन्ते अस्मिन् क्रियाः इत्याधारः ; कर्तृकर्मणोः क्रियाश्रयभूतयोः धारणक्रियां प्रति य आधारः तत् कारकमधिकरणसंज्ञं भवति । स आधारः औपश्लेषिक-वैषयिक-व्यापक-प्रत्यासत्तिभेदवान् चतुर्विधः । मूर्तयोः कठिनयोर्द्रव्ययोः उपर्यधोभावः औपश्लेषिक आधारः—**कटे आस्ते**; मूर्तामूर्तयोः संयोगे तु आधारस्य न यावद्द्रव्यत्वम्—**आकाशे विहङ्गः** ; वैषयिकः विषयतासम्बन्धकृत आधारः—**शिवे भक्तिः**; यावद्द्रव्यभावित्वं यस्य स आधारो व्यापकः—**तिलेषु तैलम्** ; प्रत्या-सत्तिः सामीप्यम्—**गङ्गायां घोषः** ।

आस्ते कटे देवदत्तो गगने विहगश्चरेत् ।
पुष्पे गन्धः सुते प्रीतिः वटे गावः सुशेरते ॥

चकारात् दूरान्तिकार्थेभ्यश्च ; **दूरे** देवदत्तः; **अन्तिके** यज्ञदत्तः । अत्र प्रातिपदिकार्थमात्रे विधानम् । **क्तस्येन्विषयस्य कर्मण्युपसंख्या-**

**नम्** (वा. II. 3. 36.)—इति **अधीती व्याकरणे** । **साध्वसाधुप्रयोगे च सप्तमी वक्तव्या** (वा.)—इति **साधुः** पुत्रो **मातरि, असाधुः पितरि** । **कारकार्हाणां च कारकत्वे** (वा.)—इति **ऋद्धेषु भुञ्जानेषु** दरिद्रा आसते । **अकारकार्हाणां चाकारकत्वे** (वा.)—इति **दरिद्रेषु आसीनेषु** ऋद्धा भुञ्जते । **तद्विपर्यासे च** (वा.)—इति **ऋद्धेष्वासीनेषु** दरिद्रा भुञ्जते । **निमित्तात् कर्मसंयोगे सप्तमी वक्तव्या** (वा) ; यथा

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
वालेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

**यस्य च भावेन भावलक्षणम्** (II. 3. 37.)—भावः क्रिया ; यस्य च क्रियया क्रियान्तरं लक्ष्यते ततो भावतः सप्तमी विभक्तिर्भवति । प्रसिद्धयैव क्रियया क्रियान्तरं लक्ष्यते ; **उद्याति भास्वति** जातो राजपुत्रः । **षष्ठी चानादरे** (II. 3. 38.)—अनादराधिके भावलक्षणे भाववतः षष्ठीसप्तम्यौ विभक्ती भवतः । पूर्वसूत्रेण सप्तम्यां प्राप्तायां षष्ठी विधीयते ; चकारात् सप्तमी च भवति—**आगच्छतः परबलस्य** स्वयं क्रीडति राजा, **आगच्छति परबले** स्वयं क्रीडति राजा ।

किमपि बहूनां वदतां स्वयं गुणी याति साधुमार्गेण ।
साधु वदत्स्वपि सत्सु स्वयमगुणी यात्यसाधुमार्गेण ॥

17. **स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च** (II. 3. 39.)—स्वामिन् ईश्वर अधिपति दायाद साक्षिन् प्रतिभू प्रसूत इत्येतैः योगे षष्ठीसप्तम्यौ विभक्ती भवतः ; **गवां स्वामी गोषु स्वामी, गवामीश्वरः गोष्वीश्वरः**, इत्यादि । **यतश्च निर्धारणम्** (II.

3. 41.)—जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम् ; यतो निर्धार्यते ततः षष्ठीसप्तम्यौ भवतः ; **मनुष्याणां** क्षत्रियः **शूरतमः, मनुष्येषु** क्षत्रियः **शूरतमः ; गवां** कृष्णा **संपन्नक्षीरतमा, गोषु** कृष्णा **संपन्नक्षीरतमा ; अध्वगानां** धावन् **शीघ्रतमः,** अध्वगेषु धावन् **शीघ्रतमः । साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः** (II. 3. 43.)—साधु निपुण इत्येताभ्यां योगे अर्चायां गम्यमानायां सप्तमी विभक्तिः, न तु प्रतिशब्दस्य प्रयोगे ; **मातरि साधुर्निपुणो** वा देवदत्तः ; **मातरं प्रति साधुः** देवदत्तः । **प्रसितोत्सुकाभ्यां तृतीया च** (II. 3. 44.)—प्रसित उत्सुक इत्येताभ्यां योगे तृतीयासप्तम्यौ विभक्ती भवतः ; **केशैः प्रसितः केशेषु प्रसितः, केशैरुत्सुकः केशेषूत्सुकः। नक्षत्रे च लुपि** (II. 3. 45.)—लुबन्तात् नक्षत्रशब्दात् तृतीयासप्तम्यौ विभक्ती भवतः । **नक्षत्रेण युक्तः कालः** (IV. 2. 3.) इत्यण्प्रत्ययः ; तस्य **लुबविशेषे** (IV. 2. 4.) इति लुप् ; **मूलेनावाहयेत्** देवीं **श्रवणेन** विसर्जयेत् । पक्षे **मूले श्रवणे** इति च ॥

**इति कारकावतारः समाप्तः ॥**



## अथ समासावतारः ॥

1. अथ सुबन्तानामेव पदानां परस्परसम्बन्धिनां समासः प्रदर्श्यते । सोऽपि सुबन्तत्वात् सुबन्ताश्रितत्वाच्च सुबन्तानन्तरं संक्षेपेणोपदिश्यते । स च पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः ; उभयपदार्थप्रधानो द्वन्द्वः ; इति चतुर्विधः ॥

2. तत्र प्रथममव्ययीभावसमासः प्रदर्श्यते । उप+कुम्भ इति स्थिते उपशब्दात् समीपवाचिनः प्रथमैकवचनम्—सु ; कुम्भशब्दात् षष्ठी । अविग्रहोऽयं नित्यसमासः। अस्वपदेन विग्रहो वा—इति कुम्भस्य समीपमिति विगृह्यते । **समर्थः पदविधिः** (II. 1. 1.)—परिभाषेयम् ; यः कश्चिदिह शास्त्रे पदविधिः श्रूयते स समर्थो वेदितव्यः ; पदानां विधिः पदविधिः ; स पुनस्समासादिः ; विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्यः । **सुबामन्त्रिते पराङ्गवत्स्वरे** (II. 1. 2), **प्राक्कडारात् समासः** (II. 1.3.), **सह सुपा** (II. 1. 4.), **अव्ययीभावः** (II. 1. 5.), इत्यनुवर्तमाने, **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (II. 1. 6.)—विभक्त्यादिष्वर्थेषु यदव्ययं वर्तते तत्सुबन्तेनोत्तरपदेन सह नित्यं समस्यते ; स समासोऽव्ययीभावसंज्ञकश्च भवति ; स च समर्था-

नामेव पदानां भवति । **प्रथमानिर्दिष्टं समास उपसर्जनम्** (I. 2. 43.)—समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं भवति । इत्युपशब्दस्योपसर्जनसंज्ञायाम्, **उपसर्जनं पूर्वम्** (II. 2. 30.) इत्युपशब्दस्य पूर्वनिपातः । समासस्य त्रीणि प्रयोजनानि ऐकपद्यमैकस्वर्यमेकविभक्तित्वं च । उप सु+कुम्भ अस् इति स्थिते, समासत्वात् प्रातिपदिकसंज्ञायां, **सुपो धातुप्रातिपदिकयोः** (II. 4. 71.)—एतयोरवयवस्य सुपो लुक् भवति । इति सु अस् इत्येतयोः सुपोः लुकि उपकुम्भ इति जाते, ततः स्वाद्युत्पत्तिः । **अव्ययीभावश्च** (I. 1. 4.)—अव्ययीभावसमासोऽपि अव्ययसंज्ञको भवति । इत्यव्ययसंज्ञायाम्, **अव्ययादाप्सुपः** (II. 4. 82.)—अव्ययाद्विहितस्य आपः सुपश्च लुक् भवति । इति सुपो लुकि प्राप्ते, **नाव्ययीभावादतोऽम्त्वपञ्चम्याः** (II. 4. 83.)—अकारान्तादव्ययीभावसमासात् उत्तरस्य सुपो लुक् न भवति; अमादेशस्तु तस्य भवति पञ्चमीं वर्जयित्वा । अमि पूर्वः; **उपकुम्भं** तिष्ठति—कुम्भस्य समीपे तिष्ठतीत्यर्थः । तथैव द्वितीयैकवचनस्याम्भावः—**उपकुम्भं** पश्य । **तृतीयासप्तम्योर्बहुलम्** (II. 4. 84.)—अकारान्तादव्ययीभावसमासादुत्तरयोः तृतीयासप्तम्योः बहुलममादेशो भवति; **उपकुम्भं** कृतम्, **उपकुम्भेन** कृतम्; **उपकुम्भं** निधेहि, **उपकुम्भे** निधेहि । पञ्चम्यास्तु न भवति अपञ्चम्याः इति प्रतिषेधात्; **उपकुम्भात्** आनय; उपकुम्भं देशः । एवमुपाग्नि-उपतरु-प्रभृतयः । अत्र अनकारान्तत्वादमागमो न भवति लुक्प्रतिषेधश्च । शरदः समीपमिति विग्रहे पूर्ववत् उपशरद् इति जाते, **समासान्ताः** (V. 4. 68.) इत्यधिकृत्य, **अव्ययीभावे शरत्प्रभृतिभ्यः** (V. 4. 107.)—शरत्प्रभृतिभ्यः

अव्ययीभावे टच् प्रत्ययो भवति ; **उपशरदम्**। एवमेव **उपानडुहम्** इत्यादि ॥

3. विभक्तिवचने—आत्मनि अधिकृत्य अध्यात्मन् इति जाते, **अनश्च** (V.4.108.)—अन्नन्तादव्ययीभावात् च टच् प्रत्ययो भवति समासान्तः ; इति **अध्यात्मम्** । एवं नदीशब्दस्यापि विभक्त्यर्थे अव्ययीभावसमासे, **नदीपौर्णमास्याग्रहायणीभ्यः** (V. 4. 110.)—नद्याद्यन्तात् अव्ययीभावात् टच् वा भवति ; **अधिनदम्** । पक्षे टजभावे, **अव्ययीभावश्च** (II. 4. 18.)—अव्ययीभावसमासोऽपि नपुंसकलिङ्गो भवति । इति नपुंसकलिङ्गतया **ह्रस्वो नपुंसके प्रातिपदिकस्य** (I. 2. 47.) इति ह्रस्वत्वम् ; **अधिनदि** । ऋद्धेराधिक्यं समृद्धिः—मद्राणां समृद्धिः **सुमद्रं** वर्तते । विगता ऋद्धिः व्यृद्धिः—गवदिकानामृद्धेरभावः **दुर्गवदिकं** वर्तते । अर्थाभावे—निर्मक्षिका इत्यत्र निश्शब्दादर्थाभाववाचिनः प्रथमैकवचनं सु ; मक्षिकाशब्दात् षष्ठीबहुवचनम् ; मक्षिकाणामभाव इत्यस्वपदेन विग्रहः ; नपुंसकत्वह्रस्वत्वे ; **निर्मक्षिकम्** । निर्मक्षिकं वर्तते—मक्षिकाणाम् अभावो वर्तते इत्यर्थः । अत्यये—शीतस्य अत्ययः **अतिशीतम्** । उपभोगस्य वर्तमानकालप्रतिषेधः असंप्रतिपदार्थः ; तस्मिन्—तैसृकस्यायमनुपभोगकाल इति **अतितैसृकम्** । तैसृकं तिसृकग्रामजाच्छादनविशेषः । शब्दप्रादुर्भावः प्रकाशता शब्दस्य ; तस्मिन्—**इतिपाणिनि** । पाणिनिशब्दो लोके प्रकाशते इत्यर्थः । पश्चादर्थे—**अनुगु** ; गवां पश्चादित्यर्थः । योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं चेति यथार्थाः । तत्र योग्यतायां चर्मणः योग्यम् इति पूर्ववत् समासे अनुचर्मन् इतिजाते, **नपुंसकादन्यतरस्याम्** (V. 4. 109.)—अन्नन्तनपुंसकान्ताव्ययीभवात् वा टच्

भवति ; **अनुचर्मम्** । पक्षे नकारलोपः—**अनुचर्म** । वीप्सायाम्—वाचं वाचं प्रति **प्रतिवाचम्** । अत्र **झयः** (V. 4. 111.)—झयन्ताद्व्ययीभावात् टच् वा भवति इति टच्। पक्षे **प्रतिवाक्**। पदार्थानतिवृत्तौ—शक्तिमनतिक्रम्य **यथाशक्ति** । सादृश्यार्थकयथाशब्दस्य, **यथाऽसादृश्ये** (II. 1. 7.)—यथेत्येतत् असादृश्यार्थ एव सुपा समस्यते ; अव्ययीभावश्च समासो भवति--इति यथा हरिः तथा हरः इत्यादिषु न समासः । **यथारूपं** पतिं भज, **यथावृद्धं** ब्राह्मणानामन्त्रयस्व, **यथाध्यापकं** व्रतमाचर, इत्यादिषु यथाशब्दस्य असादृश्यार्थत्वात् समासो भवति । सादृश्ये यथाशब्दार्थवाचकस्य अव्ययीभावसमासो भवत्येव ; हरेः सादृश्यं **सहरि** । अत्र वक्ष्यमाणप्रकारेण सहशब्दस्य सभावो द्रष्टव्यः । आनुपूर्व्यमनुक्रमः ; तस्मिन्—**अनुज्येष्ठं** प्रविशन्तु भवन्तः । यौगपद्यमेककालता; चक्रेण एककाले इति विग्रहे तदर्थक सहशब्दस्य समासेन सहचक्र इति जाते, **अव्ययीभावे चाकाले** (VI. 3. 81.) इति सहस्य सभावः; पूर्ववदम्भावश्च ; **सचक्रम्**। यौगपद्यार्थे **युगपच्चक्रम्** इत्यपि भवति । सादृश्यं तुल्यता; यथाशब्दार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं सादृश्यवतः धर्मिणः प्राधान्याय ; सदृशः सख्या **ससखि** । संपत्तिः अनुरूप आत्मभावः समृद्धेरन्यः ; अनुरूपो ब्रह्मभावः **सब्रह्म** बाभ्रवाणाम् । साकल्यमशेषता ; तस्मिन्—तृणमप्यपरित्यज्य **सतृणं** भुङ्क्ते । अन्तवचने—अन्त इति परिग्रहापेक्षया समाप्तिरुच्यते ; पशुबन्धान्तमधीते इति **सपशुबन्धम्** ;

सह-साकल्य-सादृश्य-यौगपद्य-समाप्तिषु ।
समृद्धौ चापि संपत्तौ सहशब्दः प्रकीर्तितः ॥

4. अव्ययम् इति योगविभागेन अर्थान्तरेऽपि समासो भवति। इति मध्यार्थे अव्ययस्य समासः इति केचित् ; विभक्त्यर्थत्वादेव सिद्ध्यति इत्यन्ये ; जलस्य मध्ये **अन्तर्जलम्** । **अन्तर्वणम्** इत्यत्र तु, **प्रनिरन्तश्शरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि** (VIII. 4. 5.)—प्र निर् अन्तर् शर इक्षु प्लक्ष आम्र कार्ष्य खदिर पीयूक्षा इत्येतेभ्य उत्तरस्य वननकारस्य णकारादेशो भवति असंज्ञायामपि—इति णत्वं विशेषः । मध्यार्थकान्तश्शब्दस्य गिरिशब्देन समासे अन्तर्गिरि इति जाते, **गिरेश्च सेनकस्य** (V. 4. 112.)—गिरिशब्दान्तात् अव्ययीभावात् टच् प्रत्ययो वा भवति सेनकस्याचार्यस्य मतेन। वेत्यनुवर्तनात् सेनकग्रहणं पूजार्थम् ; **अन्तर्गिरम् अन्तर्गिरि** । यावत्+अमत्र इति स्थिते उभयत्रापि जस् । यावन्ति अमत्राणि इति विग्रहे, **यावदवधारणे** (II.1.8.)—यावच्छब्दोऽवधारणेऽर्थे वर्तमानः सुबन्तेनोत्तरपदेन सह नित्यं समस्यते ; स समासोऽव्ययीभावसंज्ञकश्च भवति । शेषं पूर्ववत् ; **यावदमत्रं** ब्राह्मणानामन्त्रयस्व—यावन्त्यमत्राणि संभवन्ति तावत एव ब्राह्मणानामन्त्रयस्वेत्यर्थः। **सुप् प्रतिना मात्रार्थे** (II.1.9.)—मात्रा बिन्दुः स्तोकम् अल्पम् इति पर्यायः ; मात्रार्थकेन प्रतिना सुबन्तं समस्यते ; सोऽव्ययीभावो भवति ; सूपस्य मात्रा **सूपप्रति** । **अक्षशलाकासंख्याः परिणा** (II. 1. 10.)—अक्षादिशब्दाः परिणा सह समस्यन्ते अव्ययीभावश्च समासो भवति ; अक्षेण इदं विपरीतं वृत्तम् **अक्षपरि** इत्यादि । **अपपरिबहिरञ्चवः पञ्चम्या** (II. 1. 12.)—अपादयः पञ्चम्यन्तेन वा समस्यन्ते ; अव्ययीभावश्च समासो भवति; **अपत्रिगर्तं** वृष्टो देवः। पक्षे **अपत्रिगर्तेभ्यः** इति भवति। एवमेव **बहिर्ग्रामम् बहिर्ग्रामात्**, इत्यादि । **आङ् मर्यादा**

**भिविध्योः** (II. 1. 13.)—आङ् इत्येतत् मर्यादायामभिविधौ च पञ्चम्या विभाषा समस्यते; स समासोऽव्ययीभावो भवति; **आपाटलिपुत्रं** वृष्टो देवः । पक्षे **आ पाटलिपुत्रात्। लक्षणेनाभिप्रती आभिमुख्ये** (II. 1. 14.)—लक्षणं चिह्नं, तद्वाचिना सुबन्तेन अभिप्रतिशब्दौ आभिमुख्ये वर्तमानौ विभाषा समस्येते ; अव्ययीभावः ; **अभ्यग्नि** शलभाः पतन्ति **प्रत्यग्नि** वा। अग्निं लक्षीकृत्याभिमुख्येन पतन्तीत्यर्थः। **तिष्ठद्गुप्रभृतीनि च** (II. 1. 17.)—तिष्ठन्ति गावो यस्मिन् काले दोहनाय स **तिष्ठद्गु**; आयान्ति गावो यस्मिन् काले स **आयतीगवम्** ; एवमादयः अव्ययीभावसंज्ञका भवन्ति । **पारे मध्ये षष्ठ्या वा** (II. 1. 18.)—षष्ठीसमासे प्राप्ते तदपवादोऽयमारभ्यते ; पारे-मध्ये-शब्दौ षष्ठ्यन्तेन सह विभाषा समस्येते ; सोऽव्ययीभावः ; गङ्गायाः पारं **पारेगङ्गम्** । पक्षे **गङ्गापारम्** । महाविभाषया वाक्यमपि—**गङ्गायाः पारम्** । **संख्या वंश्येन** (II. 1. 19.)—विद्यया जन्मना वापि प्राणिनामेकलक्षणसन्तानो वंशः ; तज्जो वंश्यः ; संख्यावाचि रूपं वंश्यवाचिना सुबन्तेन विभाषा समस्यते ; सोऽव्ययीभावः ; द्वौ मुनी व्याकरणस्य वंश्यौ **द्विमुनि** व्याकरणस्य । **नदीभिश्च** (II. 1. 20.)—नदीवचनैः सह संख्या समस्यते, अव्ययीभावश्च समासो भवति । समाहारे चायमिष्यते ; **पञ्चनदम्, सप्तगोदावरम्** । अत्रत्यः अच्-प्रत्ययस्तु समासान्तप्रकरणे वक्ष्यते ॥

**इत्यव्ययीभावः** ॥



## अथ तत्पुरुषः ॥

1. अथ तत्पुरुषसमासः प्रदर्श्यते। कष्ट+श्रित इति स्थिते कष्टशब्दात् द्वितीयैकवचनम्, श्रितशब्दात् सु । कष्टं श्रितः इति विग्रहे, **विभाषा** (II. 1. 16), **तत्पुरुषः** (II. 1. 22.), इति वर्तमाने, **द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** (II. 1. 24.)—द्वितीयान्तं सुबन्तं समर्थं श्रितादिभिरुत्तरपदैः सह विभाषा समस्यते ; स समासस्तत्पुरुषसंज्ञकश्च भवति । पूर्ववत् सुपो लुक् ; कष्टशब्दस्य द्वितीयेति सूत्रे प्रथमानिर्दिष्टत्वादुपसर्जनतया पूर्वनिपातः ; स्वाद्युत्पत्तिः ; **कष्टश्रितो** देवदत्तः । **प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्** (परि. 71.)—इति श्रिता-शब्दस्यापि ग्रहणात् अत्र समासो भवति ; **कष्टश्रिता** ब्राह्मणी । एवं **मार्गातीतः, नरकपतितः, गृहगतः, तुहिनात्यस्तः, भोगप्राप्तः, दुःखापन्नः**, इति भवन्ति । समर्थग्रहणं किम्? देवदत्त पश्य कष्टम् ; श्रितो गुरुकुलं विष्णुमित्रः । **श्रितादिषु गमिगाम्यादीनामुपसंख्यानम्** (वा.)—इति ग्रामं गमी **ग्रामगमी**, ग्रामं गामी **ग्रामगामी**, ओदनं बुभुक्षुः **ओदनबुभुक्षुः**, इति भवन्ति । **कालाः** (II. 1. 28.)—द्वितीया क्तेन इति वर्तते ; कालवाचि यत् द्वितीयान्तं तत् क्तान्तेन समस्यते विभाषा ; तत्पुरुषश्च भवति ; मासं प्रमितो **मासप्रमितः** शशी । मासं परिच्छेत्तुमारब्धवान् इत्यर्थः । **अत्यन्तसंयोगे च** (II.1. 29.)—कालाः इत्येव वर्तते; क्तेनेति निवृत्तम्; कालवाचि यत् द्वितीयान्तं तत् अत्यन्तसंयोगे गम्यमाने सुबन्तेन वा समस्यते ; तत्पुरुषश्च भवति ; मुहूर्तं सुखं **मुहूर्तसुखम्** ॥

2. शङ्कुला + खण्ड इति स्थिते शङ्कुलाशब्दात् तृतीया खण्डशब्दात् सु । शङ्कुलया खण्डः इति विग्रहे, **तृतीया तत्कृतार्थेन गुणवचनेन** (II. 1. 30.)—तत्कृतेति लुप्ततृतीयाकं पदम् ; तृतीयान्तं सुबन्तं समर्थं तृतीयान्तार्थकृतेन गुणवचनेनार्थशब्देन चोत्तरपदेन सह विभाषा समस्यते ; स समासस्तत्पुरुषसंज्ञकश्च भवति । पूर्ववत् लुक् स्वाद्युत्पत्तिश्च ; **शङ्कुलाखण्डः**। अत्र खण्डशब्दस्य गुणवचनत्वम् । धान्येन अर्थः इति विग्रहे तेनैव सूत्रेण धान्यशब्दस्य अर्थशब्देन सह समासः ; शेषं पूर्ववत् ; **धान्यार्थः** । तत्कृतेति किम् ? अक्ष्णा काणः । **पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः** (II. 1. 31.)—एतैः सह तृतीयान्तं समस्यते, तत्पुरुषश्च भवति ; मासेन पूर्वः **मासपूर्वः** । एवं **पितृसदृशः**, **मातृसमः**, **माषोनम्**, **गुञ्जाविकलम्**, **असिकलहः**, **आचारनिपुणः**, **गुडमिश्रः**, **शीलश्लक्ष्णः**, इति भवन्ति । **अवरस्योपसंख्यानम्** (वा.)—इति मासेन अवरः **मासावरः**। **कर्तृकरणे कृता बहुलम्** (II. 1. 32.)—कर्तरि करणे च या तृतीया तदन्तं कृदन्तेन सह समस्यते बहुलम् ; तत्पुरुषश्च समासः; अहिना हतः **अहिहतः**, परशुना छिन्नः **परशुच्छिन्नः**। **कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्** (परि. 28.)—इति नखेन निर्भिन्नं **नखनिर्भिन्नम्**। **अन्नेन व्यञ्जनम्** (II. 1. 34.)—व्यञ्जनवाचि तृतीयान्तम् अन्नवाचिना सह सुबन्तेन समस्यते विभाषा ; तत्पुरुषश्च समासः; दध्ना उपसिक्त ओदनः **दध्योदनः** ॥

3. कुण्डल + हिरण्य इति स्थिते, कुण्डलशब्दात् तादर्थ्ये चतुर्थी हिरण्यशब्दात् सु । कुण्डलाय हिरण्यम् इति विग्रहे, **चतुर्थी तदर्थार्थ-**

**बलिहितसुखरक्षितैः** (II. 1. 36.)—चतुर्थ्यन्तं समर्थं तदर्थवाचिना सुबन्तेन अर्थ बलि हित सुख रक्षित इत्येतैश्च सह विभाषा समस्यते; स समासस्तपुरुषश्च भवति। शेषं पूर्ववत्; नपुंसकत्वात् स्वमोरम्भावः; **कुण्डलहिरण्यम्**। एवं **यूपदारु** इत्यादयः। प्रकृतिविकारभावे समासोऽयमिष्यते; तेनेह न भवति—रन्धनाय स्थाली, अवहननायोलूखलम्। एवमेव **कुबेरबलिः, गोहितम्, गोसुखम्, गोरक्षितम्,** इति च भवन्ति। अर्थेन नित्यसमासवचनं सर्वलिङ्गता च —इति **ब्राह्मणार्थः** सूपः, **ब्राह्मणार्था** यवागूः, **ब्राह्मणार्थं** पयः॥

4. चोर + भय इति स्थिते, चोरशब्दात् पञ्चमी भयशब्दात् सु। चोरेभ्यो भयमिति विग्रहे, **पञ्चमी भयेन** (II. 1. 37.)—पञ्चम्यन्तं सुबन्तं समर्थं भयशब्देनोत्तरपदेन सह विभाषा समस्यते; स समासस्तत्पुरुषसंज्ञकश्च भवति। शेषं पूर्ववत्; स्वाद्युत्पत्तिः; **चोरभयम्**। एवं **वृकभयम्** इत्यादि। **भयभीतभीतिभीभिरिति वक्तव्यम्** (वा); वृकेभ्यो भीतः **वृकभीतः** इत्यादि। पूर्वस्यैवायं बहुळग्रहणस्य प्रपञ्चः। तथा च **ग्रामनिर्गतः, अधर्मजुगुप्सुः,** इत्येवमादि सिद्धं भवति। **अपेतापोढमुक्तपतितापत्रस्तैरल्पशः** (II. 1. 38.)—एतैः सह पञ्चम्यन्तमल्पशः समस्यते, तत्पुरुषश्च समासो भवति; सुखात् अपेतः **सुखापेतः**। एवं **कल्पनापोढः, चक्रमुक्तः, स्वर्गपतितः, तरङ्गापत्रस्तः,** इति च भवन्ति। अल्पशः इति किम्? प्रासादात् पतितः। **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन** (II. 1. 39.)—स्तोक अन्तिक दूर इत्येवमर्थाः शब्दाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन सह समस्यन्ते। पञ्चम्याः स्तोकादिभ्यः (VI. 3. 2.) इति वक्ष्यमाण-

प्रकारेण अलुक्; **स्तोकान्मुक्तः**, **दूरादागतः**, **कृच्छ्राल्लब्धः**, इत्यादि । **शतसहस्रौ परेणेति वक्तव्यम्** (वा.); शतात् परे **परश्शताः**, सहस्रात् परे **परस्सहस्राः**। अत्र राजदन्तादित्वात् परनिपातः; निपातनात् सुडागमः ॥

5. राजन्+पुरुष इति स्थिते राजन्शब्दात् षष्ठी पुरुषशब्दात् सु। राज्ञः पुरुषः इति विग्रहे, **षष्ठी** (II. 2. 8.)—षष्ठ्यन्तं सुबन्तं समर्थं सुबन्तेनोत्तरपदेन सह विभाषा समस्यते, स समासस्तत्पुरुषसंज्ञकश्च भवति । सुपो लुकि कृते अन्तर्वर्तिनीं विभक्तिमपेक्ष्य पदसंज्ञायां नलोपः; **राजपुरुषः** । एवं **देवपुरुषः** इत्यादि । कुक्कुट्याः अण्डम् इति विग्रहे पूर्ववत् समासः; **कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः** (वा. VI.3.42.) इति **कुक्कुटाण्डम्** इति भवति। एवं **मृगपदम्**, **मृगक्षीरम्** इत्यादयः । **कृद्योगा च षष्ठी समस्यते इति वाच्यम्** (वा.)—इति इध्मस्य व्रश्चनः **इध्मव्रश्चनः** । प्रतिपदविधाना या षष्ठी तस्याः समासप्रतिषेधार्थमिदं वचनम् । **याजकादिभिश्च** (II. 2. 9.)—पूर्वेण समासः सिद्ध एव; तस्य कर्तरि च (II. 2. 16.) इति प्रतिषेधे प्राप्ते, वचनमिदमारभ्यते प्रतिप्रसवार्थम्; याजकादिभिः सह षष्ठी समस्यते, तत्पुरुषश्च समासो भवति; **क्षत्रिययाजकः**, **देवपूजकः**, **राजपरिचारकः**, इत्यादि । **तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम्** (वा.); पूरणगुणेति (II. 2. 11.) निषेधस्य प्रतिप्रसवोऽयम्; चन्दनस्य गन्धः **चन्दनगन्धः** । **गुणात्तरेण तरलोपश्चेति वक्तव्यम्** (वा.); न निर्धारणे (II. 2. 10.) इति पूरणगुणेति (II. 2. 10.) च निषे-

धस्य प्रतिप्रसवोऽयम् ; सर्वेषां श्वेततरः **सर्वश्वेतः**, सर्वेषां महत्तरः **सर्वमहान्** ॥

7. **न निर्धारणे** (II. 2. 10.)—जातिगुणक्रियादिभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम् ; तस्मिन् या षष्ठी सा न समस्यते ; क्षत्रियो **मनुष्याणां शूरतमः**, कृष्णा **गवां सम्पन्नक्षीरतमा । प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम्** (वा.)—इति **सर्पिषो ज्ञानम्। पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन** (II. 2. 11.)—एतैः सह षष्ठी न समस्यते । पूरणार्थे—**छात्राणां पञ्चमः** ; गुणे—**बलाकायाः शौक्ल्यम्** ; सुहितार्थः तृप्त्यर्थः, तस्मिन्—**फलानां सुहितः तृप्तो** वा ; सत्—**ब्राह्मणस्य कुर्वन् कुर्वाणो** वा ; अव्यये—**ब्राह्मणस्य कृत्वा** ; तव्य—**ब्राह्मणस्य कर्तव्यम्** ; तव्यता सानुबन्धेन समासो भवत्येव—**ब्राह्मणकर्तव्यम्** ; समानाधिकरणे—**पाणिनेः सूत्रकारस्य । कर्मणि च** (II. 2. 14.)—कर्मणि च या षष्ठी सा न समस्यते । उभयप्राप्तौ षष्ठी (II. 3. 66.) इति षष्ठ्या इदं ग्रहणम् ; साधु खलु **पयसः पानं** देवदत्तेन । **तृजकाभ्यां कर्तरि** (II. 2. 15.)—कर्तरि या षष्ठी सा तृचा अकेन च सह न समस्यते ; **अपां स्रष्टा, भवतोऽग्रगामिका । कर्तरि च** (II. 2. 16.)—कर्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते ; **पुरां भेत्ता, ओदनस्य भोजकः** ॥

8. **पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे** (II. 2. 1.)—एकदेशोऽस्यास्तीत्येकदेशी अवयवी ; तद्वाचिना सुबन्तेन सह पूर्वापराधरोत्तरशब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्ते ; तत्पुरुषश्च

समासो भवति; पूर्वं कायस्य **पूर्वकायः**। एवम् **अपरकायः**, **अधरकायः**, **उत्तरकायः**। **अर्द्धं नपुंसकम्** (II. 2. 2.)—अर्द्धमित्येतत् नपुंसकमेकदेशिना एकाधिकरणेन समस्यते; तत्पुरुषश्च समासो भवति; अर्द्धं पिप्पल्याः **अर्द्धपिप्पली**। अत्र एकविभक्ति च (I. 2. 44.) इति पिप्पलीशब्दस्य उपसर्जनत्वे प्राप्ते, एकविभक्तावषष्ठ्यन्तवचनम् (वा.) इत्यनुपसर्जनत्वात् न ह्रस्वः। दन्तानां राजा इति विग्रहे, **राजदन्तादिषु परम्** (II. 2. 31.)—पूर्वनिपाते प्राप्ते परप्रयोगार्थं वचनम्; राजदन्तादिषु उपसर्जनं परं प्रयोक्तव्यम्; **राजदन्तः**। एवं वनस्य अग्रे **अग्रेवणम्**; निपातनादलुक्॥

9. अक्ष+शौण्ड इति स्थिते अक्षशब्दात् सप्तमी शौण्डशब्दात् सु। अक्षेषु शौण्डः इति विग्रहे, **सप्तमी शौण्डैः** (II. 1. 40.)—सप्तम्यन्तं सुबन्तं समर्थं शौण्डादिभिरुत्तरपदैः सह विभाषा समस्यते। शेषं पूर्ववत्; स्वाद्युत्पत्तिः; **अक्षशौण्डः**। एवम् **अक्षकितवः** इत्यादयः। **सिद्धशुष्कपक्वबन्धैश्च** (II. 1. 41.)—एतैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति; काम्पिल्ये सिद्धः **काम्पिल्यसिद्धः**। एवम् **आतपशुष्कः**, **स्थालीपक्वः**, **गुप्तिबन्धः**। **ध्वाङ्क्षेण क्षेपे** (II. 1. 42.)—ध्वाङ्क्षेणेत्यर्थग्रहणम्; ध्वाङ्क्षवाचिना सह सप्तम्यन्तं सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति; तीर्थे ध्वाङ्क्ष इव **तीर्थध्वाङ्क्षः**। एवं **तीर्थकाकः** इत्यादि। क्षेपे इति किम्? तीर्थे ध्वाङ्क्षस्तिष्ठति। **कृत्यैर्ऋणे** (II. 1. 43.)—कृत्यप्रत्ययान्तैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति, ऋणे गम्यमाने; मासे देयम् ऋणं **मासदेयम्**। **क्तेनाहोरात्रावयवाः** (II. 1. 45.)—

अहरवयवाः रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति ; **पूर्वाह्णकृतम्, अपररात्रकृतम्** । अवयवग्रहणं किम् ? अहनि भुक्तम्, रात्रौ वृत्तम् । बहुलग्रहणात् **रात्रिवृत्तम्, सन्ध्यागर्जितम्,** इत्यादयोऽपि भवन्ति ॥

10 पञ्चन्+पूल इति स्थिते उभयत्रापि जस् ; पञ्च पूलाः समाहृताः इति विग्रहः । **दिक्संख्ये संज्ञायाम्** (II. 1. 50.) इति वर्तमाने, **तद्धितार्थोत्तरपदसमाहारे च** (II. 1. 51.)—तद्धितार्थे विषयभूते उत्तरपदे च परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेनोत्तरपदेन सुबन्तेन सह विभाषा समस्येते, स समासः तत्पुरुषसंज्ञकश्च भवति । तद्धितार्थे—पूर्वस्यां शालायां भवः **पौर्वशालः**, पञ्चसु कपालेषु संस्कृतः **पाञ्चकपालः** ; उत्तरपदे—पूर्वा शाला प्रिया यस्येति **पूर्वशालाप्रियः**, पञ्च गावो धनं यस्येति **पञ्चगवधनः**। समाहारे दिक्शब्दा न संभवन्ति । **संख्यापूर्वो द्विगुः** (II.1.52.)—संख्यापूर्वस्तत्पुरुषसमासो द्विगुसंज्ञो भवति । **द्विगुरेकवचनम्** (II. 4. 1.)—द्विगुः समासः एकवचनमेव भवति । समाहारद्विगोरिदं ग्रहणं नान्यस्य । **स नपुंसकम्** (II. 4. 17.)—यस्यायमेकवद्भावो विहितः स नपुंसको भवति । इति नपुंसकलिङ्गत्वे प्राप्ते—**अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते** (वा.)—इति स्त्रीलिङ्गत्वं भवति ; द्विगोः (IV.1.21.) इति ङीप् च भवति ; पञ्च पूलाः समाहृताः **पञ्चपूली** । एवमेव **दशरथी** इत्यादि । स्त्रीत्वाभावे **दशगवम्** । **पञ्चपात्रम्, त्रिभुवनम् , चतुर्युगम्** , इत्यादिषु, **पात्रादिभ्यः प्रतिषेधो वक्तव्यः** (वा.)—इति स्त्रीत्वप्रतिषेधः । अकारान्तोत्तरपद इति किम् ? पञ्चकुमारि ॥

11. नील+उत्पल इति स्थिते उभयत्रापि सु; विशेषणविशेष्यभावप्रसिद्ध्यर्थमुभयत्रापि च-शब्द-प्रयोगः ; नीलं च तदुत्पलं च इति विग्रहः। **विशेषणं विशेष्येण बहुलम्** (II.1.57.)—बहूनर्थान् लातीति बहुलम् ; भेदकं विशेषणम्, भेद्यं विशेष्यम् ; विशेषणवाचि सुबन्तं समर्थं विशेष्यवाचिना सुबन्तेन समानाधिकरणेनोत्तरपदेन सह बहुलं समस्यते, स समासस्तत्पुरुषसंज्ञकश्च भवति । **तत्पुरुषः समानाधिकरणः कर्मधारयः** (I. 2. 42.)—भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् ; समानाधिकरणस्तत्पुरुषः कर्मधारयसंज्ञो भवति । उक्तार्थानामप्रयोगः—इति च-शब्द-निवृत्तिः ; स्वाद्युत्पत्तिः ; नपुंसकत्वात् सोरम्भावः ; आद्गुणः ; **नीलोत्पलम्**। एवं **रक्तोत्पलम्** इत्यादयः । बहुलग्रहणात् क्वचिन्नित्यसमासः—**कृष्णसर्पः** ; क्वचिन्न भवति— **रामो जामदग्न्यः** । विशेषणमिति किम् ? तक्षकः सर्पः । विशेष्येणेति किम् ? लोहितस्तक्षकः । तथैव कृष्णा च सा शाटी चेति विग्रहे पूर्ववत्समासे कृते, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (VI. 3. 34.)—भाषितपुंस्कात् उत्तरो यः स्त्रीप्रत्ययः ऊङ्व्यतिरिक्तः तदन्तस्य शब्दस्य पुंवद्भावो भवति पूरणीप्रियादिवर्जिते समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे परतः । इति आपो निवृत्तिः ; **कृष्णशाटी** । एवं **रक्तलता** इत्यादयः। बृन्दारिका च सा पाचिका चेति विग्रहे, **बृन्दारकनागकुञ्जरैः पूज्यमानम्** (II. 1. 62.)—बृन्दारक नाग कुञ्जर इत्येतैः समानाधिकरणैः पूजावचनैः सह पूज्यमानवाचि सुबन्तं समस्यते ; स समासस्तत्पुरुषः। विशेष्यस्य पूर्वनिपातार्थोऽयम् । तत्पुरुषः समानाधिकरणः (I. 2. 42.) इति कर्मधारयसंज्ञायां, **पुंवत् कर्मधारयजातीयदे-**

**शीयेषु** (VI. 3. 42.)—कर्मधारये समासे जातीयदेशीययोश्च प्रत्यययोः परतो भाषितपुंस्कादनूङन्तस्य स्त्रीप्रत्ययान्तस्य पुंवद्भावो भवति। स्त्रियाः इत्यादिना (VI. 3. 34.) प्राप्तस्य पुंवद्भावस्य, **न कोपधायाः** (VI. 3. 37.)—कोपधायाः स्त्रियाः पुंवद्भावो न भवति—इति प्रतिषेधे प्राप्ते, अनेन पुंवद्भावो विधीयते ; **पाचकबृन्दारिका, गोनागः, गोकुञ्जरः** ॥

12. **उपमानानि सामान्यवचनैः** (II. 1. 55.)—उपमीयते अनेनेत्युपमानम् ; उपमानवाचीनि सुबन्तानि सामान्यवचनैः सुबन्तैः सह समस्यन्ते; तत्पुरुषश्च समासो भवति। उपमानोपमेययोः साधारणो धर्मः सामान्यम् ; घन इव श्यामः **घनश्यामः**। **उपमितं व्याघ्रादिभिः सामान्याप्रयोगे** (II. 1. 56.)—उपमेयमुपमितम्; तद्वाचि सुबन्तं व्याघ्रादिभिः सामर्थ्यात् उपमानवचनैः सह समस्यते, तत्पुरुषश्च समासो भवति, न चेत् सामान्यवाची शब्दः प्रयुज्यते। विशेष्यस्य पूर्वनिपातार्थं आरम्भः ; पुरुषोऽयं व्याघ्र इव **पुरुषव्याघ्रः**। एवमेव **पुरुषसिंहः, पुरुषर्षभः, पुरुषबृषः**, इत्यादीनि भवन्ति। व्याघ्रादेराकृतिगणत्वात् **मुखकमलम्, करकिसलयम्, पार्थिवचन्द्रः**, इत्यादीनि च भवन्ति। सामान्याप्रयोगे इति किम्? पुरुषो व्याघ्र इव शूरः। **कृत्यतुल्याख्या अजात्या** (II. 1. 68.)—कृत्यप्रत्ययान्ताः तुल्यपर्यायाश्च सुबन्ताः अजातिवचनेन समस्यन्ते ; तत्पुरुषश्च समासः ; भोज्यं च तदुष्णं च **भोज्योष्णम्**, तुल्यश्चासौ श्वेतश्च **तुल्यश्वेतः**। **किं क्षेपे** (II. 1. 64.)—किमित्येतत् क्षेपे गम्यमाने सुपा समस्यते ; तत्पुरुषश्च समासः; कुत्सितो राजा **किंराजा** यो न रक्षति। **समानाधिकरणाधिकारे शाकपार्थिवादीनामु-**

**पसंख्यानमुत्तरपदलोपश्च** (वा. II. 1. 60.)—इति शाकप्रियः पार्थिवः **शाकपार्थिवः**, देवपूजको ब्राह्मणः **देवब्राह्मणः** । **मयूरव्यंसकादयश्च** (II. 1. 72.)—समुदाया एव निपात्यन्ते मयूरव्यंसकादयः शब्दाः, तत्पुरुषसंज्ञाश्च भवन्ति ; **मयूरव्यंसकः, उच्चावचम् , निश्चप्रचम्,** इत्यादि । आकृतिगणोऽयम् ; अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः ॥

13. नञ् + अश्व इति स्थिते नकारलोपः ; प्रयोजनं **नलोपो नञः** (VI. 3. 73.) इति विशेषणम् । नञ्शब्दात् सु अश्वशब्दात् पञ्चमी ; अश्वादन्य इति विग्रहः । **नञ्** (II. 2. 6.)—नञन्तं सुबन्तं समर्थं सुबन्तेनोत्तरपदेन सह विभाषा समस्यते ; स समासः तत्पुरुषसंज्ञकश्च भवति । **अलुगुत्तरपदे** (VI. 3. 1.) इति वर्तमाने, **नलोपो नञः** (VI. 3. 73.)—नञो नकारस्य लोपो भवति उत्तरपदे परतः । **तस्मान्नुडचि** (VI.3.74.)—तस्माल्लुप्तनकारात् नञः परस्य अजादेरुत्तरपदस्य नुडागमो भवति ; **अनश्वः** । एवमेव **अब्राह्मणः** इत्यादि । **नभ्राण्णपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या** (VI. 3. 75.)—नभ्राट् इत्यादिषु नञ् प्रकृत्या भवति । **एकादिश्चैकस्य चादुक्** (VI. 3. 76.)—एकादिश्च नञ् प्रकृत्या भवति, एकशब्दस्य अदुगागमश्च ; एकेन न विंशतिः **एकान्नविंशतिः** । **नगोऽप्राणिष्वन्यतरस्याम्** (VI.3.77.)—नञ् प्रकृत्या भवति वा नग इत्यत्र अप्राणिषु वाच्येषु ; **नगा अगाः** पर्वताः । अप्राणिष्विति किम् ? अगो वृषलः शीतेन नकनान्तरीयकनाराचादिषु न-शब्देन सुप् सुपेति समासः ॥

14. **कुगतिप्रादयः** (II. 2. 18.)—कुशब्दः अव्ययं गृह्यते गतिसाहचर्यात् ; एते शब्दान्तरेण समर्थेन नित्यं समस्यन्ते, तत्पुरुषश्च समासो भवति। कुः पापार्थे—कुत्सितः पुरुषः **कुपुरुषः** ; गतिसंज्ञके—**शुक्लीकृतः**—अशुक्लः शुक्लः कृतः ; प्रादयः—**सुपुरुषः**। **प्रादयो गताद्यर्थे प्रथमया** (वा.)—इति प्रगतः आचार्यः **प्राचार्यः**। **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** (वा.)—इति मालामतिक्रान्तः इति विग्रहे, अति सु+माला अम् इति स्थिते, सुपो लुकि, **एकविभक्ति चापूर्वनिपाते** (I. 2. 44.)—एका विभक्तिर्यस्य तत् एकविभक्ति; समासे विधीयमाने यत् नियतविभक्तिकं तत् उपसर्जनसंज्ञं भवति, न तु तस्य पूर्वनिपातः। इति मालाशब्दस्य उपसर्जनसंज्ञायां, **गोस्त्रियोरुपसर्जनस्य** (I. 2. 48.)—उपसर्जनगोशब्दान्तस्य उपसर्जनस्त्रीप्रत्ययान्तस्य च प्रातिपदिकस्य ह्रस्वो भवति ; इति **अतिमालः**। **अवादयः क्रुष्टाद्यर्थे तृतीयया** (वा.)—इति अवक्रुष्टः कोकिलया **अवकोकिलः** काकः। **पर्यादयो ग्लानाद्यर्थे चतुर्थ्या** (वा.)—इति परिग्लानः अध्ययनाय **पर्यध्ययनः**। **निरादयः क्रान्ताद्यर्थे पञ्चम्या** (वा.)—इति निष्क्रान्तः कौशाम्ब्याः **निष्कौशाम्बिः**। **इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्** (वा.)—इति **वागर्थाविव**। **उपपदमतिङ्** (II. 2. 19.)—उपपदमतिङन्तं समर्थेन शब्दान्तरेण नित्यं समस्यते, तत्पुरुषश्च समासो भवति। उप समीपे उच्चारितं पदम् उपपदम् ; **कुम्भकारः**, **नगरकारः**। अतिङिति किम् ? एधानाहारको व्रजति। ननु च सुप् सुपेति वर्तते ; तत्र कुतः सह तिङन्तेन समासप्रसङ्गः ? एवं तर्हि ज्ञापयति अस्मिन् योगे सुप् सुपेति न सम्बध्यते इति। तेन **गतिकार**

**कोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः** (परि. 75) इति परिभाषा सिद्धा ; गतौ—व्याजिघ्रतीति **व्याघ्री** ; कारके—अश्वेन क्रीता **अश्वक्रीती** ; उपपदे—माषं वपतीति **माषवापिणी** ॥

**इति तत्पुरुषः ॥**

## अथ बहुव्रीहिः ॥

1. अथ बहुव्रीहिसमासः प्रदर्श्यते । चित्र+गो इति स्थिते उभयत्रापि जस् ; चित्रा गावो यस्येति विग्रहः । **अनेकमन्यपदार्थे** (II.2.24) —अनेकं सुबन्तम् अन्यपदार्थे वर्तमानं समस्यते, बहुव्रीहिश्च समासो भवति । प्रथमार्थमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति । सुपो लुक् । स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु (IV. 3. 34.) इति भाषितपुंस्कादनूङन्तस्य स्त्रीप्रत्ययान्तस्य च प्रातिपदिकस्य पुंवद्भावो भवति । गोस्त्रियोरिति ( I. 2. 48. ) गोशब्दस्य ह्रस्वत्वे प्राप्ते, एच इग्घ्रस्वादेशे ( 1. 1. 48. ) इत्योकारस्य उकारः ; प्रातिपदिकत्वात् स्वाद्युत्पत्तिः ; **चित्रगुः** । कारुशब्दवद्रूपनयः । अत्र अनेकमिति उभयोः प्रथमानिर्दिष्टत्वात् अनियमेन पूर्वनिपातप्रसक्ते, **सप्तमीविशेषणे बहुव्रीहौ** ( II. 2. 35. ) —सप्तम्यन्तं विशेषणं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम् । इति चित्रशब्दस्य विशेषणस्य पूर्वनिपातः । रूपवती भार्या यस्येति **रूपवद्भार्यः** । भाषितपुंस्कादिति किम् ? **खट्वाभार्यः** । अनूङिति

किम्? **ब्रह्मबन्धूभार्यः**। अपूरणीप्रियादिष्विति किम्? **कल्याणी-पञ्चमा** रात्रयः, **कल्याणीप्रियः**। प्राप्ता अतिथयः यं ग्रामम्, ऊढो रथो येन, उपहृतः पशुर्यस्मै, उद्धृतः ओदनो यस्याः स्थाल्याः, वीराः पुरुषाः यस्मिन् देशे सन्ति, इति विग्रहे, प्रथमार्थं वर्जयित्वा सर्वविभक्तिषु पूर्ववद्बहुव्रीहिसमासः ; शेषं समानम्। किन्तु, **निष्ठा** (II. 2. 36.)— निष्ठान्तं शब्दरूपं बहुव्रीहौ समासे पूर्वं प्रयोक्तव्यम्। इति **प्राप्तातिथिः** ग्रामः, **ऊढरथः** अनड्वान्, **उपहृतपशुः** रुद्रः ; **उद्धृतौदना** स्थाली—अत्र समासे कृते टाप्—**वीरपुरुषः** ग्रामः। प्रथमार्थे तु न भवति ; वृष्टे देवे गतः। **बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्** (वा. II. 2. 24.) इति नेह भवति—पञ्चभिः भुक्तम् अस्य। अविद्यमाना भार्या यस्येति विग्रहे, **नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च** (वा.) ; इति **अभार्यः**, **अविद्यमानभार्यः**। **अव्ययानां च बहुव्रीहिर्वक्तव्यः** (वा.) ; इति उच्चैः मुखं यस्य सः **उच्चैर्मुखः**। **सप्तम्युप-मानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः** (वा.) ; इति कण्ठेऽस्थितः कालो यस्य सः **कण्ठेकालः**, उष्ट्रस्य मुखमिव मुखं यस्य सः **उष्ट्र-मुखः**। **प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्री-हिर्वक्तव्यः** (वा.) ; इति प्रपतितं पर्णमस्य **प्रपर्णः**॥

2. पाचिका भार्या यस्येति विग्रहे पूर्ववत् समासः। पुंवद्भावे प्राप्ते, **न कोपधायाः** (VI. 3. 37.)—कोपधायाः स्त्रियाः पुंवद्भावो न भवति ; **पाचिकाभार्यः**। एवमेव **मद्रिकाभार्यः** इत्यादि। **कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यम्** (वा.) ; इति नेह— **पाकभार्यः**, **भेकभार्यः**। **संज्ञापूरण्योश्च** (VI. 3. 38.)—

संज्ञायाः पूरण्याश्च न पुंवत् ; **दत्ताभार्यः**, **दशमीभार्यः** । **स्वाङ्गाच्चेतो ऽमानिनि** (VI.3.40.)—स्वाङ्गादुत्तरो य ईकारः तदन्ता स्त्री न पुंवत्, अमानिनि परतः ; **दीर्घकेशीभार्यः** । अमानिनीति किम्? दीर्घकेशमानिनी। **जातेश्च** (VI. 3. 41.)—जातेश्च स्त्रिया न पुंवत् ; **ब्राह्मणीभार्यः** । **वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे** (VI. 3. 39.)—वृद्धिनिमित्तः रक्तेऽर्थे विकारे च यो न विहितः तद्धितः तदन्ता स्त्री न पुंवत् ; **माधुरीभार्यः** । रक्ते—काषायी कन्था यस्य स **काषायकन्थः**; विकारे—**हैममुद्रः**।

3. **अनेकमन्यपदार्थे** (II. 2. 24.)—अनेकं सुबन्तम् अन्यपदार्थे वर्तमानं समस्यते, बहुव्रीहिश्च समासो भवति । इत्यनेकग्रहणात् बहूनामपि बहुव्रीहिः ।

सुसूक्ष्मजटकेशेन सुलभाजिनवाससा ।
पुत्री पर्वतराजस्य कुतो हेतोर्विवाहिता ॥

**संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये** (II. 2. 25.)—संख्येये या संख्या वर्तते तया सह अव्ययादयः समस्यन्ते , बहुव्रीहिश्च समासो भवति ; दशानां समीपे ये सन्ति ते **उपदशाः** । एवमेव **आसन्नविंशाः**, **अदूरत्रिंशाः**, **अधिकचत्वारिंशाः** । संख्ययोः—पञ्च वा षड् वा **पञ्चषाः**, द्वौ वा त्रयो वा **द्वित्राः** । **संख्याया अल्पीयस्याः पूर्वनिपातो वक्तव्यः** (वा. II. 2. 34.) इत्यत्र पूर्वनिपातनियमः । **दिङ्नामान्यन्तराले** (II. 2. 26.)—दिशां नामानि दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च स समासो भवति ; दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा **दक्षिणपूर्वा** । इह **सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः** (वा.) इति पुंवद्भावः।

नामग्रहणं रूढ्यर्थम् । **तत्र तेनेदमिति सरूपे** (II. 2. 27.)—तत्रेति सप्तम्यन्तं गृह्यते; तेनेति तृतीयान्तम्; सरूपग्रहणं प्रत्येकं संबध्यते; सप्तम्यन्ततृतीयान्ते इदमित्येतस्मिन्नर्थे समस्येते, बहुव्रीहिश्च समासः। इतिकरणश्च विवक्षार्थः लौकिकार्थमनुसारयति । ततो ग्रहणं प्रहरणं कर्मव्यतिहारो युद्धं च समासार्थ इति सर्वमितिकरणाल्लभ्यते। तत्रेति निर्दिष्टं ग्रहणं भवति, तेनेति निर्दिष्टं प्रहरणं भवति, इदमिति निर्दिष्टं युद्धम् । ग्रहणे—**केशाकेशि** ; प्रहरणे—**दण्डादण्डि** । **तेन सहेति तुल्ययोगे** (II. 2. 28.)—सहेत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं तेनेति तृतीयान्तेन समस्यते, बहुव्रीहिश्च समासः; पुत्रेण सह वर्तते इति **सपुत्रः** । **वोपसर्जनस्य** (VI. 3. 82.)—उपसर्जनस्य बहुव्रीहौ सहशब्दस्य वा सकारः । इति सत्वाभावपक्षे—**सहपुत्रः** ॥

4. **वाहिताग्न्यादिषु** (II. 2. 37.)—आहिताग्न्यादिषु निष्ठान्तं वा पूर्वं प्रयोक्तव्यम्; आहितः अग्निः येन सः **आहिताग्निः,अग्न्याहितो** वा। एवमेव **जातदन्तः,दन्तजातः**,इत्यादयः। **गड्वादिभ्यः सप्तम्यन्तं परम्** (वा. II. 2. 35.)—इति **गडुकण्ठः, पद्मनाभः**। **गडुशिरा** इत्यत्र अत्वसन्तस्येति (IV. 4. 14.) दीर्घः। **प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्** (वा. II. 2. 36.)—इति **अस्युद्यतः, दण्डपाणिः** । **उद्यतासिः** इति कथम्? प्राप्तस्य चाबाधा व्याख्येया । **कण्ठेकलङ्कः** इत्यत्र, अमूर्धमस्तकात् स्वाङ्गादकामे (VI. 3. 12.) इत्यलुक् । बह्व्यः श्रेयस्यः यस्य इति विग्रहे पूर्ववत् समासः; गोस्त्रियोः (I. 2. 48.) इति ह्रस्वे प्राप्ते, **ईयसो बहुव्रीहेः प्रतिषेधो वक्तव्यः** (वा.)—इति **बहुश्रेयसी**।

महान् बाहुः यस्येति विग्रहे पूर्ववत् समासः ; **आन्महतस्समानाधिकरणजातीययोः** (VI. 3. 46.)—समानाधिकरणे उत्तरपदे जातीये च प्रत्यये परतः महत आकारादेशो भवति ; **महाबाहुः** ।

**चित्रविविधपुष्पफलतरुवनोपशोभितोद्यानभूमि** नगरमित्यत्र **बहुपदबहुव्रीहिः** । यथा—चित्राणि च तानि विविधानि चेति विशेषणसमासः ; पुष्पाणि च फलानि चेति चार्थे द्वन्द्वः ; तरूणां वनं तरुवनमिति षष्ठीसमासः ; चित्रविविधानि पुष्पफलानि येषामिति बहुव्रीहिः ; चित्रविविधपुष्पफलानि च तानि तरुवनानि चेति पुनर्विशेषणसमासः ; उपशोभितेति गतिसमासः ; चित्रविविधपुष्पफलतरुवनैरुपशोभितेति तृतीयासमासः ; उद्यानस्य भूमिः इति षष्ठीसमासः ; चित्रविविधपुष्पफलतरुवनोपशोभिता उद्यानभूमिर्यस्मिन्नगरे तत् चित्रविविधपुष्पफलतरुवनोपशोभितोद्यानभूमि ; इति बहुपदबहुव्रीहिः ॥

**इति बहुव्रीहिसमासः ॥**



## अथ द्वन्द्वसमासः ॥

1. अथ द्वन्द्वसमासः प्रदर्श्यते । पटु+गुप्त इति स्थिते, उभयत्रापि सु । इतरेतरयोगप्रसिद्ध्यर्थमुभयत्रापि च-शब्दप्रयोगः ; पटुश्च गुप्तश्च इति विग्रहः । **अनेकमन्यपदार्थे** (II. 2. 24.) इति वर्तमाने, **चार्थे द्वन्द्वः** (II. 2. 29.)—चार्थे वर्तमानमनेकं सुबन्तं समर्थं परस्परं विभाषा समस्यते ; स समासो द्वन्द्वसंज्ञकश्च भवति । को वा चार्थः ?

समुच्चयान्वाचयेतरेतरयोगसमाहाराः चार्थाः। परस्परानिरपेक्षाणां पदार्थानामेकस्मिन् अन्वयः समुच्चयः ; यत्रैकस्य प्राधान्यमितरत्तदनुरोधेन सम्बध्यते सोऽन्वाचयः ; एकस्यां क्रियायामनेकेषां पदार्थानामन्योन्यापेक्षाकारकत्वमितरेतरयोगः ; संहतिस्समाहारः। तत्र समुच्चयान्वाचययोरसामर्थ्यान्नास्ति समासः। इतरेतरयोगे समाहारे च समासो विधीयते। समाहारः परस्परानुप्रवेशादनधिगतावयवभेदानामुपसर्जनीभूतावयवसङ्घातः।

इतरेतरयोगस्तु भिन्नसङ्घाभिधायिनाम् ।
प्रत्येकश्च समूहोऽसौ समूहिषु समाप्यते ॥

अयमनयोर्भेदः। सुपो लुक् ; पूर्ववत् च-शब्दनिवृत्तिः। अनियमेन पूर्वनिपाते प्राप्ते, **द्वन्द्वे घि** (II. 2. 32.)—द्वन्द्वसमासे घ्यन्तं पदं पूर्वं प्रयोक्तव्यम्। इतरेतरयोगे अवयवप्रधानत्वात् द्विवचनं भवति; **पटुगुप्तौ**। एवं **कविबुधौ, शशिसूर्यौ,** इत्यादि ॥

2. उष्ट्र+शश, प्लक्ष+न्यग्रोध, इति स्थिते स्वाद्युत्पत्तिः ; समाहारे च-शब्दप्रयोगः। उष्ट्राश्च शशाश्च, प्लक्षाश्च न्यग्रोधाश्च, इति समाहारे द्वन्द्वसमासः। तथैव सुपो लुक्। **अजाद्यदन्तम्**। (II. 2. 33.)—अजादि अदन्तं च यत् शब्दरूपं तत् द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। **अल्पाच्तरम्** (II. 2. 34.)—अल्पाच्तरं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। उष्ट्रप्लक्षयोः एवं पूर्वनिपातः। **विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्** (II. 4. 12.)—वृक्षाद्यर्थवाचिनां द्वन्द्वो यः स विभाषैकवद्भवति। **स नपुंसकम्** (II. 4. 17.)—स द्वन्द्वो नपुंसकलिङ्गो भवति। एकवद्भावादेकवचनमेव भवति ; **उष्ट्रशशम्, प्लक्षन्यग्रोधम्**। **बहुप्रकृतिः फलसेनाव-**

**नस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम्** (वा. II. 4. 12.)—इति एषां द्वन्द्वे बहुप्रकृतिरेव एकवद्भवति न तु द्विप्रकृतिः। इति एकवद्भावाभावपक्षे—**उष्ट्रशशाः**, **प्लक्षन्यग्रोधाः** ; द्विप्रकृतिकद्वन्द्वे—**उष्ट्रशशौ**, **प्लक्षन्यग्रोधौ** । एवम् उष्ट्रखरम् , उष्ट्रखराः ; धवखदिरम् , धवखदिराः ; रुरुपृषतम् , रुरुपृषताः ; कुशकाशम् , कुशकाशाः; व्रीहियवम् , व्रीहियवाः ; दधिघृतम् , दधिघृते ; गोमहिषम्, गोमहिषाः; तित्तिरिकपिञ्जलम् , तित्तिरिकपिञ्जलाः ; अश्ववडवम् , अश्ववडवौ ; पूर्वापरम् , पूर्वापरे ; अधरोत्तरम् , अधरोत्तरे ; अश्वरथौ; इन्द्रवायू ; वृक्षपर्वतौ ; इति भवन्ति ; **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः** (II. 4. 26.) इति नियमेऽपि, **पूर्ववदश्ववडवौ** (II. 4. 27.)—अश्ववडवयोर्द्वन्द्वे पूर्ववल्लिङ्गं भवति । अश्वश्च वडवा च **अश्ववडवौ** ॥

3. **ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणां पूर्वनिपातो वक्तव्यः** (वा. II. 2. 34.)—इति **हेमन्तशिशिरे**, **चित्रास्वाती** । समानाक्षराणामिति किम् ? **ग्रीष्मवसन्तौ** । **अभ्यर्हितं पूर्वन्निपतति** (वा )—इति **वासुदेवार्जुनौ** । **लघ्वक्षरं पूर्वन्निपतति** (वा.)—इति **कुशकाशम्**, **कुशकाशाः**, **अहोरात्रः** । **अहोरात्रः** इत्यत्र—**अह्नो रुविधौ रूपरात्रिरथन्तरेषूपसंख्यानं कर्तव्यम्** (वा. VIII.2.68.) ; हशि च (VI.1.114.) इत्युत्वम् ; गुणः । **रात्राह्नाहाः पुंसि** (II. 4. 21.)—कृतसमासान्तानां निर्देशः ; रात्र अह्न अह इत्येते पुंसि भाव्यन्ते । इति पुंस्त्वम् ; समासान्तो वक्ष्यते । **वर्णानामानुपूर्व्येण पूर्वनिपातः** (वा.)—इति **ब्राह्मणक्षत्रियौ**, **वैश्यशूद्रौ** । **भ्रातुश्च ज्यायसः पूर्वनिपातः** (वा.)—इति **युधिष्ठिरार्जुनौ** । विष्वक्सेनश्च अर्जु-

नश्च इति विग्रहे, राजदन्तादिषु परम् (II. 2. 31.) इति **विष्वक्सेनार्जुनौ** । शब्दार्थौ धर्मार्थौ कामार्थौ इत्यादिषु अनियमश्चात्रेष्यते । **धर्मादिषूभयम्**—इति अर्थशब्दौ, अर्थधर्मौ, अर्थकामौ । अत्र राजदन्तादिगणे जायाशब्दस्य वा जम्भावदम्भावौ निपात्येते ; जाया च पतिश्च **जम्पती दम्पती** वा ; पक्षे **जायापती** । अनेकग्रहणाद्बहूनामपि भवति ; बहुषु पूर्वनिपातस्यानियमः ; **शङ्खदुन्दुभिवीणाः, वीणाशङ्खदुन्दुभयः**, इत्यादि ॥

4. पाणी च पादौ च इति विग्रहे पूर्ववत् समासः । **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** (II. 4. 2.)—एकवचनमिति वर्तते ; अङ्गशब्दस्य प्रत्येकं सम्बन्धः ; प्राण्यङ्गसेनाङ्गतूर्याङ्गानाम् एकवद्भावो भवति द्वन्द्वश्च । इदन्तु प्रकरणविषयविभागार्थम्—प्राण्यङ्गानां समाहारे एव द्वन्द्वः, दधिपयआदीनाम् इतरेतरयोगे एव, वृक्षमृगादीनामुभयत्र—इति ; **पाणिपादम्**, **रथिकाश्वारोहम्**, **मार्दङ्गिकपाणविकम्** । **जातिरप्राणिनाम्** (II. 4. 6.)—जातिवाचिनां द्वन्द्वः एकवद्भवति प्राणिनो वर्जयित्वा ; आरा च शस्त्री च **आराशस्त्रि** । एवमेव **धानाशष्कुलि** इत्यादि । अप्राणिनामिति किम् ? ब्राह्मणक्षत्रियविट्शूद्राः । **नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थावगतिः** (परि. 74.)—इति अत्र द्रव्यजातिरेव गृह्यते ; तस्मान्नेह—रूपरसौ, गमनाकुञ्चने । **क्षुद्रजन्तवः** (II. 4. 8.)—अपरिचितपरिमाणः क्षुद्रः ; क्षुद्रजन्तुवाचिनां द्वन्द्वः एकवद्भवति ; **दंशमशकम्, यूकालिक्षम्** ।

क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः ।
शतं वा प्रसृतौ येषां केचिदानकुलादपि ॥

**येषाञ्च विरोधश्शाश्वतिकः** (II. 4. 9.)—विरोधो वैरम्, शाश्वतिको नित्यः; येषां शाश्वतिको विरोधः तेषां द्वन्द्वो भवति, एकवच्च; **अहिनकुलम्, मार्जारमूषकम्** । **शूद्राणामनिरवसितानाम्** (II. 4. 10.)—निरवसितं बहिष्करणम्; यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति ते निरवसिताः; अनिरवसितशूद्रवाचिनां द्वन्द्व एकवद्भवति; **तक्षायस्कारम्, रजकतन्तुवायम्** । अनिरवसितानामिति किम्? चण्डालमृतपाः । **विप्रतिषिद्धञ्चानधिकरणवाचि** (II. 4. 13.)—परस्परविरुद्धं विप्रतिषिद्धम्; अधिकरणं द्रव्यम्; विरुद्धार्थानामद्रव्यवाचिनां वा द्वन्द्वः एकवद्भवति; **शीतोष्णम् शीतोष्णे, सुखदुःखम् सुखदुःखे** । **न दधिपयआदीनि** (II. 4. 14.)—दधिपयःप्रभृतीनां शब्दानां द्वन्द्वे एकवद्भावो न भवति; **दधिपयसी, सर्पिर्मधुनी** । **सर्वो द्वन्द्वो विभाषैकवद्भवति** (परि. 34.); चार्थे इति सूत्रेण विहितो द्वन्द्वः अत्र विवक्षितः; **रक्षःपिशाचम् रक्षःपिशाचाः** । होता च पोता च इति विग्रहे पूर्ववत् समासः; **आनङृतो द्वन्द्वे** (VI. 3. 25.)—ऋकारान्तानां विद्यायोनिसम्बन्धवाचिनां द्वन्द्वे पूर्वपदस्य आनङादेशो भवति उत्तरपदे परतः; **होतापोतारौ** । एवमेव **मातापितरौ, याताननान्दरौ** । मण्डूकप्लुत्या पुत्रशब्दानुवर्तनात् तस्मिन् परतोऽपि आनङ्; **पितापुत्रौ** । **देवताद्वन्द्वे च** (VI. 3. 26.)—अत्रापि आनङ्; **सूर्याचन्द्रमसौ, इन्द्रावरुणौ** ॥

5 अथैकशेषः । रामश्च रामश्च इति विग्रहे रामरामौ इति द्वन्द्वे प्रसक्ते, **सरूपाणामेकशेष एकविभक्तौ** (I. 2. 64.) इत्येकशेषः; **रामौ** । रूपग्रहणाद्विरूपाणामपि; वक्रदण्डश्च कुटिलदण्डश्च, **वक्रद-**

**ण्डौ कुटिलदण्डौ** वा । ब्राह्मणश्च ब्राह्मणी च इति विग्रहे द्वन्द्वे प्रसक्ते, **पुमान् स्त्रिया** (I. 2. 67.)—स्त्रिया सहवचने पुमान् शिष्यते ; **ब्राह्मणौ** । स्त्रीपुंसलक्षणविशेष एव इदम् ; नेह—इन्द्रश्च इन्द्राणी च **इन्द्रेन्द्राण्यौ** । भ्राता च स्वसा च इति विग्रहे, **भ्रातृपुत्रौ स्वसृदुहितृभ्याम्** (I. 2. 68.)—स्वसा सहवचने भ्रातृशब्दः शिष्यते, दुहित्रा पुत्रशब्दः ; **भ्रातरौ, पुत्रौ** । माता च पिता च इति विग्रहे, **पिता मात्रा** (I. 2. 70.)—मात्रा पितृशब्दो वा शिष्यते ; **पितरौ, मातापितरौ** । **मातरपितरावुदीचाम्** (VI. 3. 32.)—इति उदीचां मते **मातरपितरौ** । **श्वशुरश्श्वश्र्वा** (I.2.71.)—श्वश्र्वा श्वशुरः शिष्यते वा ; श्वशुरश्च श्वश्रूश्च **श्वशुरौ श्वश्रूश्वशुरौ** । **त्यदादीनि सर्वैर्नित्यम्** (I. 2. 72.)—सर्वैः सह त्यदादयः शिष्यन्ते नित्यम् ; **स च रामश्च = तौ** । त्यदादीनाम्मिथो यद्यत्परं तत्तत् शिष्यते ; **स च यश्च=यौ** । त्यदादितश्शेषे पुन्नपुंसकतो लिङ्गवचनानि ; **स च सा च=तौ ;स च तच्च=ते ; सा च तत् च=ते** द्वे वस्तुनी ॥

**इति द्वन्द्वसमासः ॥**





## अथ समासान्ताः ॥

1. **समासान्ताः** (V. 4. 68.)—अधिकारोऽयम् ; आपाद-परिसमाप्तेः ये प्रत्यया विहिताः ते समासस्यान्तावयवा एकदेशा भवन्ति । तद्ग्रहणेन गृह्यन्त इति वेदितव्यम् । ऋचः अर्धम् इति विग्रहे, **ऋक्पूरब्धूःपथामानक्षे** (V. 4. 74.)—अ अनक्षे इति छेदः ; ऋक् पुर् अप् धुर् पथिन् इत्येवमन्तानां समासानाम् अकारप्रत्ययो भवति समासान्तः ; अक्षे न । सामर्थ्याद्धुर एतद्विशेषणम् अक्षे इति ; **अर्धर्चम्, ललाटपुरम्, विमलापम्, राजधुरा, महापथः** । अनक्षे इति किम् ? अक्षधूः । प्रतीपमित्यत्र प्रतिगता आपो यस्येति विग्रहः ; प्रति +अप इति स्थिते ; **द्व्यन्तरुपसर्गेभ्योऽप ईत्** (VI. 3. 97.)—द्वि अन्तर् इत्येताभ्यामुपसर्गात् च उत्तरस्य अप-शब्दस्य ईकारादेशो भवति। आदेः परस्य इति आद्यकारस्य ईकारः ; **प्रतीपम्, द्वीपम्, अन्तरीपम्** । अनुगता आपः यस्मिन् इति विग्रहे, अनु+अप इति स्थिते, ईत्वे प्राप्ते, **ऊदनोर्देशे** (VI. 3. 98.)—अनोः परस्य अपस्य ऊकारः स्यात् देशे गम्यमाने ; **अनूपो** देशः । देश इति किम् ? अन्वीपम् । **महाधुरम्** ; अत्र महती धूर्यस्मिन्निति विग्रहे, स्त्रियाः पुंवदित्यादिना पुंवद्भावः ; आन्महतस्समानाधिकरणजातीययोः (VI. 3. 46.) इति महच्छब्दस्याकारादेशो भवति ॥

2. **उपसर्गादध्वनः** (V. 4. 85.)—उपसर्गात्परो योऽध्वन्-शब्दस्तदन्तात् समासात् अच्प्रत्ययो भवति समासान्तः । प्र+अध्वन् इत्यत्र प्राध्वन्+अ इति जाते, **नस्तद्धिते** (VI. 4. 144.)—

नकारान्तस्य भस्य टेर्लोपो भवति तद्धिते परतः; **प्राध्वो रथः, प्राध्वं** शकटम्। **अच् प्रत्यन्ववपूर्वात् सामलोम्नः** (V. 4. 75.)—प्रति अनु अव इत्येवंपूर्वात् सामान्ताल्लोमान्ताच्च अच्प्रत्ययो भवति समासान्तः; **प्रतिसामम्, प्रतिलोमम्,** इत्यादि।

कृष्णोदक्पाण्डुपूर्वायाः भूमेरच्प्रत्ययः स्मृतः।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि॥

कृष्णा भूमिर्यस्य सः **कृष्णभूमः; सप्तगोदावरम्।** अन्यत्रापि दृश्यते—**पद्मनाभः, दीर्घरात्रः, समरात्रः, अरात्रः,** इत्यादिषु। तदेतत्सर्वम् अजिति योगविभागात् साधनीयम्। **अवसमन्धेभ्यस्तमसः** (V. 4. 79.)—अव सम् अन्ध इत्येतेभ्यः परो यस्तमश्शब्दः तदन्तादच्प्रत्ययो भवति समासान्तः; **अवतमसम्, सन्तमसम्, अन्धतमसम्। ब्रह्मवर्चसम्, हस्तिवर्चसम्,** इत्यत्र **ब्रह्महस्तिभ्यां वर्चसः** (V. 4. 78.)—ब्रह्महस्तिभ्याम्परो यो वर्चस्-शब्दः तदन्तात् समासादच्प्रत्ययो भवति समासान्तः। **तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः** (V. 4. 86.)—संख्यादेरव्ययादेश्चाङ्गुलिशब्दान्तस्य तत्पुरुषस्याच्प्रत्ययो भवति समासान्तः। एवं द्वे अङ्गुली प्रमाणम् अस्य **द्व्यङ्गुलम्,** निर्गतमङ्गुलिभ्यो **निरङ्गुलम्,** इति भवतः। **प्रमाणे लो द्विगोर्नित्यम्** (वा.)—इति मात्रचो लोपः। **अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः** (V. 4. 87.)—अहरादिभ्यः परः यो रात्रिशब्दः तदन्तस्य तत्पुरुषस्य अच्प्रत्ययो भवति; चात् संख्यादेः अव्ययादेश्च स समासान्तो भवति। अहश्च रात्रिश्च **अहोरात्रः**—अत्र रात्राह्नाहाः पुंसीति पुंस्त्वम्—**सर्वरात्रः, पूर्वरात्रः, पुण्यरात्रः, एकरात्रः, द्विरात्रः, अतिरात्रः,** इत्यादि। **उपसर्गाच्च** (V. 4. 119.)—

उपसर्गात्परो यो नासिकाशब्दस्तदन्तात् बहुव्रीहेः अच्प्रत्ययो भवति ; नासिकाशब्दस्य नसादेशः ; **उन्नसः** । **उपसर्गाद्बहुलम्** (VIII. 4. 28.)—उपसर्गस्थान्निमित्तादुत्तरस्य नसो नकारस्य णकारादेशो भवति ; **प्रणसः** । **वेर्ग्रो वक्तव्यः** (वा)—इति विगता नासिका यस्य सः **विग्रः** । **अञ्नासिकायास्संज्ञायां नसञ्चास्थूलात्** (V. 4. 118.)—नासिकान्तात् बहुव्रीहेः अच्प्रत्ययो भवति समासान्तः; नासिकाशब्दश्च नसमादेशमापद्यते, न चेत् स्थूलात् परा नासिका । द्रुरिव नासिका यस्य सः **द्रुणसः** ; अत्र पूर्वपदात्संज्ञायामगः (VIII. 4. 3.) इति णत्वम् । अस्थूलादिति किम् ? स्थूलनासिको वराहः । **खुरखराभ्यां वा नस् वक्तव्यः** (वा.)—इति **खुरणाः**, **खरणाः** । पक्षे अजपि इष्यते ; **खुरणसः**, **खरणसः** ॥

3. द्वयोरह्नोः समाहारः इति विग्रहे द्विगौ कृते, द्वि+अहन् इति जाते, **राजाहस्सखिभ्यष्टच्** (V. 4. 91.)—राजन् अहन् सखि इत्येवमन्तात् प्रातिपदिकात् टच् प्रत्ययो भवति समासान्तः; **द्व्यहः** । एवमेव **महाराजः**, **राजसखः** । द्वयोरह्नोर्भवः इति विग्रहे तद्धितार्थे द्विगौ टचि कृते, द्व्यहन्+अ इति जाते, **अह्नोऽह्न एतेभ्यः** (V. 4. 88.)—संख्याव्ययेभ्यः सर्वादिभ्यश्च उत्तरस्य अहन्शब्दस्य टच्प्रत्यये परतः अह्न इत्ययमादेशो भवति समासान्तः; **द्व्यह्नः** । एवमेव **अत्यह्नः** इत्यादि । **अह्नोऽदन्तात्** (VIII. 4. 7.)—अकारान्तात् पूर्वपदस्थान्निमित्तात् उत्तरस्याह्नो नकारस्य णकारादेशो भवति ; **सर्वाह्णः**, **पूर्वाह्णः** । समाहारे द्विगौ तु—**न संख्यादेस्समाहारे** (V. 4. 89.)—इति अह्नादेशो न भवति ; **द्व्यहः**, **त्र्यहः** । पुण्यं च तत् अहश्च इति विग्रहे विशेषणसमासः । तत्र

**उत्तमैकाभ्यां च** (V. 4. 90.)—उत्तमशब्देन पुण्यशब्द उच्यते; पुण्यैकाभ्यामुत्तरस्य अहन्शब्दस्य अह्नादेशो न भवति। **पुण्यसुदिनाभ्यामह्नो नपुंसकत्वं वक्तव्यम्** (वा.)—इति **पुण्याहम्; एकाहः** । **कुमहद्भ्यामन्यतरस्याम्** (V. 4. 105.)—कुमहद्भ्यां परो यो ब्रह्मन्-शब्दः तदन्तात् समासादन्यतरस्यां टच् प्रत्ययो भवति समासान्तः । टिलोपः; **कुब्रह्मः, महाब्रह्मः** । पक्षे—**कुब्रह्मा, महाब्रह्मा** । **नावो द्विगोः** (V. 4. 99.)—नौशब्दान्तात् द्विगोः टच् प्रत्ययो भवति समासान्तः । इति द्वयोर्नावोस्समाहारः **द्विनावम्**; एवं **त्रिनावम्, पञ्चनावप्रियः** । **अर्धाच्च** (V.4.100.)—अर्धात् नावः टच् । इति नावः अर्धम् **अर्धनावम्** । **द्वित्रिभ्यामञ्जलेः** (V. 4. 102.)—द्वित्रिभ्यां परस्य अञ्जलेः टच् स्यात्; **द्व्यञ्जलम्, त्र्यञ्जलम्** । **गोरतद्धितलुकि** (V. 4. 92.)—गोशब्दान्तात् तत्पुरुषात् टच् प्रत्ययो भवति, न तद्धितलुकि; **पञ्चगवम्** । अतद्धितलुकीति किम्? पञ्चभिः गोभिः क्रीतः पञ्चगुः । **अनोऽश्मायस्सरसां जातिसंज्ञयोः** (V. 4. 94.)—अनस् अश्मन् अयस् सरस् इत्येवमन्तात्तत्पुरुषात् टच् प्रत्ययो भवति जातौ संज्ञायां च विषये; **महानसम्, कालायसम्, अमृताश्मः, मण्डूकसरसम्** ॥

4. **नञस्तत्पुरुषात्** (V. 4. 71.)—नञः परे ये वक्ष्यमाणा राजादयः तदन्तात् तत्पुरुषात् समासान्तो न भवति; **अराजा, असखा, अगौः** । **न पूजनात्** (V. 4. 69.)—यान् शब्दानुपादाय समासान्ता विधीयते राजाहस्सखिभ्यष्टजित्येवमादिना, यदि ते पूजनवचनात् परे भवन्ति, तदन्तात् समासान्तो न भवति।

**पूजायां स्वातिग्रहणं कर्तव्यम्** (वा)—इति **सुराजा, अतिराजा**। **प्राग्बहुव्रीहिग्रहणं च कर्तव्यम्** (वा)—इति बहुव्रीहौ न समासान्तनिषेधः; **स्वक्षः, अत्यक्षः**। **किमः क्षेपे** (V. 4. 70.)—क्षेपे यः किंशब्दः ततः परस्य समासान्तो न भवति। यो न रक्षति सः **किंराजा**; एवमेव **किंसखा**। **ऊधसोऽनङ्** (V. 4. 131.)—ऊधश्शब्दान्तात् बहुव्रीहेरनङादेशो भवति समासान्तः; कुण्डमिव ऊधो यस्यास्सा **कुण्डोध्नी**। ऊधसोऽनङि स्त्रीग्रहणं कर्तव्यम्; इह न भवति—**कुण्डोधो** धैनुकम्, **महोधाः** पर्जन्यः। **धनुषश्च** (V. 4. 132.)—धनुश्शब्दान्तस्य बहुव्रीहेः अनङादेशो भवति; **पुष्पधन्वा**। **वा संज्ञायाम्** (V. 4. 133.)—प्रागुक्तस्य वा भवति अनङादेशः संज्ञायाम्; **शतधन्वा, शतधनुः**। **जायाया निङ्** (V. 4. 134.)—जायाशब्दान्तस्य बहुव्रीहेर्निङादेशो भवति; युवतिर्जाया यस्य सः **युवजानिः**। एवमेव **रेवतीजानिः**। **सुहृद्दुर्हृदौ मित्रामित्रयोः** (V. 4. 150.)—सुहृत् दुर्हृत् इत्येतौ शब्दौ मित्रामित्रयोर्निपात्येते। सुशब्दात्परस्य हृदयशब्दस्य हृद्भावः, तथा दुश्शब्दात्परस्य च। मित्रामित्रयोरिति किम्? सुहृदयः कारुणिकः, दुर्हृदयश्चोरः। **सुदन् द्विदन्** इत्यत्र, **वयसि दन्तस्य दतृ** (V. 4. 141.)—वयसि गम्यमाने संख्यासुपूर्वस्य दन्तशब्दस्य दतृभावः। वयसीति किम्? सुदन्तो दाक्षिणात्यः कुञ्जरः, द्विदन्तश्च। षट् दन्ता यस्य इति विग्रहे, **षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वञ्च धासु वेति वाच्यम्** (वा. VI. 3. 109.)—इति **षोडन्**। **स्त्रियां संज्ञायाम्** (V. 4. 143.)—स्त्रियाम् अन्यपदार्थे दन्तस्य दत्रादेशो भवति संज्ञायाम्; **अयोदती, फालदती**। संज्ञायामिति

किम् ? समदन्ती । **विभाषा श्यावारोकाभ्याम्** (V. 4. 144.)—आभ्याम्परस्य दन्तस्य दतृभावो वा ; **श्यावदन्, श्यावदन्तः** ; **अरोकदन्, अरोकदन्तः** । **अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च** (V. 4. 145.)—अग्रान्तात् शब्दात् शुद्धादिभ्यश्च परस्य दन्तशब्दस्य विभाषा दतृभावो बहुव्रीहौ ; **कुड्मलाग्रदन्, शुद्धदन्**, इत्यादि । पक्षे **कुड्मलाग्रदन्तः, शुद्धदन्तः**, इत्यादि ॥

5. **उरःप्रभृतिभ्यः कप्**, (V. 4. 151.)—उरःप्रभृत्यन्तात् बहुव्रीहेः कप् प्रत्ययो भवति ; **व्यूढोरस्कः, प्रियपयस्कः**, इत्यादि । अत्र कुप्वोः ≍क≍पौ च (VIII. 3. 37.) इति जिह्वामूलीये प्राप्ते, **सोऽपदादौ** (VIII. 3. 38.)—विसर्जनीयस्य सकारादेशो भवति अपदाद्योः कुप्वोः परतः ; इति सकारः । **बहुदण्डिका** शाला, **बहुच्छत्रिका** सेना, इत्यत्र तु, **इनस्स्त्रियाम्** (V. 4. 152.)—इन्नन्तात् बहुव्रीहेः स्त्रियामभिधेयायां कप् प्रत्ययो भवति समासान्तः । **नद्यृतश्च** (V. 4. 153.)—नद्यन्तोत्तरपदात् ऋदन्तोत्तरपदाच्च बहुव्रीहेः कप् प्रत्ययो भवति । बह्व्यः कुमार्यः यस्मिन् सः इति विग्रहे कपि कृते, बहुकुमारीक इति जाते, **केऽणः** (VII. 4. 13.)—के प्रत्यये परे अणो ह्रस्वो भवति । इति ईकारस्य ह्रस्वप्रसक्तौ, **न कपि** (VII. 4. 14.)—कपि परतः ह्रस्वो न भवति । इति **बहुकुमारीको** ग्रामः ; एवमेव **बहुवधूकः** कुपतिः ; **बहुकर्तृकः** पाकः । **शेषाद्विभाषा** (V.4.154.)—यस्मात् बहुव्रीहेः समासान्तो न विहितः तस्मात् कप् प्रत्ययो वा भवति ; **महायशस्कः, महायशाः** । अत्र बह्व्यः मालाः यस्मिन् स इति विग्रहे कपि कृते बहुमालाक इति जाते, न कपीति आकारस्य

ह्रस्वनिषेधे प्राप्ते, **आपोऽन्यतरस्याम्** (VII. 4. 15.)—आबन्तस्य अङ्गस्य कपि ह्रस्वो वा न भवति ; **बहुमालाकः, बहुमालकः**। शेषादिति किम् ? प्रियपथः, प्रियधुरः, व्याघ्रपात् । **न संज्ञायाम्** (V. 4. 155.) इति वर्तमाने, **ईयसश्च** (V.4.156.)—ईयसन्तात् बहुव्रीहेः कप् प्रत्ययो न भवति ; **बहुश्रेयान्, बहुपटीयान्** ॥

6. **गन्धस्येदुत्पूतिसुसुरभिभ्यः** (V. 4. 135.)–उत् पूति सु सुरभि इत्येतेभ्यः परस्य गन्धशब्दस्य इकारादेशो भवति समासान्तो बहुव्रीहौ ; **उद्गन्धिः, पूतिगन्धिः**, इत्यादि। **गन्धस्येत्वे तदेकान्तग्रहणम्** (वा.) ; एकान्तः अविभागेन लक्ष्यमाणः गुणवचनो गन्धो गृह्यते ; तेन नेह—**सुगन्धः** आपणिकः । **अल्पाख्यायाम्** (V. 4. 136.)—अल्पवाचिगन्धशब्दस्यापि इकारस्समासान्तो भवति बहुव्रीहौ ; घृतस्य गन्धो लेशो यस्मिन् तत् **घृतगन्धि** भोजनम्। **उपमानाच्च** (V. 4. 137.)—उपमानात्परो यो गन्धशब्दः तस्य इकारस्समासान्तो बहुव्रीहौ ; पद्मस्येव गन्धो यस्य सः **पद्मगन्धिः** । **प्रसंभ्यां जानुनोर्ज्ञुः** (V. 4. 129.)—प्रं सम् इत्याभ्यामुत्तरस्य जानुशब्दस्य ज्ञुरादेशो भवति समासान्तो बहुव्रीहौ ; प्रकृष्टे जानुनी अस्य **प्रज्ञुः** ; **संज्ञुः**। **ऊर्ध्वाद्विभाषा** (V. 4. 130.)—ऊर्ध्वाद्वा ज्ञुः जानुशब्दस्य बहुव्रीहौ ; **ऊर्ध्वज्ञुः, ऊर्ध्वजानुः** । **पादस्य लोपोऽहस्त्यादिभ्यः** (V. 4. 138.)—पादशब्दस्य उपमानवाचकात् हस्त्यादिभिन्नात् परस्य लोपो भवति समासान्तो बहुव्रीहौ। लोपस्य स्थानिद्वारा समासान्तता; व्याघ्रस्येव पादौ यस्य **व्याघ्रपात्**। अहस्त्यादिभ्य इति किम् ? हस्तिपादः, कुसूलपादः । **संख्यासुपूर्वस्य**

(V. 4. 140.)—संख्यापूर्वस्य सुपूर्वस्य च पादशब्दान्तस्य लोपो भवति समासान्तः ; **द्विपात्, सुपात्** । **ककुदस्यावस्थायां लोपः** (V. 4. 146.)—ककुदशब्दान्तस्य बहुव्रीहेः लोपो भवति समासान्तः; **असञ्जातककुत्, पूर्णककुत्, उन्नतककुत्,** इत्यादि । अवस्थायामिति किम्? श्वेतककुदः । **उद्विभ्यां काकुदस्य** (V. 4. 148.)-उत् वि इत्येताभ्यां परस्य काकुदशब्दस्य लोपो भवति बहुव्रीहौ समासे ; **उत्काकुत्, विकाकुत्** । **पूर्णाद्विभाषा** (V. 4. 149.)—पूर्णशब्दात् परस्य लोपो वा ; **पूर्णकाकुत्, पूर्णकाकुदः** ॥

7. **बहुव्रीहौ संख्येये डजबहुगणात्** (V. 4. 73.)—संख्येये यो बहुव्रीहिः तस्मात् अबहुगणान्तात् डच्प्रत्ययो भवति समासान्तः। संख्ययाव्ययेति (II. 2. 25.) विहितस्यात्र ग्रहणम् ; दशानां समीपे ये सन्ति इति विग्रहे, डचि टिलोपे च कृते, **उपदशाः** । आसन्नशब्दस्य विंशतिशब्देन बहुव्रीहौ डचि कृते, **ति विंशतेर्डिति** (VI. 4. 142.) —विंशतेर्भस्य तिशब्दस्य लोपो भवति डिति परतः ; **आसन्नविंशाः** । अबहुगणात् किम्? उपबहवः, उपगणाः । **संख्यायास्तत्पुरुषस्य वाच्यः** (वा. V. 4. 73.); निर्गतानि त्रिंशतः **निस्त्रिंशानि** वर्षाणि देवदत्तस्य । **बहुव्रीहौ सक्थ्यक्ष्णोस्स्वाङ्गात् षच्** (V. 4. 113.) —स्वाङ्गवाचिनौ यौ सक्थ्यक्षिशब्दौ तदन्तात् बहुव्रीहेष्षच् प्रत्ययो भवति । षकारो ङीषर्थः ; दीर्घे सक्थि यस्य **दीर्घसक्थः** ; **विशालाक्षः** । स्त्रियां षिद्गौरादिभ्यश्च इति ङीष् ; **दीर्घसक्थी विशालाक्षी** । स्वाङ्गादिति किम्? दीर्घसक्थि शकटम्, दीर्घाक्षिरिक्षुः । **अङ्गुलेर्दारुणि** (V. 4. 114.)—अङ्गुलिशब्दान्तात् बहुव्रीहेः षच् भवति, दारुणि समासार्थे ; **द्व्यङ्गुलम्** दारु । द्वौ मूर्धानौ

यस्येति विगृह्य पूर्ववत् बहुव्रीहिसमासः; **द्वित्रिभ्यां ष मूर्ध्नः** (V. 4. 115.)—द्वि त्रि इत्येताभ्यां परो यो मूर्धन्शब्दः तदन्तात् बहुव्रीहेः षः प्रत्ययो भवति। नस्तद्धिते इति टिलोपः; **द्विमूर्धः, त्रिमूर्धः**। द्वित्रिभ्यामिति किम्? चतुर्मूर्धा, उच्चैर्मूर्धा। **अप् पूरणीप्रमाण्योः** (V. 4. 116,)—पूरण्यन्तात् प्रमाण्यन्तात् च बहुव्रीहेः अप् प्रत्ययो भवति समासान्तः; कल्याणी पञ्चमी यासान्ता रात्र्यः **कल्याणीपञ्चमाः**; स्त्री प्रमाणी यस्य **स्त्रीप्रमाणः** कुटुम्बी। **अन्तर्बहिर्भ्यांश्च लोम्नः** (V. 4. 117.)—अन्तर् बहिस् इत्याभ्यां परस्य लोमन्शब्दस्य अप् प्रत्ययो भवति समासान्तः; अन्तर्गतानि लोमानि यस्य सः **अन्तर्लोमः** प्रावारः; **बहिर्लोमः**। **नञ्दुस्सुभ्यो हलिसक्थ्योरन्यतरस्याम्** (V.4.121.)—नञ् दुस् सु इत्येतेभ्यः परयोः हलिसक्थिशब्दयोः अच्प्रत्ययो वा भवति; **अहलः, दुर्हलः, सुहलः; असक्थः, दुस्सक्थः, सुसक्थः**। पक्षे—**अहलिः असक्थिः**, इत्यादि।

7. **नित्यमसिच् प्रजामेधयोः** (V. 4. 122.)—नञ्दुस्सुभ्य इत्येव; एभ्यः परौ यौ प्रजा-मेधा-शब्दौ तदन्तात् नित्यमासिच् प्रत्ययो भवति; **अप्रजाः, दुष्प्रजाः, सुप्रजाः**, ब्राह्मणः; **अमेधाः, दुर्मेधाः, सुमेधाः**, शिष्यः। नित्यग्रहणादन्यत्रापि—

श्रोत्रियस्येव ते राजन् मन्दकस्याल्पमेधसः।
अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी॥

**धर्मादनिच् केवलात्** (V. 4. 124.)—केवलात् यो धर्मशब्दः तदन्तात् बहुव्रीहेरनिच्; **सुधर्मा, कल्याणधर्मा**। केवलादिति किम्? परमस्वधर्मः। **इच् कर्मव्यतिहारे** (V. 4. 127.)—कर्मव्यतिहारे

यो बहुव्रीहिः तस्मात् इच् समासान्तः; **केशाकेशि**। अत्र इचि कृते केशकेशि इति जाते, **अन्येषामपि दृश्यते** (VI. 3. 137.)—इचि कर्मव्यतिहारे बहुव्रीहौ शिष्टप्रयोगात् दीर्घोऽनुगन्तव्यः; यस्य दीर्घो न विहितः दृश्यते च प्रयोगे तदनेन कर्तव्यम्। तिष्ठद्गुप्रभृतिषु इजन्तस्य पाठात् अव्ययत्वम्। अनेनैव अन्यत्रापि दीर्घः; **पूरुषः**। अथ द्वन्द्वे वाक् च त्वक् च, समिच्च दृषच्च, इति विग्रहे, चार्थे द्वन्द्वः इति समाहारद्वन्द्वे कृते, **द्वन्द्वाच्चुदषहान्तात् समाहारे** (V. 4. 106.)—द्वन्द्वाच्चवर्गान्तात् दकारान्तात् षकारान्तात् हकारान्ताच्च समाहारे षच् प्रत्ययो भवति, स चेत् द्वन्द्वस्समाहारे वर्तते नेतरेतरयोगे; **वाक्त्वचम्, समिद्दृषदम्, वाग्विप्रुषम्, छत्रोपानहम्**। समाहार इति किम्? प्रावृट्शरदौ॥

## इति समासान्ताः॥



## अथ अलुगादिसमासाश्रयविधयः॥

1. क्वचित्समासे विभक्तयश्श्रूयन्ते, पूर्वोत्तरपदयोः रूपविशेषाश्च। तत्र समासो वा असमासो वेति सन्देह उपजायते। अतस्तन्निवृत्त्यर्थमलुगधिकारः प्रथमं प्रदर्श्यते। सुपो धातुप्रातिपदिकयोः इति समासावयवस्य सुपो लुकि प्राप्ते, तस्यायं प्रतिषेध आरभ्यते। **अलुगुत्तरपदे** (VI. 3. 1.)—अलुगिति च उत्तरपदे इति च द्वयमपि अधिक्रियते; यानित ऊर्ध्वमनुक्रमिष्यामस्तत्रालुगुत्तरपदे इति वेदितव्यम्। अलुगधिकारः प्रागानङः; उत्तरपदाधिकारः प्रागङ्गाधिकारात्। **स्तोकाल्पकृच्छ्र-**

**कतिपयस्यासत्त्ववचनस्य** (II. 3. 33.)—स्तोक अल्प कृच्छ्र कतिपय इत्येतेभ्योऽसत्त्ववचनेभ्यः करणे कारके पञ्चमी विभक्तिर्भवति। **दूरान्तिकार्थेभ्यो द्वितीया च** (II. 3. 34.)—दूरान्तिकार्थेभ्यश्शब्देभ्यो द्वितीया विभक्तिर्भवत्यन्यतरस्याम्; चकारात्पञ्चमी च। **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन** (II. 1. 39.) इति पञ्चमीसमासात् सुपो लुकि प्राप्ते, **पञ्चम्याः स्तोकादिभ्यः** (VI.3.2.)—एभ्यश्शब्देभ्य उत्तरस्याः पञ्चम्या अलुक् भवति उत्तरपदे परतः; **स्तोकान्मुक्तः, अल्पान्मुक्तः, अन्तिकादागतः, दूरादागतः, कृच्छ्रान्मुक्तः**। उत्तरपदे इति किम्? निष्क्रान्तः स्तोकात् निस्स्तोकः॥

2. ओजस्+कृतम्, सहस्+कृतम्, इति स्थिते, कर्तृकरणयोस्तृतीयेति तृतीया विभक्तिर्भवति। कर्तृकरणे कृता बहुळमिति समासः। इति तृतीयासमासे **ओजस्सहोऽम्भस्तमसस्तृतीयायाः** (VI. 3. 3.)—ओजस् सहस् अम्भस् तमस् इत्येतेभ्य उत्तरस्याः तृतीयायाः अलुक् भवति उत्तरपदे परतः; **ओजसाकृतम्, सहसाकृतम्, अम्भसाकृतम्, तमसाकृतम्**। **अञ्जस उपसंख्यानम्** (वा)—इति **अञ्जसाकृतम्**। **पुंसानुजो जनुषान्ध इति वक्तव्यम्**। मनस्+गुप्ता, मनस्+सङ्गता, इति स्थिते, पूर्ववत् तृतीयासमासः। लुकि प्राप्ते, **मनसस्संज्ञायाम्** ( VI. 3. 4. )—मनस्-शब्दात् परस्यास्तृतीयायाः अलुक् भवति उत्तरपदे परतः संज्ञायां गम्यमानायाम्; **मनसागुप्ता, मनसासङ्गता**। संज्ञायामिति किम्? मनोदत्ता कन्या। ज्ञा अवबोधने; मनसा आज्ञातुं शीलमस्येति विग्रहे, पूर्ववत् तृतीयासमासः। ततो लुकि प्राप्ते, **आज्ञायिनि च** (VI. 3.

5.)—आज्ञायिन्शब्दे उत्तरपदे मनश्शब्दात् परस्यास्तृतीयाया अलुक् भवति ; **मनसाज्ञायी** । आत्मन्+पञ्चमः, आत्मन्+षष्ठः, इति स्थिते, प्रकृत्यादित्वात्तृतीया । तृतीयेति योगविभागात् समासः । लुकि प्राप्ते, **आत्मनश्च पूरणे** (VI. 3. 6.)—पूरणप्रत्ययान्ते उत्तरपदे परतः आत्मनस्तृतीयाया अलुक् भवति ; **आत्मनापञ्चमः, आत्मनाषष्ठः** । आत्मन्+पदम्, आत्मन्+भाषा, इति स्थिते, तादर्थ्ये चतुर्थी ; चतुर्थीति योगविभागाच्चतुर्थीसमासः । ततो लुकि प्राप्ते, **वैयाकरणाख्यायां चतुर्थ्याः** (VI.3.7.)—वैयाकरणानामाख्या वैयाकरणाख्या संज्ञा; यया संज्ञया वैयाकरणा एव व्यवहरन्ति तस्यां गम्यमानायाम् आत्मन्शब्दात् परस्याश्चतुर्थ्या अलुक् भवति, उत्तरपदे परतः ; **आत्मनेपदम्, आत्मनेभाषा** । पर+पदम्, पर+भाषा, इत्यत्र पूर्ववच्चतुर्थी ; चतुर्थीति योगविभागात् समासश्च । ततो लुकि प्राप्ते, **परस्य च** (VI. 3. 8.)—परशब्दस्य च या चतुर्थी तस्यां वैयाकरणाख्यायां गम्यमानायाम् अलुक्, उत्तरपदे परतः ; **परस्मैपदम्, परस्मैभाषा** ॥

3. गवि+स्थिरः, युधि+स्थिरः, त्वचि+सारः, अरण्ये+तिलकाः, अरण्ये+माषकाः, इति स्थिते, **संज्ञायाम्** (II. 1. 44.)—संज्ञायां विषये सप्तम्यन्तं सुबन्तं समर्थं सुबन्तोत्तरपदेन सह नित्यं समस्यते, स समासस्तत्पुरुषसंज्ञकश्च भवति । विभाषाधिकारेऽपि नित्यसमास एवायम् । नहि वाक्येन संज्ञा गम्यते । ततो लुकि प्राप्ते, **हलदन्तात् सप्तम्याः संज्ञायाम्** (VI. 3. 9.)—हलन्तात् अदन्ताच्च परस्यास्सप्तम्याः अलुक्, उत्तरपदे परतः, संज्ञायां गम्यमानायाम् । **गवियुधिभ्यां स्थिरः** (VIII. 3. 95.)—गवि युधि इत्येताभ्यामुत्तरस्य स्थिरसकारस्य मूर्धन्यादेशो

भवति । ष्टुत्वम्; **गविष्ठिरः, युधिष्ठिरः** । अत्र गवीति वचनात् अलुक् । हृदि+स्पृक्, दिवि+स्पृक्, इति स्थिते, उपपदसमासः । ततो लुकि प्राप्ते, **हृद्द्युभ्याङ्डेः** (वा) इत्यलुक्; **हृदिस्पृक्** । मध्ये +गुरुः इति स्थिते, सप्तमी (II. 1. 40.) इति योगविभागात् समासः । ततो लुकि प्राप्ते, **मध्याद्गुरौ** (VI. 3. 11.)—मध्यशब्दात् परस्यास्सप्तम्याः अलुक्, गुरुशब्दे उत्तरपदे परतः; **मध्येगुरुः । अन्ताच्चेति वक्तव्यम्** (वा)–इति **अन्तेगुरुः** । कण्ठे स्थितः कालो यस्येति विगृह्य सप्तम्युपमानपदस्येति बहुव्रीहिः; स्थितशब्दलोपः । ततो लुकि प्राप्ते, **अमूर्धमस्तकात् स्वाङ्गादकामे** (VI. 3 12.)—मूर्धमस्तकवर्जितात् स्वाङ्गवाचिनः शब्दात् परस्यास्सप्तम्याः अलुक्, अकामशब्दे उत्तरपदे; **कण्ठेकालः, उदरेमणिः, उरसिलोमा** । अमूर्धमस्तकादिति किम्? मूर्धनि शिखा यस्य स **मूर्धशिखः** । अत्र—न ङिसम्बुद्ध्योः—इति नकारलोपनिषेधे प्राप्ते, **ङावुत्तरपदे प्रतिषेधो वक्तव्यः** (वा.) इति नकारलोपः । अकाम इति किम्? मुखे कामो यस्य सः मुखकामः । उत्तरपद इति किम्? गडुकण्ठः ॥

4. **हस्तेबन्धः, हस्तबन्धः; चक्रेबन्धः चक्रबन्धः**; इत्यत्र—सिद्धशुष्कपक्वबन्धैश्च (II. 1. 41.) इति सप्तमीसमासः; ततो लुकि प्राप्ते, **बन्धे विभाषा** (VI. 3. 13.)—बन्धशब्दे उत्तरपदे सप्तम्या विभाषा अलुक् । स्तम्बे रमत इति कर्णे जपतीति च विग्रहे उपपदसमासः । ततो लुकि प्राप्ते, **तत्पुरुषे कृति बहुळम्** (VI. 3. 14.)—तत्पुरुषे समासे कृदन्त उत्तरपदे सप्तम्या बहुळमलुग्भवति; **स्तम्बेरमो** हस्ती, **कर्णेजपः** सूचकः । बहुळग्रहणात् क्वचिन्न—**कुरुचरः मद्रचरः**; क्वचि-

द्विभाषा—**वनेचरः, वनचरः**। **विभाषा वर्षक्षरशरवरात्** (VI. 3. 16.)—वर्ष क्षर शर वर इत्येतेभ्य उत्तरस्याः सप्तम्याः जे उत्तरपदे विभाषा अलुक्; **वर्षेजः, वर्षजः**; इत्यादि। **घकालतनेषु कालनाम्नः** (VI. 3. 17.)—घसंज्ञके प्रत्यये कालशब्दे तनप्रत्यये च परतः कालनाम्न उत्तरस्याः सप्तम्या विभाषा अलुक्। तरप्तमपौ घः (I. 1. 22.); **पूर्वाह्णेतरे, पूर्वाह्णेतमे, पूर्वाह्णेकाले, पूर्वाह्णेतने**। पक्षे–**पूर्वाह्णतरे** इत्यादि। **ग्रामेवासः ग्रामवासः, ग्रामेवासी ग्रामवासी, खेशयः खशयः**, इत्यत्र लुकि प्राप्ते, **शयवासवासिष्वकालात्** (VI. 3. 18.)—शयादिषूत्तरपदेषु परतः अकालवाचिनः परस्यास्सप्तम्या विभाषा अलुक्। अकालादिति किम्? पूर्वाह्णशयः। हलदन्तादित्येव; भूमिशयः। **नेन्सिद्धबध्नातिषु च** (VI. 3. 19.)—इनन्तादिषु उत्तरपदेषु सप्तम्याः अलुक् न भवति; **स्थण्डिलशायी, साङ्काश्यसिद्धः, चक्रबद्धः**। **स्थे च भाषायाम्** (VI. 3. 20.)—स्थे च परतः सप्तम्या अलुक् न भवति भाषायाम्; **कूटस्थः**॥

5. चोरस्य कुलम्, वृषलस्य कुलम्, इति विग्रहे षष्ठीसमासः; ततो लुकि प्राप्ते, **षष्ठ्या आक्रोशे** (VI. 3. 21.)—आक्रोशे गम्यमाने उत्तरपदे षष्ठ्याः अलुक्। आक्रोशो निन्दा; **चोरस्यकुलम्, वृषलस्यकुलम्**। आक्रोशे इति किम्? ब्राह्मणकुलम्। **षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासंख्यमलुग्वक्तव्यः** (वा)—इति **वाचोयुक्तिः, दिशोदण्डः, पश्यतोहरः**। **आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति चालुग्वक्तव्यः** (वा)—इति अमुष्य अपत्यम् **आमुष्यायणः**, अमुष्य पुत्रस्य भावः **आमुष्यपुत्रिका**, अमुष्य कुल-

स्य भावः **आमुष्यकुलिका**। **देवानाम्प्रिय** इति च षष्ठ्या अलुग्वक्तव्यः (वा)। **शेफपुच्छलाङ्गूलेषु शुनस्संज्ञायामलुग्वक्तव्यः** (वा)–इति **शुनश्शेफः, शुनःपुच्छः, शुनोलाङ्गूलः**। दास्याः पुत्र इत्यत्रापि समासे लुकि प्राप्ते, **पुत्रेऽन्यतरस्याम्** (VI. 3. 22.)–पुत्रशब्दे उत्तरपदे, आक्रोशे गम्यमाने, अन्यतरस्यां षष्ठ्याः अलुक्; **दास्याःपुत्रः, दासीपुत्रः**। आक्रोशे इति किम्? ब्राह्मणीपुत्रः। **होतुःपुत्रः, होतुरन्तेवासी, भ्रातुःपुत्रः, भ्रातुरन्तेवासी**, इत्यत्र षष्ठीसमासे लुकि प्राप्ते, **ऋतो विद्यायोनिसम्बन्धेभ्यः** (VI. 3. 23.)––ऋकारान्तेभ्यो विद्यायोनिसम्बन्धवाचिभ्यः परस्याः षष्ठ्याः अलुक्। ऋत इति किम्? आचार्यपुत्रः। विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणं वक्तव्यम्; तस्मान्नेह—पितृगृहम्, होतृधनम्। **विभाषा स्वसृपत्योः** (VI. 3. 24.)—स्वसृ पति इत्येतयोरुत्तरपदयोः ऋकारान्तेभ्य उत्तरस्याः षष्ठ्या विभाषा अलुक्। यदा तु लुक् तदा, **मातृपितृभ्यां स्वसा** (VIII. 3. 84)—मातृ पितृ इत्येताभ्यामुत्तरस्य स्वसृसकारस्य मूर्धन्यादेशो भवति; **मातृष्वसा, पितृष्वसा**। यदा त्वलुक् तदा, **मातुःपितुर्भ्यामन्यतरस्याम्** (VIII. 3. 85.)—मातुः पितुः इत्येताभ्यामुत्तरस्य स्वसृसकारस्य मूर्धन्यादेशो वा भवति; **मातुःष्वसा, पितुःष्वसा**। पक्षे—**मातुःस्वसा, पितुःस्वसा** एवं **दुहितुःपतिः, दुहितृपतिः**॥

6. होतृ+पोतृ, नेष्टृ+उद्गातृ, प्रशास्तृ+प्रतिहर्तृ, मातृ+पितृ, स्वसृ+दुहितृ, यातृ+ननान्दृ, इति स्थिते, कृतद्वन्द्वानामपनीतसुपाम्, **आनङृतो द्वन्द्वे** (VI. 3. 25.)—अलुगधिकारो निवृत्तः; उत्तरपदे इति वर्तते;

ऋकारान्तानां विद्यायोनिसम्बन्धवाचिनाञ्च यो द्वन्द्वः तत्रोत्तरपदे पूर्वपदस्य आनङादेशो भवति। अप्तृन्तृजित्यादिना (VI. 4. 11.) दीर्घः; **होतापोतारौ, नेष्टोद्गातारौ, प्रशास्ताप्रतिहर्तारौ, मातापितरौ, स्वसादुहितरौ, याताननान्दरौ**। ऋत इति किम्? पितृपितामहौ। पुत्रेऽन्यतरस्याम् (VI. 3. 22.) इत्यतः मण्डूकप्लुत्या पुत्र इत्यनुवृत्त्या, पुत्रशब्देऽप्युत्तरपदे ऋकारान्तस्य आनङादेशो भवति; **पितापुत्रौ, मातापुत्रौ**। इन्द्र+वरुण, इन्द्र+सोम, इन्द्र+बृहस्पति, इन्द्र+पूषन्, सूर्य+चन्द्रमस्, इत्यत्रापि कृतद्वन्द्वानामपनीतसुपां, **देवताद्वन्द्वे च** (VI. 3. 26.)—देवतावाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्य आनङादेशो भवति; **इन्द्रावरुणौ, इन्द्रासोमौ, इन्द्राबृहस्पती, इन्द्रापूषणौ, सूर्याचन्द्रमसौ**। द्वन्द्व इति वर्तमाने पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहणार्थम्: तेन **ब्रह्मप्रजापती शिववैश्रवणौ** इत्यादौ न भवति। अग्नि+वायु, वायु+अग्नि, इत्यत्र, देवताद्वन्द्वे च इत्यनेन आनङादेशे प्राप्ते, **उभयत्र वायोः प्रतिषेधो वक्तव्यः** (वा)—इति **अग्निवायू, वाय्वग्नी**। अग्नि+सोम, अग्नि+वरुण, इति स्थिते, कृतद्वन्द्वयोरपनीतसुपोः, **ईदग्नेस्सोमवरुणयोः** (VI .3. 27.)—सोमवरुणयोरुत्तरपदयोरग्नेरीकारादेशो भवति। आनङोऽपवादः। **अग्नेस्स्तुत्स्तोमसोमाः** (VIII. 3. 82.)—अग्निशब्दादुत्तरेषां स्तुत् स्तोम सोम इत्येतेषां सकारस्य मूर्धन्यादेशो भवति। इति **अग्नीषोमौ, अग्नीवरुणौ**॥

7. **घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः** (VI. 3. 43.)–घ रूप कल्प चेलट् ब्रुव गोत्र मत हत इत्येतेषु परतः भाषितपुंस्कात् परो यो ङीप्रत्ययः तदन्तस्य अनेकाचो ह्रस्वो भवति।

घे-**ब्राह्मणितरा, ब्राह्मणितमा** ; रूपे-**वृषलिरूपा**; कल्पे-**ब्राह्मणिकल्पा**। घरूपकल्पाः प्रत्ययाः ; चेलडादीनि उत्तरपदानि वृत्तिविषये कुत्सावाचीनि ; चेलडादौ-**ब्राह्मणिचेली, ब्राह्मणिब्रुवा**, इत्यादि। अनेकाच इति किम्? स्त्रीतरा। **नद्याश्शेषस्यान्यतरस्याम्** (VI. 3. 44.)—नद्याः शेषस्य घादिषु परतः ह्रस्वो वा भवति। कश्च शेषः? अङी च या नदी ङ्यन्तं च यदेकाच् स शेषः; **ब्रह्मबन्धूतरा ब्रह्मबन्धुतरा, स्त्रीतरा स्त्रितरा**। **कृन्नद्याः प्रतिषेधो वक्तव्यः** (वा.)—इति **लक्ष्मीतरा**। **उगितश्च** (VI. 3. 45.)—उगितश्च परस्याः नद्याः घादिषु ह्रस्वो वा भवति; **श्रेयसितरा, श्रेयसीतरा; विदुषितरा, विदुषीतरा**; इत्यादि। **द्व्यष्टनस्संख्यायामबहुव्रीह्यशीत्योः** (VI. 3. 47.)—द्वि अष्टन् इत्येतयोः आकारः अन्तादेशो भवति संख्यायाम् उत्तरपदे परतः अबहुव्रीह्यशीत्योः; **द्वादश, अष्टाविंशतिः**, इत्यादि। अबहुव्रीह्यशीत्योरिति किम्; **द्वित्राः, अष्टनवाः, द्व्यशीतिः**। **त्रेस्त्रयः** (VI. 3. 48.)—त्रि इत्येतस्य त्रयस् इत्ययमादेशो भवति संख्यायामबहुव्रीह्यशीत्योः; **त्रयोविंशतिः**। नेह-**त्रिचतुराः, त्र्यशीतिः**। उभयोरपि योगयोः प्राक् शतादेव प्रवृत्तिः; अतः **द्विशतम्, अष्टशतम्, त्रिशतम्**, इत्यादि॥

8. **इको ह्रस्वोऽङ्यो गालवस्य** (VI. 3. 61.)—इगन्तस्य अङ्यन्तस्य उत्तरपदे परतः ह्रस्वो भवति गालवाचार्यमतेन ; **ग्रामणिपुत्रः, ग्रामणीपुत्रः; श्वश्रुसुतः, श्वश्रूसुतः**। इक इति किम्? रमापतिः। अङ्य इति किम्? गार्गीपुत्रः। **इयङुवङ्भाविनामव्ययानाञ्च न भवतीति वक्तव्यम्** (वा)—इति **श्रीमदः**,

भ्रूभङ्गः, **वृषलीभूतम्**। भ्रूकुंसादीनान्तु वा भवत्येव; **भ्रुकुंसः** भ्रूकुंसः, भ्रुकुटिः भ्रूकुटिः। **भ्रूकुंसादीनामकारो भवतीति वक्तव्यम्** (वा.)—इति वा **भ्रकुंसः भ्रकुटिः** इति च भवतः। **एक तद्धिते च** (VI. 3. 62.)—एकशब्दस्य तद्धिते परतश्च ह्रस्वो भवति। इति—एकस्याः आगतम् **एकरूप्यम्**, एकस्याः क्षीरम् **एकक्षीरम्**। **ङ्यापोस्संज्ञाछन्दसोर्बहुलम्** (VI. 3. 63.)—ङ्यन्तस्य आबन्तस्य च बहुलं ह्रस्वो भवति संज्ञायां छन्दसि च; **रेवतिपुत्रः, कालिदासः, अजक्षीरम्**, इत्यादि। **इष्टकेषिकामालानाञ्चिततूलभारिषु** (VI. 3. 65.)—इष्टकादीनां यथासंख्यं चितादिषु परतः ह्रस्वो भवति; **इष्टकचितम्, इषीकतूलम्, मालभारी**। **पदाङ्गाधिकारे तस्य तदन्तस्य च** (परि. 29.)—इति तदन्तस्यापि ग्रहणं भवति; **पक्वेष्टकचितम्**॥

9. **हृदयस्य हृल्लेखयदण्लासेषु** (VI. 3. 50.)—हृदयस्य हृद् इत्ययमादेशो भवति लेखादिषु परतः; **हृल्लेखः, हृद्यम्, हार्दम्, हृल्लासः**। **वा शोकष्यञ्रोगेषु** (VI. 3. 51.)—शोकादिषु परतः वा हृदादेशो भवति; **हृदयशोकः हृच्छोकः, सौहार्द्यम् सौहृदय्यम्, हृदयरोगः हृद्रोगः**। **पादस्य पदाज्यातिगोपहतेषु** (VI. 3. 52.)—पादस्य पद इत्ययमादेशो भवति आजि आति ग उपहत इत्येतेषु उत्तरपदेषु परतः; **पदाजिः, पदातिः, पदगः, पदोपहतः**। **पद्यत्यतदर्थे** (VI. 3. 53.)—यत्प्रत्यये परतः पादस्य पद् इत्यादेशो भवति अतदर्थे। पादौ विध्यन्ति इति **पद्याः** कण्टकाः। अतदर्थे इति किम्? पादार्थमुदकं **पाद्यम्**। **हिमकाषिहतिषु च** (VI. 3. 54.)—हिम काषिन् हति इत्येतेषु परतः पादस्य पद्

इत्यादेशो भवति; **पद्धिमम्, पत्काषी, पद्धतिः।** **उदकस्योदस्संज्ञायाम्** (VI. 3. 57.)—उदकशब्दस्य उद इत्ययमादेशो भवति उत्तरपदे परतः संज्ञायां विषये। इति—**उदमेघः**; तत्पुत्रः—**औदमेघिः।** संज्ञायामिति किम्? उदकगिरिः। **संज्ञायामुत्तरपदस्य उदकशब्दस्य उदादेशो भवतीति वक्तव्यम्** (वा.)—इति **लोहितोदः, नीलोदः, क्षीरोदः,** इत्यादि। **पेषंवासवाहनधिषु च** (VI. 3. 58.)—पेषम् इत्यादिषु परतः उदकस्य उद इत्यादेशो भवति; **उदपेषं** पिनष्टि, **उदवासः, उदवाहनः, उदधिः।** **एकहलादौ पूरयितव्येऽन्यतरस्याम्** (VI. 3. 59.)—एकः असहायः हल् आदिर्यस्योत्तरपदस्य तदेकहलादि; तस्मिन्नेकहलादौ पूरयितव्यवाचिनि परतः उदकस्य उद इत्यादेशो वा भवति; **उदकुम्भः उदककुम्भः,** इत्यादि। एकहलादाविति किम्? उदकस्थाली। पूरयितव्य इति किम्? उदकपर्वतः। **मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च** (VI. 3. 60.)—मन्थादिषु उत्तरपदेषु उदकस्य उद इत्यादेशो वा भवति; **उदकमन्थः उदमन्थः,** इत्यादि॥

10. **अरुर्द्विषदजन्तस्य मुम्** (VI. 3. 67.)—अरुस् द्विषत् इत्येतयोरजन्तानां च खिदन्त उत्तरपदे मुमागमो भवति अनव्ययस्य; **अरुंतुदः, द्विषंतपः, कालिमन्या।** अनव्ययस्येत्येव—**दोषामन्यम्** अहः, **दिवामन्या** रात्रिः। **इच एकाचोऽम्प्रत्ययवच्च** (VI. 3. 68.)—इजन्तस्य एकाचः खिदन्त उत्तरपदे अमागमो भवति, द्वितीयैकवचनवच्च स भवति; **गांमन्यः, स्त्रींमन्यः, नरंमन्यः, श्रियंमन्यः, भ्रुवंमन्यः।** अत्र अम्प्रत्ययवच्चेत्यतिदेशात् आत्वपूर्वसवर्णगुणेयङुवङादेशाः। **वाचंयमपुरंदरौ च** (VI. 3.

69.)—वाचंयम पुरंदर इत्येतौ निपात्येते । **कारे सत्यागदस्य** (VI. 3. 70.)—कारशब्दे उत्तरपदे सत्य अगद इत्येतयोः मुमागमो भवति ; **सत्यंकारः, अगदंकारः** । **अस्तुसत्यागदस्य कार इति वक्तव्यम्** (वा.)—इति **अस्तुंकारः**। **धेनोर्भव्यायां मुम् वक्तव्यः** (वा.)—इति **धेनुंभव्या** । **लोकस्य पृणे** (वा.)—इति **लोकंपृणः** । **इत्येऽनभ्याशस्य** (वा.)—इति **अनभ्याशमित्यः** यो दूरतः परिहर्तव्यः । **भ्राष्ट्राग्न्योरिन्धे** (वा.) इति **भ्राष्ट्रमिन्धः, अग्निमिन्धः**। **गिलेऽगिलस्य** (वा.)—इति **तिमिङ्गिलः** । **गिलगिले च** (वा.)—इति **तिमिङ्गिलगिलः**। **उष्णभद्रयोः करणे** (वा.)—इति **उष्णङ्करणम्, भद्रंकरणम्** । **रात्रेः कृति विभाषा** (VI. 3. 72.)—रात्रेः कृदन्ते उत्तरपदे वा मुमागमो भवति ; **रात्रिंचरः, रात्रिचरः** ॥

11. **ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु** (VI. 3. 85.)—एषु उत्तरपदेषु समानस्य सः स्यात् ; **सज्योतिः, सबन्धुः**, इत्यादि । **चरणे ब्रह्मचारिणि** (VI. 3. 86.)—चरणः शाखा ; चरणे गम्यमाने ब्रह्मचारिण्युत्तरपदे समानस्य सः स्यात् । समाने ब्रह्मणि व्रतचारी **सब्रह्मचारी** । **तीर्थे ये** (VI. 3. 87.)—तीर्थशब्दे उत्तरपदे यत्प्रत्ययपरे परतः समानस्य सः स्यात् । समाने तीर्थे वासी **सतीर्थ्यः** य एकगुरुकः । **विभाषोदरे** (VI. 3. 88.)—उदरशब्दे उत्तरपदे समानस्य वा सः स्यात् यत्प्रत्यये विवक्षिते ; **सोदर्यः, समानोदर्यः** । **दृग्दृशवतुषु** (VI. 3. 89.)—दृग्दृशोः परतः समानस्य सादेशो भवति ; **सदृक्, सदृशः** । **दृक्षे चेति वक्तव्यम्** (वा.)—इति **सदृक्षः** । वतुरुत्तरार्थः । **इदम्-**

**किमोरीश्की** (VI. 3. 90.)—दृग्दृशवतुषु इदम् किम् इत्येतयोः ईश् की इत्येतौ यथासंख्यं भवतः ; **ईदृक्, ईदृशः, इयान्, कीदृक्, कीदृशः, कियान्** । **दृक्षे चेति वक्तव्यम्** (वा.)—इति **ईदृक्षः, कीदृक्षः** । **आ सर्वनाम्नः** (VI. 3. 91.)—सर्वनाम्नः आकारः अन्तादेशो भवति दृग्दृशवतुषु ; **तादृक्, तादृशः, तावान्** । **दृक्षे च** (वा.)—इति **तादृक्षः** ॥

12. **समासेऽङ्गुलेस्सङ्गः** (VIII. 3. 80.)—अङ्गुलिशब्दात्परस्य सङ्गसकारस्य मूर्धन्यादेशो भवति ; अङ्गुलेस्सङ्गः **अङ्गुलिषङ्गः** । **ज्योतिरायुषस्स्तोमः** (VIII. 3. 83.)—ज्योतिस् आयुस् इत्येताभ्यामुत्तरस्य स्तोमसकारस्य समासे मूर्धन्यादेशो भवति ; **ज्योतिष्टोमः, आयुष्टोमः** । **अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु** (VI. 3. 99.)—अषष्ठीस्थस्य अतृतीयास्थस्य अन्यशब्दस्य दुगागमः स्यात् आशीरादिषु परेषु समासे ; **अन्यदाशीः, अन्यदाशा, अन्यदास्था, अन्यदास्थितः, अन्यदुत्सुकः, अन्यदूतिः, अन्यत्कारकः, अन्यद्रागः, अन्यदीयः** ।

दुगागमोऽविशेषेण वक्तव्यः कारकच्छयोः ।
षष्ठीतृतीययोर्नेष्टः आशीरादिषु सप्तसु ॥

**अर्थे विभाषा** (VI. 3. 100.)—अर्थशब्दे उत्तरपदे अन्यस्य विभाषा दुगागमो भवति; **अन्यदर्थः अन्यार्थः** । **कोः कत्तत्पुरुषेऽचि** (VI. 3. 101.)—कु इत्येतस्य कत् इत्ययमादेशो भवति तत्पुरुषे समासे अजादौ परतः ; **कदजः, कदश्वः, कदन्नम्**, इत्यादि । तत्पुरुषे इति किम् ? कूष्ट्रो राजा । **कद्भावे त्रावुपसं-**

**ख्यानम्** (वा)—इति कुत्सिताः त्रयः **कत्त्रयः** । **रथवदयोश्च** (VI. 3. 102.)—रथ वद इत्येतयोश्च उत्तरपदयोः परतः कोः कदादेशो भवति ; **कद्रथः, कद्वदः** । **का पथ्यक्षयोः** (VI. 3. 104.)—पथिन् अक्ष इत्येतयोरुत्तरपदयोः कोः का इत्यादेशो भवति ; **कापथः, काक्षः** । **ईषदर्थे** (VI. 3. 105.)— ईषदर्थे वर्तमानस्य कोः का इत्ययमादेशो भवति ; **कामधुरम्** । अजादावपि परत्वात् कादेश एव भवति ; **काम्लः** । **विभाषा पुरुषे** (VI. 3. 106.)—पुरुषशब्दे उत्तरपदे विभाषा कोः का इत्यादेशो भवति ; **कापुरुषः कुपुरुषः** । ईषदर्थे तु कापुरुष एव । **कवञ्चोष्णे** (VI. 3. 107.)—उष्णशब्दे उत्तरपदे कोः कवादेशो वा भवति ; चकारात् का इति विभाषा ; **कवोष्णम् कोष्णम्** । पक्षे–**कदुष्णम्** । **पृषोदरादीनि यथोपदिष्टम्** (VI.3.109.)-पृषोदरादीनि शब्दरूपाणि, येषु लोपागमवर्णविकाराः शास्त्रेण न विहिताः, दृश्यन्ते च, तानि यथोपदिष्टानि साधूनि भवन्ति । पृषतः उदरम् **पृषोदरम्** ; वारिवाहको **बलाहकः** ; जीवनस्य मूतः **जीमूतः** ; मह्यां रौतीति **मयूरः** ; इत्यादि ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

13. **संहितायाम्** (VI.3.114.) इत्यनुवर्तमाने, **कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वास्तिकस्य** (VI. 3. 115.)—कर्णशब्दे उत्तरपदे लक्षणवाचिनो दीर्घो भवति विष्टादीनि वर्जयित्वा ; **द्विगुणाकर्णः** । यत् पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं दात्राकारादि क्रियते तत् इह लक्षणं गृह्यते ; **दात्राकर्णः** ।

लक्षणस्येति किम्? शोभनकर्णः। अविष्टेत्यादि किम्? विष्टकर्णः, स्वस्तिककर्णः। **नहि-वृति-वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ** (VI. 3. 106.)—क्विबन्तेषु एषु उत्तरपदेषु परतः पूर्वपदस्य दीर्घो भवति; **उपानत्, नीवृत्, प्रावृट्, मर्मावित्, अभीरुक्, ऋतीषट्, परीतत्। वनगिर्योस्संज्ञायां कोटरकिंशुलकादीनाम्** (VI. 3. 117.)—वन गिरि इत्येतयोरुत्तरपदयोर्यथासंख्यं कोटरादीनां किंशुलकादीनां च दीर्घो भवति संज्ञायाम्; **कोटरावणम्, मिश्रकावणम्, किंशुलकागिरिः, अञ्जनागिरिः। वले** (VI. 3. 118.)—वले परतः पूर्वस्य दीर्घो भवति ; **कृषीवलः, दन्तावलः। मतौ बह्वचोऽनजिरादीनाम्** (VI. 3. 119.)—मतुपि परतः अजिरादिभिन्नस्य बह्वचः दीर्घो भवति संज्ञायाम्; **उदुम्बरावती, अमरावती।** अनजिरादीति किम्? अजिरवती, पुलिनवती। **शरादीनाञ्च** (VI. 3. 120.)—शरादीनां च एवमेव दीर्घो भवति ; **शरावती, हनूमान्। उपसर्गस्य घञ्यमनुष्ये बहुलम्** (VI. 3. 122.)—उपसर्गस्य घञन्ते उत्तरपदे अमनुष्ये वाच्ये बहुलं दीर्घो भवति ; **परिवाहः परीवाहः, अधिकारः अधीकारः।** अमनुष्ये इति किम्? निषादः। **इकः काशे** (VI. 3. 123.)—इगन्तस्य उपसर्गस्य दीर्घस्स्यात् काशे परतः; **प्रतीकाशः, नीकाशः।** इकः किम्? प्रकाशः। **अष्टनः संज्ञायाम्** (VI. 3. 125.)—अष्टन्शब्दस्य उत्तरपदे परतः संज्ञायां दीर्घो भवति; **अष्टावक्रः, अष्टापदम्। विश्वस्य वसुराटोः** (VI. 3. 128.)—वसु राट् इत्येतयोः उत्तरपदयोः परतः विश्वशब्दस्य दीर्घो भवति; **विश्वावसुः, विश्वाराट्। नरे संज्ञायाम्** (VI. 3. 129.)—विश्वशब्दस्य दीर्घो भवति संज्ञायां नरे परतः;

**विश्वानरः ।** **मित्रे चर्षौ** (VI. 3. 130.)—ऋषौ गम्यमाने विश्वस्य मित्रे परतः दीर्घो भवति; **विश्वामित्रः** । ऋषौ किम्? विश्वमित्रो माणवकः ॥

14. **सर्वस्य द्वे** (VIII. 1. 1.) इत्यधिकृत्य, **नित्यवीप्सयोः** (VIII. 1. 4.)—नित्ये चार्थे वीप्सायां च यद्वर्तते तस्य द्वे भवतः । आभीक्ष्ण्यमिह नित्यता; यां क्रियां कर्ता प्राधान्येन अनुपरमन् करोति तत् नित्यम्; नानावाचिनां क्रियागुणाभ्यां युगपद्व्याप्तुमिच्छा वीप्सा । नित्यार्थे—**पचतिपचति, भुक्त्वाभुक्त्वा** व्रजति; वीप्सायाम्—**ग्रामोग्रामो** रमणीयः, **पुरुषःपुरुषो** निधनमुपैति । **उपर्यध्यधसस्सामीप्ये** (VIII. 1. 7.)—उपरि अधि अधस् इत्येतेषां द्वे भवतः सामीप्ये विवक्षिते; सामीप्यं प्रत्यासत्तिः कालकृता देशकृता च; **उपर्युपरि** सुखम्, **अध्यधि** ग्रामम्, **अधोधो** नगरम् । **वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु** (VIII. 1. 8.)—एकार्थः पदसमूहो वाक्यम्; वाक्यादेः आमन्त्रितस्य द्वे भवतः, असूयादिषु यदि तद्वाक्यं भवति। तत्र परगुणानामसहनमसूया; तस्याम्—**माणवक माणवक वृथा ते सौन्दर्यम्** । पूजा सम्मतिः; तस्याम्—**माणवक माणवक शोभनः खल्वसि** । कोपः क्रोधः; तस्मिन्—**अविनीतक अविनीतक इदानीं ज्ञास्यसि जाल्म** । कुत्सनं निन्दनम्; तस्मिन्—**धानुष्क धानुष्क वृथा ते धनुः** । अपकारशब्दैर्भयोत्पादनं भर्त्सनम्; तस्मिन्—**चोर चोर घातयिष्यामि त्वाम्** । **एकम्बहुव्रीहिवत्** (VIII. 1. 9.)—एकमित्येतच्छब्दरूपं द्विरुक्तं बहुव्रीहिवद्भवति । बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ; **एकैकम्**

अक्षरं पठति । सर्वनामसंज्ञाप्रतिषेधस्वरसमासान्ताः समासाधिकार-विहिते बहुव्रीहौ विज्ञायन्ते ; तेन आतिदेशिकबहुव्रीहौ न भवन्ति ; **एकैकस्मै** देहि ; **पूःपूः**, इत्यादि । **आबाधे च** (VIII. 1. 10.)—आबाधः पीडा ; तत्रापि द्विर्भावः ; बहुव्रीहिवच्च कार्यं भवति ; **गतगता, पतितपतिता** । **कर्मधारयवदुत्तरेषु** (VIII. 1. 11.)—इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत् कार्यं भवति । कर्मधारयवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि ; **मृदु-मृदुः, पटुपट्वी** । **प्रकारे गुणवचनस्य** (VIII. 1. 12.)—प्रकारो भेदः सादृश्यश्च ; तदिह सादृश्यं गृह्यते ; तत्र वर्तमानस्य द्वे भवतः ; **पण्डितपण्डितः** । अस्य अपरिपूर्णपाण्डित्यगुणः इत्यर्थः । गुणवचनस्य इति किम् ? अग्निर्माणवकः । प्रकारे इति किम् ? पण्डि-तो देवदत्तः । **आनुपूर्व्ये द्वे भवत इति वक्तव्यम्** (वा.)—इति **मूले मूले** स्थूलाः, **अग्रे अग्रे** सूक्ष्माः । **चापले द्वे भवतः** (वा.) ; संभ्रमेण प्रवृत्तिश्चापलम् ; तस्मिन्—**अहिरहिः** । **क्रियासमभि-हारे द्वे भवतः** (वा.)—इति **लुनीहिलुनीहीति** लुनाति । **डाचि द्वे भवतः** (वा.)—इति **पटपटाकरोति** । **कर्मव्यतिहारे सर्व-नाम्नो द्वे भवतः, समासवच्च बहुलम्** (वा.)—इति **अन्योऽ-न्यम्, परस्परम्, इतरेतरम्** । असमासवद्भावे पूर्वपदसुपः सुरेव भवति ; **अन्योऽन्यस्मै, परस्परेण, इतरेतरान्** । **स्त्रीनपुंसक-योरुत्तरपदस्य आम् वा भवति** (वा.)—इति **अन्योऽन्यामिमे ब्राह्मण्यौ** भोजयतः ; **इतरेतरामिमे कुले** विद्विष्टः । पक्षे **अन्योऽ-न्यम् इतरेतरम्** इति च भवतः । **अकृच्छ्रे प्रियसुखयोरन्यतर-स्याम्** (VIII. 1. 13.)—प्रिय सुख इत्येतयोः द्वे भवतः दुःखा-

भावे गम्यमाने; **प्रियप्रियेण** ददाति, **सुखसुखेन** ददाति। अखिद्यमानो ददातीत्यर्थः। पक्षे—**प्रियेण** ददाति, **सुखेन** ददाति। **यथास्वे यथायथम्** (VIII. 1. 14.)—योयः आत्मा यद्यत् आत्मीयं तत्तत् यथास्वम्; तस्मिन् यथायथम् इति निपात्यते। ज्ञातास्सर्वे पदार्था **यथायथम्**; यथास्वभावमित्यर्थः। भ्रातॄणां दायो **यथायथम्** दीयताम्; यथात्मीयमित्यर्थः। **द्वन्द्वं रहस्य-मर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु** (VIII. 1. 15.)—एतेष्वर्थेषु द्विशब्दस्य द्वन्द्वमिति द्विर्भावो निपात्यते। तत्र रहस्यं द्वन्द्वशब्दवाच्यम्; इतरे विषयभूताः; **द्वन्द्वं मन्त्रयन्ते**—रहस्यमित्यर्थः। अन्यत्रापि द्वन्द्वमिति दृश्यते; **द्वन्द्वं युद्धम्, द्वन्द्वं सहते** ॥

15. **सुट् कात् पूर्वः** (VI.1.135.) इत्यनुवर्तमाने, **कुस्तुम्बुरूणि जातिः** (VI. 1. 143.)—कुस्तुम्बुरूणीत्यत्र सुट् निपात्यते जातिश्चेत् भवति। **सूत्रे लिङ्गवचनमतन्त्रम्** (परि. 73.) इत्यत्र नपुंसकमविवक्षितम्। **कुस्तुम्बुरुः** ओषधिविशेषः, धान्याकम्। जातिरिति किम्? कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि; तुम्बुरूणि तिन्दुकीफलानि। **अपरस्पराः क्रियासातत्ये** (VI. 1. 144.)—सुण्णिपात्यते क्रियासातत्ये गम्यमाने। **अपरस्पराः** सार्था गच्छन्ति, सन्ततमविच्छेदेन गच्छन्तीत्यर्थः। **गोष्पदं सेवितासेवितप्रमाणेषु** (VI.1.145.)—अत्र सुण्णिपात्यते। सेविते—**गोष्पदो** देशः; असेविते—**अगोष्पदानि** अरण्यानि; प्रमाणे—**गोष्पदमात्रं** क्षेत्रम्। **आस्पदम्प्रतिष्ठायाम्** (VI. 1. 146.)—सुण्णिपात्यते; आत्मयापनाय स्थानं प्रतिष्ठा। **आस्पदं** मया लब्धम्। प्रतिष्ठायां

किम्? आपदमधीतम्। **आश्चर्यमनित्ये** (VI. 1. 147.)—सुण्णिपात्यते। अनित्यतया विषयभूतया अद्भुतत्वमिह लक्ष्यते; **आश्चर्यं** यदि सोऽधीयीत। **वर्चस्केऽवस्करः** (VI. 1. 148.)—सुण्णिपात्यते। कुत्सितं वर्चः वर्चस्कम्, पुरीषम्; तस्मिन् वाच्ये **अवस्करः**; अन्यत्र अवकरः। **प्रस्कण्वहरिश्चन्द्रावृषी**। (VI. 1. 153.)—अत्रापि सुट्। **हरिश्चन्द्रो** राजर्षिः, **हरिचन्द्रः** कविः; **प्रस्कण्वः** ऋषिः, **प्रकण्वो** देशः। **मस्करमस्करिणौ वेणुपरिव्राजकयोः** (VI. 1. 154.)—अत्रापि सुट्। अन्यत्र मकरो ग्राहः, मकरी समुद्रः। **मस्करः** वेणुः; मस्करोऽस्यास्तीति **मस्करी** वेणुदण्डविशिष्टः; माकरणशीलो वा मस्करी। **पारस्करप्रभृतीनि च संज्ञायाम्** (VI. 1. 157.)—एतानि ससुट्कानि निपात्यन्ते। **पारस्करो** देशः; किं किं दधातीति **किष्किन्धा** गुहा। **तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च** (ग); गणसूत्रमेतत्; बृहतां पतिः **बृहस्पतिः**, तत् करोतीति **तस्करः**। आकृतिगणोऽयम्; **प्रायश्चित्तम्, वनस्पतिः, परश्शतम्,** इत्याद्यपि भवति॥

**इति समासाश्रयविधयः॥**

**समासावतारः समाप्तः**



## अथ तद्धितावतारः॥

1. अथ सुबन्तादपत्याद्यर्थविशेषे तद्धितोत्पत्तिः। तद्धितान्ता अपि सुबन्तानन्तरं संक्षेपेणोपदिश्यन्ते। औपगवः इत्यादौ उपगोरपत्यमिति विग्रहः। **प्रत्ययः** (III. 1. 1.), **परश्च** (III. 1. 2.), **ङ्याप्प्रातिपदिकात्** (IV. 1. 1.), **तद्धिताः** (IV. 1. 76.), **समर्थानां प्रथमाद्वा** (IV. 1. 82.), इत्यधिकृत्य, **प्राग्दीव्यतोऽण्** (IV. 1. 83.)—तेन दीव्यतीति (IV. 4. 2.) वक्ष्यति; तदेकदेशो दीव्यच्छब्दः अवधित्वेन गृह्यते; प्रागेतस्माद्दीव्यतः यान् इत ऊर्ध्वमनुक्रमिष्यामः तत्र अण् प्रत्ययस्तेषु भवतीति वेदितव्यम्। अधिकारः परिभाषा विधिर्वा इति त्रिष्वपि दर्शनेषु अपवादविषयं परिहृत्य अण् प्रवर्तते। **तस्यापत्यम्** (VI. 1. 92.)—तस्येति षष्ठीसमर्थादपत्यमित्येतस्मिन् अर्थे यथाविहितं प्रत्ययो भवतीत्यण्प्रत्ययः। यो यत्र विहितस्स यथाविहितः; णकारो वृद्ध्यर्थः। उपगु+ङस्+अण् इत्यत्र इत्त्वाण्णलोपे, तद्धिताः इति तद्धितसंज्ञायां सुपो लुक् भवति। उपगु+अ इति जाते, **अङ्गस्य** (VI. 4. 1.), **मृजेर्वृद्धिः** (VII. 2. 114.), **अचो ञ्णिति** (VII. 2. 115.), इति वर्तमाने, **तद्धितेष्वचामादेः** (VII. 2. 117.)—ञिति णिति च तद्धिते परतोऽङ्गस्याचामादेरचो वृद्धिर्भवति। **अङ्गस्य** (VI. 4. 1.), **भस्य** (VI. 4. 129.), **नस्तद्धिते** (VI. 4. 114.), इति वर्तमाने, **ओर्गुणः** (VI. 4. 116.)—उवर्णान्तस्याङ्गस्य भस्य गुणो भवति तद्धिते परतः। इति **औपगवः**। ओरोदिति वक्तव्ये गुण-

ग्रहणं **संज्ञापूर्वको विधिरनित्यः** (परि. 63.) इति ज्ञापनार्थम्। तेन स्वयम्भुवोऽपत्यं **स्वायम्भुवः** इत्यत्र गुणो न भवति। **औपगवी** इत्यत्र टिड्ढाणञिति (IV. 1. 15.) ङीप्॥

2. गोत्रापत्यविवक्षायाम्, **अपत्यं पौत्रप्रभृति गोत्रम्** (IV. 1. 162.)—पुत्रस्यापत्यं पौत्रः; पौत्रप्रभृति यदपत्यं तद्गोत्रसंज्ञं भवति। औपगवस्यापत्यमुपगोर्गोत्रमिति विग्रहे, **एको गोत्रे** (IV. 1. 93.)—प्रत्यपत्यं प्रत्ययभेदप्रसङ्गे नियमः क्रियते; एकशब्दः संख्याभिधायी, गोत्रापत्ये विवक्षिते एक एव प्रत्ययो भवति; अथवा एकशब्दः प्रथमवचनः, गोत्रापत्ये प्रथम एव प्रत्ययो भवति। प्रथमा प्रकृतिः प्रत्ययमुत्पादयति इति नियमात् परमप्रकृतेरुपगुशब्दात् प्रथम एवाण्प्रत्ययो भवति। औपगवस्यापत्यमुपगोर्गोत्रमपि **औपगवः**। युवापत्यविवक्षायम्, औपगवस्यापत्यमुपगोर्युवा इति विग्रहे, **जीवति तु वंश्ये युवा** (IV. 1. 163.)—विद्यया जन्मना वा प्राणिनामेकलक्षणसन्तानो वंशः; तत्र भवो वंश्यः; तस्मिन् वंश्ये पित्रादौ जीवति स चतुर्थादिः युवसंज्ञो भवति; तुशब्दोऽवधारणे युवैव न गोत्रमिति। **गोत्राद्यून्यस्त्रियाम्** (IV. 1. 94.)—अयमपि नियमः; यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययो भवति, न परमप्रकृत्यनन्तरयुवभ्यः, अस्त्रियां विषये। स्त्रियां युवसंज्ञा न भवति। इत्यौपगवशब्दात्, **तस्यापत्यम्** (IV. 1. 92.) इत्यनुवर्तमाने, **अत इञ्** (IV. 1. 95.)—तस्येति षष्ठीसमर्थादकारान्तात् प्रातिपदिकादपत्यमित्येतस्मिन्नर्थे इञ् प्रत्ययो भवति। अणोऽपवादः; ञकारो वृद्ध्यर्थः; **औपगविः** युवा। तथैव दक्षात्; दक्षस्यापत्यं **दाक्षिः**। दाक्षेरपत्यं दक्षस्य गोत्रमिति विग्रहे, एको गोत्रे इति नियमात् परमप्रकृतेर्दक्षशब्दात्

इञ् प्रत्ययः । युवापत्यविवक्षायाम्, दाक्षेरपत्यं दक्षस्य युवेति विग्रहे गोत्राद्यूनि इति नियमात्, दाक्षिशब्दात्, **नडादिभ्यः फक्** (IV. 1. 99.) इति वर्तमाने, **यञिञोश्च** (IV. 1. 101.)—यञन्तादिञन्ताच्च यून्यपत्ये विवक्षिते फक्प्रत्ययो भवति। ककारो वृद्ध्यर्थः। **किति च** (VII. 2. 118.)—किति च तद्धिते परतोऽङ्गस्याचामादेरचो वृद्धिर्भवति। **पर्जन्यवल्लक्षणप्रवृत्तिः** (परि. 111.) इति ञित्वात् वृद्धिमत्यपि कित्त्वात् वृद्धिर्भवति। **आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम्** (VII. 1. 2.)—प्रत्ययस्यादिभूतानां फ ढ ख छ घ इत्येतेषां यथासंख्यम् आयन् एय् ईन् ईय् इय् इत्येते आदेशा भवन्ति। इति फकारस्य आयन् इत्यादेशः। दाक्षि+आयन इति जाते, **यस्येति च** (VI. 4. 148.)—इवर्णान्तस्यावर्णान्तस्य च भस्य ईकारे परे तद्धिते च लोपो भवति। इति इकारलोपः; णत्वम्; **दाक्षायणः**॥

3. तथैव गर्गशब्दात्; गर्गस्यापत्यं गार्गिः; गार्गेरपत्यं गर्गस्य गोत्रमिति विग्रहे, एको गोत्रे इति नियमात् परमप्रकृतेः अत इञ् इति इञि प्राप्ते, **गोत्रे कुञ्जादिभ्यश्चफञ्** (IV. 1. 98.) इति वर्तमाने, **गर्गादिभ्यो यञ्** (IV. 1. 105.)—गर्गादिभ्यः प्रातिपदिकेभ्यो गोत्रापत्ये विवक्षिते यञ्प्रत्ययो भवति। शेषं समानम्; **गार्ग्यः**। कथमनन्तरापत्यं रामो जामदग्न्यः, व्यासः पाराशर्यः, इति? गोत्ररूपाध्यारोपेण भवति। युवापत्यविवक्षायां गार्ग्यस्यापत्यं गर्गस्य युवा इति विग्रहे **गार्ग्यायणः**। गोत्रापत्ये अपत्यबहुत्वविवक्षायां, **ण्यक्षत्रियार्षञितो यूनि लुगणिञोः** (II. 4. 58.) इत्यधिकृत्य, **तद्राजस्य बहुषु तेनैवास्त्रियाम्** (II. 4. 62.), **यस्कादिभ्यो**

**गोत्रे** (II. 4. 63.), इति वर्तमाने, **यञञोश्च** (II. 4. 64.)—यञञोर्गोत्रविहितप्रत्यययोर्बहुषु वर्तमानयोरस्त्रीविषययोर्लुक् भवति। इति गर्गस्य गोत्रापत्यानि पुमांसः **गर्गाः**। स्त्रियां तु, **यञश्च** (IV. 1. 16.)—यञन्तात् प्रातिपदिकात् स्त्रियां ङीप्प्रत्ययो भवति। इति ङीपि अलोपयलोपौ; **गार्गी, गार्ग्यौ, गार्ग्यः। प्राचां ष्फ तद्धितः** (IV. 1. 17.)—प्राचामाचार्याणां मतेन यञन्तात् प्रातिपदिकात् स्त्रियां ष्फो भवति। अनेन आयनादेशङीष्प्रत्ययौ; **गार्ग्यायणी**। बहुषु वर्तमानस्य अञो लुकि—औत्सः, औत्सौ, **उत्साः**— इत्यादीनि भवन्ति।

परमप्रकृतिर्गर्गो गार्गिस्तु तदनन्तरः।
गोत्रे गार्ग्यस्तृतीयस्स्यात्तुर्यो गार्ग्यायणो युवा॥

4. **आश्वपतः, पाशुपतः**, इत्यादौ अश्वपतेरपत्यमितिवत् विग्रहे, **अश्वपत्यादिभ्यश्च** (IV.1.84.)—अश्वपत्यादिभ्यश्शब्देभ्यः अण्प्रत्ययो भवति प्राग्दीव्यतीयेष्वर्थेषु। वक्ष्यमाणस्य ण्यस्यापवादः। **दैत्यः, आदित्यः, प्राजापत्यः**, इत्यादौ दितेरपत्यमितिवत् विग्रहे, **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** (IV. 1. 85.)—दिति अदिति आदित्य इत्येतेभ्यः पत्युत्तरपदाच्च ण्यप्रत्ययो भवति प्राग्दीव्यतीयेष्वर्थेषु। आदित्यो देवता अस्य हविषः इति विग्रहे, आदित्य इत्यत्र ण्यप्रत्यये अकारलोपे च कृते, आदित्य्+य इति जाते, **हलो यमां यमि लोपः** (IV. 4. 64.)—हल उत्तरेषां यमां लोपो भवति यमि परतः। इति **आदित्यं** हविः। **याम्यः** इत्यत्र, **यमाच्चेति वक्तव्यम्** (वा.)—इति ण्यप्रत्ययः। **बाह्यं** बहिर्भवम् इत्यत्र, **बहिषष्टिलोपश्च** (वा.)—इति बहिषो ण्यप्रत्ययो भवति, टिलो-

पश्च । **द्वैमातुरः**, **त्रैमातुरः**, **सांमातुरः**, **भाद्रमातुरः**, इत्यादौ, द्वयोर्मात्रोरपत्यमितिवत् विग्रहे, तद्धितार्थेति समासे कृते, **मातुरुत्संख्यासंभद्रपूर्वायाः** (IV. 1. 115.)—संख्यापूर्वात् सम्पूर्वात् भद्रपूर्वाच्च मातृशब्दादपत्यमित्येतस्मिन्नर्थे अण्प्रत्ययो भवति; तत्सन्नियोगेन मातृशब्दस्य उकारश्चान्तादेशः । रपरत्वम्; उकारादेशार्थं वचनम्; प्रत्ययः पुनरुत्सर्गेणैव सिद्धः । स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः; तेन धान्यमातुः ग्रहणं न भवति । **कानीनः** कर्णः इत्यत्र, कन्याया अपत्यमिति विग्रहे, **कन्यायाः कनीन च** (IV. 1. 116.)—कन्याशब्दादपत्यमित्येतस्मिन्नर्थेऽण्प्रत्ययो भवति, कन्याशब्दस्य कनीनादेशश्च । वक्ष्यमाणढकोऽपवादः । **औत्सः**, **औदपानः**, **पाञ्चालः**, इत्यादौ, उत्सस्यापत्यमितिवत् विग्रहे, **उत्सादिभ्योऽञ्** (IV. 1. 86.)—उत्सादिभ्यश्शब्देभ्यः अञ्प्रत्ययो भवति प्राग्दीव्यतीयेष्वर्थेषु । **स्त्रैणम**, **पौंस्नम्**, इत्यत्र, स्त्रिया अपत्यमितिवत् विग्रहे, **स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्** (IV. 1. 87.)—धान्यानां भवने क्षेत्रे खञ् (V. 2. 1.) इति वक्ष्यति; प्रागेतस्मात् भवनसंशब्दनात् यानित ऊर्ध्वमनुक्रमिष्यामः तेषु अर्थेषु स्त्रीशब्दात् पुंस्शब्दाच्च यथाक्रमं नञ् स्नञ् इत्येतौ प्रत्ययौ भवतः । पौंस्नमित्यत्र नश्चापदान्तस्य झलि (VIII. 4. 65.) इति सकारस्य लोपः । स्त्र्यपत्यविवक्षायां **स्त्रैणी** । नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् (वा. IV. 1. 15.) इति ङीप्प्रत्ययः । **सौधातकिः**; सुधातुरपत्यमिति विग्रहे, **सुधातुरकङ् च** (IV. 1. 97.)—सुधातृ इति शब्दादपत्यमित्येतस्मिन् अर्थे इञ्प्रत्ययो भवति, सुधातृशब्दस्य च अकङादेशः । ङिच्च (I. 1. 53.) इति ऋकारस्यैव स भवति । **व्यासवरुडनि-**

**षाद्चण्डालबिम्बानामिति वक्तव्यम्** (वा. IV. 1. 97.)— इति **वैयासकिः, वारुडकिः, नैषादकिः,** इत्यादि ॥

5. **शैवः, काकुत्स्थः, गाङ्गः, भौमः, पार्वतः,** इत्यादौ, शिवस्यापत्यमितिवत् विग्रहे, **शिवादिभ्योऽण्** (IV. 1. 115.)—गोत्र इति निवृत्तम् ; शिवादिभ्यश्शब्देभ्यः अपत्यमित्येतस्मिन्नर्थे अण्प्रत्ययो भवति । इञादीनामपवादः । **वासिष्ठः, श्वाफल्कः, वासुदेवः, साहदेवः,** इत्यत्र, वसिष्ठस्यापत्यमितिवत् विग्रहे, **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (IV. 1. 114.)—ऋष्यादिवचनेभ्यः प्रातिपदिकेभ्यः अपत्यमित्येतस्मिन्नर्थे अण्प्रत्ययो भवति । इञोऽपवादः ; ऋषयः प्रसिद्धा वसिष्ठादयो मन्त्रद्रष्टारः ; अन्धका वृष्णयः ; कुरवः इति वंश्याः । आगस्त्य कौण्डिन्य इत्येतयोः गोत्रापत्यबहुत्वविवक्षायाम्, **आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्** (II. 4. 70.)— आगस्त्य कौण्डिन्य इत्येतयोर्गोत्रविहितयोर्बहुषु वर्तमानयोः अण्यञो-र्लुक् भवति ; शिष्टस्य प्रकृतिभागस्य यथासंख्यम् अगस्ति कुण्डिनच् इत्येतावादेशौ भवतः । अत्र चकारस्स्वरार्थः—आगस्त्यः, आगस्त्यौ, **अगस्तयः** ; कौण्डिन्यः, कौण्डिन्यौ, **कुण्डिनाः** । **स्वसुश्छः** (IV. 1. 143.)—स्वसृशब्दादपत्यमित्येतस्मिन्नर्थे छप्रत्ययो भवति । अणोऽपवादः ; छस्य ईयादेशः ; **स्वस्रीयः** । विनताया अपत्यं **वैनतेयः** इतिवत्, **सौपर्णेयः आञ्जनेयः** इत्यत्र, **स्त्रीभ्यो ढक्** (IV. 1. 120.)—स्त्रीप्रत्ययान्तेभ्यः षष्ठीसमर्थेभ्यः अपत्यमित्येतस्मिन्नर्थे ढक्प्रत्ययो भवति । ढस्य एयादेशः ; स्त्रीग्रहणेन टाबादिस्त्रीप्रत्ययान्ता गृह्यन्ते । दित्यादितिशब्दाभ्याम्—कृदिकारादक्तिनः—इति ङीप् ; ततः ढक् ; **दैतेयः । आत्रेयः, वार्ष्णेयः** इत्यत्र, अत्रेरपत्य-

मितिवत् विग्रहे, **द्व्यचः** (IV. 1. 121.) इति वर्तमाने, **इतश्चानिञः** (IV. 1. 122.)—इकारान्तात् द्व्यचः अनिञन्तात् प्रातिपदिकात् अपत्यमित्येतस्मिन्नर्थे ढक्प्रत्ययो भवति। स्त्रीग्रहणं निवृत्तम्। इत इति किम्? मरीचेरपत्यं **मारीचः**। गोत्रापत्यबहुत्वविवक्षायाम् अत्रिशब्दाद्विशेषोऽस्ति ; **अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च** (II. 4. 65.)—अत्र्यादिभ्यः परस्य गोत्रविहितप्रत्ययस्य बहुषु वर्तमानस्य लुक् भवति। इति—आत्रेयः, आत्रेयौ, **अत्रयः**। एवमेव **भृगवः**, **कुत्साः**, **वसिष्ठाः**, **गोतमाः**, **अङ्गिरसः**॥

6. **शौभ्रेयः**, **बाहुलेयः**, **मार्कण्डेयः**, इत्यत्र, शुभ्रस्यापत्यमितिवत् विग्रहे, **शुभ्रादिभ्यश्च** (IV. 1. 123.)—शुभ्रादिभ्यश्शब्देभ्योऽपत्यमित्येतस्मिन्नर्थे ढक्प्रत्ययो भवति। यथायोगं इञादीनामपवादः। शितिबाहोरपत्यं **शैतिबाहेयः** इत्यादौ ढकि, **ढे लोपोऽकद्र्वाः** (VI. 4. 147.)—ढप्रत्यये परतः उवर्णान्तस्य भस्य कद्रूभिन्नस्य लोपो भवति। अकद्र्वाः इति किम्? **काद्रवेयः**। कल्याण्या अपत्यं **काल्याणिनेयः**, एवमेव **सौभागिनेयः**, इत्यादौ, **कल्याण्यादीनामिनङ्** (V. 1. 126.)—कल्याण्यादीनां शब्दानामिनङादेशो भवति ढकि परतः। **हृद्भगसिन्ध्वन्ते पूर्वपदस्य च** (VII. 3. 19.)—हृद् भग सिन्धु इत्येवमन्ते अङ्गे पूर्वपदस्योत्तरपदस्य च अचामादेरचो वृद्धिर्भवति ञिति णिति किति च तद्धिते परतः। इति सौभागिनेयः इत्यादौ उभयपदवृद्धिः। कुलटाया अपत्यम् इति विग्रहे, **कुलटाया वा** (IV. 1. 127.)—ढक् प्रत्ययः ; तत्सन्नियोगेन वा इनङादेशः ; **कौलटिनेयः**। पक्षे—**कौलटेयः**। चटकाया अपत्यमिति विग्रहे, **चट-**

**काया ऐरक्** (IV. 1. 128.)—चटकाशब्दादपत्यमित्येतस्मिन्नर्थे ऐरक्प्रत्ययो भवति ; **चाटकैरः । स्त्रियामपत्ये लुग्वक्तव्यः** (वा) —इति चटकाया अपत्यं स्त्री **चटका** । गोधाया अपत्यामिति विग्रहे, **गोधाया ढ्रक्** (IV. 1. 129.)—गोधाशब्दात् अपत्यमित्येतस्मिन्नर्थे ढ्रक्प्रत्ययो भवति । ढस्य एयादेशः ; यकारस्य, **लोपो व्योर्वलि** (VI. 1. 66.)—धातोरधातोश्च वलि परतो यकारवकारयोर्लोपो भवति । इति लोपः; **गौधेरः । आरगुदीचाम्** (IV. 1. 130.)—गोधाया अपत्ये आरक्प्रत्ययो भवति उदीचां मते ; **गौधारः । क्षुद्राभ्यो वा** (IV. 1. 131.)—ढ्रगनुवर्तते, न आरक् ; क्षुद्रा अङ्गहीना धर्महीनाश्च ; ताभ्यः अपत्ये वा ढ्रक् । ढकोऽपवाद; **काणेरः, दासेरः, कौलटेरः** ॥

7. पितृष्वसुरपत्यामिति विग्रहे, **पितृष्वसुश्छण्**(IV.1.132.)—पितृष्वसृशब्दादपत्यमित्येतस्मिन्नर्थे छण्प्रत्ययो भवति ; **पैतृष्वस्रीयः । ढकि लोपः** (IV. 1. 133.)—पितृष्वसृशब्दस्य लोपो भवति ढकि परतः । एतदेव लोपविधानं ज्ञापकं पितृष्वसृशब्दादपत्येऽर्थे ढक्प्रत्ययो भवति इति ; अथवा योगविभागेन ढक्प्रत्ययं विधाय पश्चाल्लोपो विधीयते ; इति **पैतृष्वसेयः** । मातृष्वसुरपत्यामिति विग्रहे, **मातृष्वसुश्च** (IV. 1. 134.)—मातृष्वसृशब्दादपत्यमित्येतास्मिन्नर्थे पूर्ववच्छण्, ढकि लोपश्च । पितृष्वसुः यदुक्तं तन्मातृष्वसुरपिभवति; **मातृष्वस्रीयः, मातृष्वसेयः । स्वसुश्छः** (VI. 1. 143.)—स्वसृशब्दस्य अपत्यार्थे छप्रत्ययो भवति । छस्य ईयादेशः ; **स्वस्रीयः । भ्रातुर्व्यच्च** (IV. 1. 144.)—भ्रातृशब्दादपत्ये व्यत्प्रत्ययो भवति ; चकारात् छश्च ; **भ्रातृव्यः, भ्रात्रीयः । व्यन् सपत्ने** (IV. 1. 145.)—

सपत्नशब्दश्शत्रुपर्यायः ; भ्रातृशब्दात् व्यन् भवति समुदायेन चेत् शत्रुरुच्यते ; **भ्रातृव्यः** शत्रुः । **राजश्वशुराद्यत्** (IV. 1. 137.)—राजन् श्वशुर इति शब्दाभ्याम् अपत्येऽर्थे यत्प्रत्ययो भवति; **राजन्यः**, **श्वशुर्यः** । **राज्ञः अपत्ये जातिग्रहणम्** (वा.)—इति **राजन्यः** क्षत्रियः, अन्यो **राजनः** । **क्षत्राद्घः** (IV. 1. 138.)—क्षत्रशब्दादपत्ये घप्रत्ययो भवति । घस्य इयादेशः ; **क्षत्रियः** । अयमपि जातिवाचक एव । **कुलात् खः** ( IV. 1. 139. )—कुलशब्दादपत्ये खप्रत्ययो भवति । खस्य ईनादेशः ; **कुलीनः** । मनोरपत्यमिति विग्रहे, **मनोर्जातावञ्यतौ षुक् च** (IV. 1. 161.)—मनुशब्दादपत्यमित्येतस्मिन्नर्थे अञ्यतौ प्रत्ययौ भवतः, षुगागमश्च ; समुदायेन जातिरवगम्यते चेत्तौ भवतः ; **मानुषः**, **मनुष्यः** । अपत्य तु अणेव—

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यः तेन सिध्यति माणवः ॥

**कुर्वादिभ्यो ण्यः** (IV. 1. 151.)—कुरु इत्येवमादिभ्यश्शब्देभ्यः अपत्ये ण्यप्रत्ययो भवति ; **कौरव्यः**, **गार्ग्यः**, **मौर्यः**, इत्यादयः । तिकस्यापत्यं **तैकायनिः** इत्यत्र, **तिकादिभ्यः फिञ्** (IV. 1. 154.)—तिक इत्येवमादिभ्यः अपत्ये फिञ्प्रत्ययो भवति । **अणो द्व्यचः** (IV. 1. 156.)—अणन्तात् द्व्यचः प्रातिपदिकात् अपत्ये फिञ्प्रत्ययो भवति ; इञोऽपवादः ; **कार्त्रायणिः**, **त्वाष्ट्रायणिः**, **यास्कायनिः** ॥

8. **जनपदशब्दात् क्षत्रियादञ्**(IV. 1. 168.)—जनपदशब्दो यः क्षत्रियवाची तस्मादपत्ये अञ्प्रत्ययो भवति ; **पाञ्चालः**,

वैदेहः । क्षत्रियादिति किम् ? ब्राह्मणस्य पञ्चालस्य अपत्यं **पाञ्चालिः**। **क्षत्रियसमानशब्दात् जनपदशब्दात् तस्य राजन्यपत्यवत्** (वा.)—इति पञ्चालानां राजा **पाञ्चालः**। **साल्वेयगान्धारिभ्याञ्च** ( IV. 1. 169. )—साल्वेयगान्धारिशब्दाभ्यामपत्ये अञ् भवति राजन्यपि ; **साल्वेयो** राजा **गान्धारो** वा । **द्व्यञ्मगधकलिङ्गसूरमसादण्** (IV. 1. 170.)—जनपदशब्दात् क्षत्रियाभिधायिनः द्व्यचः मगधादिभ्यश्च अपत्ये राजन्यपि अण्प्रत्ययो भवति; **आङ्गः**, **पौण्ड्रः**, **मागधः**, **कालिङ्गः**, **सौरमसः** । **वृद्धिर्यस्याचामादिस्तद्वृद्धम्** (I. 1. 73.)—यस्येति समुदाय उच्यते; अचां मध्ये यस्य वृद्धिसंज्ञकः आदिभूतः तच्छब्दस्वरूपं वृद्धसंज्ञं भवति । इति वृद्धसंज्ञायां, **वृद्धेत्कोसलाजादाञ्ञ्यङ्** ( IV. 1. 171.)—जनपदशब्दात् क्षत्रियात् वृद्धात् प्रातिपदिकात् इकारान्ताच्च कोसलाजादशब्दाभ्यां च अपत्ये राजनि च ञ्यङ्प्रत्ययो भवति; **सौवीर्यः**, **आवन्त्यः**, **कौसल्यः**, **आजाद्यः** । **पाण्डोर्ड्यण्** वक्तव्यः (वा.)—इति **पाण्ड्यः**। जनपदक्षत्रियार्थ एव; अन्यत्र **पाण्डवः** । **कुरुनादिभ्यो ण्यः** (IV. 1. 172.)—जनपदशब्दात् क्षत्रियादित्येव ; कुरुशब्दात् नकारादिभ्यश्च प्रातिपदिकेभ्यः अपत्ये ण्यप्रत्ययो भवति राजन्यपि; **कौरव्यः**, **नैषध्यः** । **ते तद्राजाः** ( IV. 1. 174. )—जनपदशब्दात् क्षत्रियादञ् इत्येवमादयः प्रत्ययाः तद्राजसंज्ञाः स्युः । **तद्राजस्य बहुषु तेनैवास्त्रियाम्** (II. 4. 62.)—तद्राजसंज्ञस्य प्रत्ययस्य बहुषु वर्तमानस्य अस्त्रीलिङ्गस्य लुक् भवति तत्कृतबहुत्वविवक्षायाम् ; **पञ्चा-**

लाः, गान्धारयः, अङ्गाः, मगधाः, सौवीराः, अवन्तयः, कोसलाः, अजादाः, पाण्डवः, कुरवः, निषधाः । **कम्बोजाल्लुक्** (IV. 1. 175.)—कम्बोजशब्दात् तद्राजस्य लुक् भवति । इति—**कम्बोजः, कम्बोजौ, कम्बोजाः** । **कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम्** (वा.)—इति **चोलः, केरलः, शकः, यवनः** । **स्त्रियामवन्तिकुन्तिकुरुभ्यश्च** (IV. 1. 176.)—एतेभ्यः स्त्रियां तद्राजस्य लुग्भवति ; **अवन्ती, कुन्ती, कुरूः** । इति अपत्याधिकारः ॥

9. कषायेण रक्तमिति विग्रहे, अपत्यवर्जिते पूर्वस्मिन्नेवाधिकारे, **तेन रक्तं रागात्** (IV. 2. 1.)—शुक्लस्य वर्णान्तरापादनम् इह रञ्जेरर्थः ; तेनेति तृतीयासमर्थात् रागविशेषवाचिनः प्रातिपदिकाद्रक्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । इत्यण्प्रत्ययः ; शेषं समानम् ; **काषायः** पटः ; टिड्ढाणञिति ङीप्—**काषायी** शाटी ; **काषायं** वस्त्रम् । लाक्षया रक्तमिति विग्रहे, **लाक्षारोचनाशाकलकर्दमाट्ठक्** (IV. 2. 2.)—लाक्षा रोचना शकल कर्दम इत्येतेभ्यो रागविशेषवाचिभ्यस्तृतीयासमर्थेभ्यो रक्तमित्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । अणोऽपवादः । **ठस्येकः** (VII. 3. 50.)—अङ्गात् परस्य ठप्रत्ययस्य इक इत्ययमादेशो भवति । अङ्गादिति किम् ? कर्मठः । यस्येति च इत्यवर्णलोपः ; **लाक्षिकः, रौचनिकः, शाकलिकः, कार्दमिकः** । पूर्ववत् त्रिष्वपि लिङ्गेषु योज्यम् । **शाकलः, कार्दमः, शाकली, कार्दमी, शाकलम्, कार्दमम्**, इत्यत्र, **शाकलकर्दमाभ्यामणपीष्यते** इति भवन्ति ।

**नील्या अन् वक्तव्यः** (वा.)—इति नील्या रक्तं वस्त्रं **नीलम्** । **पीतात् कन् वक्तव्यः** (वा.)—इति **पीतकं** वस्त्रम् । **हरिद्रा-महारजनाभ्यामञ् वक्तव्यः** (वा.)—इति **हारिद्रम्, माहा-रजनम्** । **नक्षत्रेण युक्तः कालः** (IV. 2. 3.)—तेनेति तृतीयासमर्थात् नक्षत्रवाचिनः प्रातिपदिकात् युक्तः काल इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवतीति अण्प्रत्ययः । तिष्यसमीपस्थे चन्द्रमसि वर्तमानात् तिष्यशब्दात् प्रत्ययः । न हि तिष्यादिनक्षत्रेण युज्यते कालः, तत्समीपस्थेन चन्द्रमसा युज्यते ; अतः तद्वाचिनस्तिष्यादेः प्रत्ययः । **तिष्यपुष्ययोर्नक्षत्राणि यलोपो वक्तव्यः** (वा. VI. 4. 149)—इति यकारलोपः ; **तैषी** रात्रिः, **पौषम्** अहः । **लुबविशेषे** (IV. 2. 4.)—पूर्वेण विहितस्य प्रत्ययस्य लुक् भवति, अविशेषे नक्षत्रयुक्तस्य कालस्य विशेषो नाभिधीयते चेत् ; अद्य **पुष्यः**, अद्य **कृत्तिकाः** ॥

10. **दृष्टं साम** (IV. 2. 7.)—तेनेति तृतीयासमर्थात् दृष्टं साम इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । **अण्**—वसिष्ठेन दृष्टं साम **वासिष्ठम्** ; **ढक्**—कलिना दृष्टं **कालेयम्** ; **वुञ्**—औपगवेन दृष्टं **औपगवकम्** ; **यत्**—वामदेवेन दृष्टं **वामदेव्यम्** । **परिवृतो रथः** (IV. 2. 10.)—तेनेति तृतीयासमर्थात् परिवृत इत्येतस्मिन्नर्थे रथश्चेत् यथाविहितं प्रत्ययो भवति ; रथो **वास्त्रः**, **चार्मणः**, **पाण्डुकम्बली**, इत्यादि । **तत्रोद्धृतममत्रेभ्यः** (IV. 2. 14.)—तत्र उद्धृतमित्यर्थे अमत्रवाचिनः शब्दात् यथाविहितं प्रत्ययो भवति ; **शारावः** ओदनः ।

**स्थण्डिलाच्छयितरि व्रते** (IV. 2. 15.)—स्थण्डिलशब्दात् तत्र शेते इत्यर्थे प्रत्ययो भवति समुदायेन व्रतं गम्यते चेत्; स्थण्डिले शयितुं व्रतमस्य **स्थाण्डिलो** भिक्षुः। **संस्कृतं भक्षाः** (IV. 2. 16.)—तत्र संस्कृतमित्यर्थे प्रत्ययो भवति यत् संस्कृतं भक्षाश्चेत् ते भवन्ति। खरविशदमभ्यवहारार्थं भक्ष इत्युच्यते; सतः उत्कर्षाधानं संस्कारः। कलशे संस्कृता भक्षाः **कालशाः**; भ्राष्ट्रे संस्कृता **भ्राष्ट्राः**; शूले संस्कृतं **शूल्यं** मांसम्; **दाधिकम्**; **औदश्वित्कम्**; **क्षैरेयी** यवागूः। तैषी पौर्णमास्यास्मिन्निति विग्रहे **सास्मिन् पौर्णमासीति संज्ञायाम्** (IV. 2. 21.)—सेति प्रथमासमर्थादास्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं पौर्णमासीति चेत् सा भवति, प्रत्ययान्तेन चेत् संज्ञा गम्यते। **तैषो** मासः; **पौषो** मासः; **आग्रहायणिको** मासः; **फाल्गुनः पाल्गुनिको** वा।

11. इन्द्रो देवता यस्य **ऐन्द्रः** स्थालीपाकः इत्यत्र, **सास्य देवता** (IV. 2. 24.)—सेति प्रथमासमर्थादस्य देवतेत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। इत्यण्प्रत्ययः; शेषं समानम्। को देवता अस्य इत्यत्र, सास्य देवतेत्यण्प्रत्यये प्राप्ते, **कस्येत्** (IV. 2. 25.)—कशब्दस्य इकारादेशो भवति देवतावाचिन्यणि परतः। वृद्धिः; आयादेशः; **कायं** हविः। शुक्रो देवता यस्येति विग्रहे, **शुक्रियं** हविः इत्यत्र, **शुक्राद् घन्** (IV. 2. 26.)—शुक्रशब्दात् प्रथमासमर्थादस्य देवतेत्यस्मिन्नर्थे घन्प्रत्ययो भवति। अणोऽपवादः; घस्येयादेशः। **अपोनप्त्रियम् अपोनप्त्रीयम्** हविः; **अपान्नप्त्रियम् अपान्नप्त्रीयम्** हविः; इत्यत्र, अपोनप्ता देवता अस्येति विग्रहे, **अपोनप्त्र-**

**पान्नप्तृभ्यां घः** ( IV. 2. 27. )—अपोनप्तृ अपान्नप्तृ इत्येतौ शब्दौ निपात्येते देवताया नामधेये ; अपोनप्तृ अपान्नप्तृ इत्येताभ्यां घप्रत्ययो भवति । घस्य इयादेशः । **छ च** (IV. 2. 28.)—अपोनप्तृ अपान्नप्तृ इत्येताभ्यां सास्य देवतेत्यस्मिन्नर्थे छप्रत्ययो भवति च । छस्य ईयादेशः । महेन्द्रो देवता अस्येति विग्रहे, **महेन्द्राद्घाणौ च** (IV. 2. 29.)—महेन्द्रशब्दात् प्रथमासमर्थादस्य देवतेत्यस्मिन्नर्थे घ अण् इत्येतौ प्रत्ययौ भवतः; चकाराच्छश्च ; **महेन्द्रियम्, माहेन्द्रम्, महेन्द्रीयम्** । **सोमाट्ट्यण्** (IV. 2. 30.)—सास्य देवतेत्यस्मिन्नर्थे सोमात् ट्यण्प्रत्ययो भवति । टकारो ङीबर्थः ; **सौम्यं** हविः ; **सौमी** ऋक्—अत्र हलस्तद्धितस्य इति यलोपः । वायुर्देवता अस्येति विग्रहे, **वाय्वृतुपित्रुषसो यत्** (IV. 2. 31.)—वायु ऋतु पितृ उषस् इत्येतेभ्यश्शब्देभ्यः प्रथमासमर्थेभ्योऽस्य देवतेत्यर्थे यत्प्रत्ययो भवति । **ओर्गुणः** (VI. 4. 146.)—उवर्णान्तस्य भसंज्ञकस्य गुणो भवति तद्धिते परतः । **वान्तो यि प्रत्यये** ( VI. 1. 79. )—योऽयमेचस्स्थाने वान्तादेशः स यकारादौ प्रत्ययेऽपि भवति। पित्र्यमित्यत्र **रीङ् ऋतः** (VII. 4. 27.)—ऋकारान्तस्याङ्गस्य अकृत्सार्वधातुकयकारे च्वौ च परतः रीङ् इत्ययमादेशो भवति ; ङकारोऽन्तादेशार्थः ; यस्येति लोपः । एवं **वायव्यम्, ऋतव्यम्, पित्र्यम्, उषस्यम्,** इति भवन्ति ॥

12. **द्यावापृथिवीयम् द्यावापृथिव्यम्, शुनासीरीयम् शुनासीर्यम् . मरुत्वतीयम्, अग्नीषोमीयम्, वास्तोष्पतीयम्, गृहमेधीयम्,** इत्यत्र, **द्यावापृथिवीशुनासीरमरुत्व-**

**द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च** (IV. 2. 32.)—द्यावापृथिव्यादिभ्यश्शब्देभ्यः सास्य देवतेत्यस्मिन्नर्थे छप्रत्ययो भवति; चकाराद्यत्। **अग्नेर्ढक्** (IV. 2. 33.)—अग्निशब्दात् सास्य देवतेत्यस्मिन्नर्थे ढक्प्रत्ययो भवति; **आग्नेयम्** हविः। अग्नामरुतौ देवते अस्य इति विग्रहे, अग्निमरुच्छब्दयोः देवताद्वन्द्वे च (VI.3.26.) इति आनङि प्राप्ते, **इद्वृद्धौ** (VI. 3. 28.)—कृतवृद्धौ उत्तरपदे देवताद्वन्द्वे अग्नेः इकारादेशो भवति। इत्यत्र विषये आनङ्निवृत्तौ, सास्य देवता (IV. 2. 24.) इत्यणि, अग्निमरुत्+अ इति स्थिते, **देवताद्वन्द्वे च** (VII. 3. 21.)—देवताद्वन्द्वे पूर्वोत्तरपदयोः आद्यचो वृद्धिस्स्यात् ञिति णिति किति च परे; **आग्निमारुतं** हविः। **नेन्द्रस्य परस्य** (VII. 3. 22.)—इन्द्रशब्दस्य उत्तरपदस्य वृद्धिर्न स्यात् ञिति णिति किति च परे; **सौमेन्द्रं** हविः। **दीर्घाच्च वरुणस्य** (VII. 3. 23.)—दीर्घात् परस्य वरुणस्य वृद्धिर्न भवति; **मैत्रावरुणम्**। दीर्घात् किम्? आग्निवारुणम्। **महाराजप्रोष्ठपदाट्ठञ्** (IV.2.35.)—महाराज प्रोष्ठपद इत्यनयोः ठञ् भवति सास्य देवतेत्यर्थे; **माहाराजिकम्, प्रौष्ठपदिकम्**। **ठञ्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसंख्यानम्** (वा)—इति नवयज्ञोऽस्मिन् वर्तत इति **नावयज्ञिकः; पाकयज्ञिकः**। **पूर्णमासादण्** (वा)—इति पूर्णो मासोऽस्यां वर्तते **पौर्णमासी** तिथिः॥

13. **काकम्, बाकम्, शौकम्**, इत्यत्र, काकानां समूहः इतिवत् विग्रहे, **तस्य समूहः** (IV. 2. 37.)—तस्येति षष्ठीसमर्थात् समूह इत्यर्थे यथाविहितं प्रत्ययो भवतीत्यण्प्रत्ययः। समूहार्थे तद्धित इति नपुंसकम्। **गुणा-**

**दिभ्यो ग्रामज्वक्तव्यः** (वा.)—इति **गुणग्रामः, इन्द्रियग्रामः।** **ब्राह्मण्यम्, माणव्यम्, वाडव्यम्,** इत्यत्र, ब्राह्मणानां समूह इतिवत् विग्रहे, **ब्राह्मणमाणववाडवाद्यत्** (IV.2.42.)—ब्राह्मणादिभ्यश्शब्देभ्यस्समूह इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। **भैक्षम्, गार्भिणम्, क्षैत्रम्,** इत्यत्र, भिक्षाणां समूह इतिवत् विग्रहे, **भिक्षादिभ्योऽण्** (IV. 2. 38.)—भिक्षादिभ्यश्शब्देभ्योऽण्प्रत्ययो भवति तस्य समूह इत्यर्थे। **वृक्षादिभ्यष्षण्डः**(वा.)–इति **वृक्षषण्डः, तरुषण्डः।** **खण्डः** प्रत्ययः इति पाठान्तरम्। **गार्भिणम्** इत्यत्र, भस्याढे ताद्धिते (वा. VI. 3. 35.) इति पुंवद्भावे कृते, नस्तद्धिते (VI.4.144.) इति टिलोपे प्राप्ते, **इनण्यनपत्ये**(VI.4.164.)–इन्नन्तम् अनपत्याणि परतः प्रकृत्या भवति। **ग्रामता, जनता, बन्धुता, सहायता,** इत्यत्र, **ग्रामजनबन्धुसहायेभ्यस्तल्** (IV. 2. 43.)—ग्रामादिभ्यश्शब्देभ्यस्तल्प्रत्ययो भवति तस्य समूह इत्यर्थे। तलन्तं नित्यं स्त्रीलिङ्गं भवति। **गजता** इत्यत्र, **गजाच्चेति वक्तव्यम्** (वा.) इति भवति। **आपूपिकम्, शाष्कुलिकम्, हास्तिकम्, धैनुकम्,** इत्यत्र, अपूपानां समूह इतिवत् विग्रहे, **अचित्तहस्तिधेनोष्ठक्** (IV. 2. 47.)—अचित्तवाचिभ्यश्शब्देभ्यो हस्तिधेनुशब्दाभ्यां च ठक्प्रत्ययो भवति तस्य समूह इत्यर्थे। **ठस्येकः** (VII. 3. 50.)—अङ्गात् परस्य ठस्य इकादेशः। हास्तिकमित्यत्र, पुंवद्भावे कृते, नस्तद्धिते इति नकारान्तस्याङ्गस्य टेर्लोपो भवति भसंज्ञानिमित्तताद्धिते परतः। धैनुकमित्यत्र, **इसुसुक्तान्तात् कः** (VII.3.51.)—इस् उस् इत्येवमन्तात् उगन्तात् तकारान्ताच्च परस्य ठस्य क इत्ययमादेशो भवति इति इकस्यापवादः॥

14. **गोत्रोक्षोष्ट्रोरभ्रराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्** (IV. 2. 39.)—गोत्रादिभ्यः समूहार्थे वुञ् स्यात्। अपत्याधिकारादन्यत्र लौकिकमपत्यमात्रं गोत्रं गृह्यते ; **औपगवकम्, औक्षकम्, औष्ट्रकम्, औरभ्रकम्, राजकम्, राजन्यकम्,** इत्यादि। **प्रकृत्या अके राजन्यमनुष्ययुवानः** (वा. VI. 4. 163.)—इति राजन्यकमानुष्यकयोः यलोपो न भवति। **वृद्धाच्चेति वक्तव्यम्** (वा.)—इति **वार्धकम्। कैदार्यम् कैदारकम्** इत्यत्र, केदाराणां समूह इति विग्रहे, **केदाराद्यञ् च** (IV. 2. 40.)—केदारशब्दात् समूह इत्यर्थे यञ्प्रत्ययो भवति; चकाराद्वुञ् च। **युवोरनाकौ** (VII. 1. 1.)—यु वु इत्येतयोः स्थाने क्रमात् अन अक इत्यादेशौ भवतः। इत्यकादेशः उभयत्रापि वुञः। **गाणिक्यम्** इत्यत्र, **गणिकायाश्च यञ् वक्तव्यः** (वा. IV. 2. 40.) इति भवति। **ठञ् कवचिनश्च** (IV. 2. 41.)—कवचिन्शब्दाच्च ठञ्प्रत्ययो भवति तस्य समूहः इत्येतस्मिन्नर्थे। टिलोपः; कवचिनां समूहः **कावचिकम्।** चकारात् केदारादित्यस्यानुकर्षणम् ; **कैदारिकम्। कैश्यम् कैशिकम्, अश्वीयम् आश्वम्,** इत्यत्र, केशानां समूहः इतिवत् विग्रहे, **केशाश्वाभ्यां यञ्छावन्यतरस्याम्** (IV. 2 48.)—केश अश्व इत्येताभ्यां शब्दाभ्यां समूह इत्येतस्मिन्नर्थे वा यञ्छौ क्रमात् प्रत्ययौ भवतः। अन्यदा ठगणौ। **पाश्या, धूम्या,** इत्यत्र, पाशानां समूहः इतिवत् विग्रहे, **पाशादिभ्यो यः** (IV. 2. 49.)—पाशादिभ्यश्शब्देभ्यः समूहार्थे यप्रत्ययो भवति। **खल्या, गव्या, रथ्या,** इत्यत्र, खलानां समूहः इतिवत् विग्रहे, **खलगोरथात्**

(IV. 2. 50.)—खलादिभ्यश्शब्देभ्यः समूह इत्येतस्मिन्नर्थे यप्रत्ययो भवति । समूहार्थे यान्तं नित्यं स्त्रीलिङ्गम् । **इनित्रकटचचश्च** (IV.2.51.)—खलगोरथशब्देभ्यो यथासंख्यम् इनि त्र कटयच् इत्येते प्रत्ययाः समूहार्थे भवन्ति । एषामपि स्त्रीलिङ्गत्वात् ङीप्टापौ ; **खलिनी, गोत्रा, रथकट्या** । **खलादिभ्य इनिर्वक्तव्यः** (वा.)—इति **डाकिनी, कुण्डलिनी, कुटुम्बिनी** । **कमलादिभ्यः खण्डच्, नरादिभ्यः स्कन्धच्, पूर्वादिभ्यः काण्डः** (वा.)—इति **कमलखण्डम्, कुमुदखण्डम् ; नरस्कन्धः, तुरङ्गस्कन्धः ; पूर्वकाण्डम्, तृणकाण्डम्, कर्मकाण्डम्** ॥

15. **विषयो देशे** (IV.2.52.) – तस्येति षष्ठीसमर्थात् विषय इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ; योऽसौ विषयः देशश्चेत् स भवति । शिबीनां विषयो देशः **शैबः** । एवं **मालवकः, वैराटकः, भौरिकिविधः, सौवीरभक्तः**, इत्यादि । **सोऽस्यादिरिति छन्दसः प्रगाथेषु** (IV. 2. 55.)—स इति प्रथमासमर्थात् अस्य आदिः इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं छन्दश्चेत्तदादिर्भवति, यत्तत् अस्येति निर्दिष्टं प्रगाथाश्चेत्ते भवन्ति । पङ्क्तिः आदिः अस्य **पाङ्क्तः** प्रगाथः ; **आनुष्टुभः, जागतः** । **संग्रामे प्रयोजनयोद्धृभ्यः** (IV. 2. 56.)—प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमासमर्थेभ्यः अस्येति षष्ठ्यर्थे संग्रामे अभिधेये यथाविहितं प्रत्ययो भवति । इति—सुभद्रा प्रयोजनमस्य संग्रामस्य **सौभद्रः**, भरताः योद्धारः अस्य इति **भारतः**, संग्रामः । **तदस्यां प्रहरणमिति क्रीडायां णः** (IV. 2. 57.)—प्रथमासमर्थात् अस्यामिति सप्तम्यर्थे णप्रत्ययो

भवति ; यत् तत् प्रथमानिर्दिष्टं प्रहरणं चेत् तत् भवति, यदस्यामिति निर्दिष्टं क्रीडा चेत् सा भवति । दण्डः प्रहरणम् अस्यां क्रीडायां **दाण्डा** ; एवं **मौष्टा, खाड्गा,** इत्यादि । **घञस्सास्यां क्रियेति ञः** (IV.2. 58.)—प्रथमासमर्थात् घञन्तात् क्रियावचिनः अस्यामिति सप्तम्यर्थे ञ-प्रत्ययो भवति ; यस्यामिति सप्तमीनिर्दिष्टं क्रिया चेत् सा भवति । इति दण्डपातोऽस्यां तिथौ वर्तते इति **दाण्डपाता** तिथिः ॥

16. व्याकरणमधीते वेत्ति वा इति विग्रहे, **वैयाकरणः**इत्यत्र,**तदधीते तद्वेद** (IV. 2. 59.)—तदिति द्वितीयासमर्थादधीते वेत्ति वा इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति इत्यणुप्रत्ययः । **न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्** (VII. 3. 3.)—पदान्ताभ्यां यकारवकाराभ्याम् उत्तरस्याचामादेरचो वृद्धिर्न भवति, ताभ्यान्तु यकारवकाराभ्यां पूर्वमैजागमो भवति ञिति णिति किति च तद्धिते परतः ; स्वश्वस्यापत्यं पुमान् **सौवश्वः** । एवमेव **नैयायिकः**, **वैयाकरणः**, इत्यादि । द्वौ वेदावधीते **द्विवेदः**, **त्रिवेदः**, इत्यत्र, तद्धितार्थद्विगौ कृते, तदधीते इत्यणुत्पत्तौ, **द्विगोर्लुगनपत्ये** (IV. 1. 88.)—द्विगुनिमित्तस्य प्राग्दीव्यतीयप्रत्ययस्यानपत्येऽर्थे लुक् भवति । अनपत्ये इति किम् ? द्वयोर्देवदत्तयोरपत्यं **द्वैदेवदत्तिः** । अत्र अत इञ् इतीञ् प्रत्ययः । अग्निष्टोममधीते **आग्निष्टोमिकः**, **औक्थिकः**, **वार्तिकसूत्रिकः**, इत्यत्र, **क्रतूक्थादिसूत्रान्ताट्ठक्** (IV. 2. 60.)—क्रतुविशेषवाचिभ्यः शब्देभ्यः उक्थादिभ्यश्च सूत्रान्ताच्च ठक्प्रत्ययो भवति तदधीते तद्वेदेत्यर्थे । **सूत्रान्तादकल्पादेरिष्यते** (इ) ; अतः कल्पसूत्रमधीते **काल्पसूत्रः** इति अणेव भवति । **आख्यानाख्यायिके-**

तिहासपुराणेभ्यष्ठग्वक्तव्यः (वा.); यवक्रीतमधिकृत्य कृतम् आख्यानं यवक्रीतम्; तदधीते इति **यावक्रीतिकः**। एवमेव **वासवदत्तिकः, ऐतिहासिकः, पौराणिकः**। **सर्वसादेर्द्विगोश्च लुग्वक्तव्यः** (वा.); इति सर्वान् वेदान् अधीते **सर्ववेदः**, वार्तिकान्तमधीते **सवार्तिकः**। **शतषष्टेः षिकन् पथो बहुलम्** (वा.)–इति **शतपथिकः, षाष्टिपथिकः**। बहुलग्रहणादण्यपि भवति—**शातपथः, षाष्टिपथः**। **क्रमादिभ्यो वुन्** (IV. 2. 61.)—क्रम इत्येवमादिभ्यश्शब्देभ्यो वुनप्रत्ययो भवति तदधीते तद्वेद इत्यर्थे; **क्रमकः, पदकः, सामकः, मीमांसकः**, इत्यादि। **अनुब्राह्मणादिनिः** (IV. 2. 62.) इति— ब्राह्मणसदृशोऽयं ग्रन्थो अनुब्राह्मणम्; तदधीते **अनुब्राह्मणी**। पाणिनीयमधीते वेत्ति वा इति विग्रहे, **पाणिनीयः** इत्यत्र, प्रोक्तप्रत्यये कृते, **प्रोक्ताल्लुक्** (IV.2.64.)—प्रोक्तसहचरितः प्रत्ययः प्रोक्तः; तदन्तात् अध्येतृवेदितृप्रत्ययस्य लुग्भवति। अत्र अणो लोपात् स्त्रियां न ङीप्; **पाणिनीया आपिशला** ब्राह्मणी। **सूत्राच्च कोपधात्** (IV. 2. 65.)—सूत्रवाचिनः ककारोपधादुत्पन्नस्य प्रत्ययस्य लुक् भवति। अप्रोक्तार्थ आरम्भः; अष्टकमधीते **अष्टकः**। **छन्दोब्राह्मणानि च तद्विषयाणि** (IV. 2. 66.)—छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाण्येव भवन्ति, अध्येतृवेदितृप्रत्ययविषयाणि। अनन्यभावो विषयार्थः; कठेन प्रोक्तमधीयते विदन्ति वा **कठाः**; ऐतरेयेण प्रोक्तमधीयते विदन्ति वा **ऐतरेयिणः**॥

17. उदुम्बराः अस्मिन् देशे सन्तीति विग्रहे, **तदस्मिन्नस्तीति देशे**

**तन्नाम्नि** (IV. 2. 67.)—तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवतीत्यण्प्रत्ययः देशनामधेये गम्यमाने ; यत्तत् प्रथमासमर्थमस्ति चेद्भवति ; यदस्मिन्निति सप्तमीनिर्दिष्टं स देशश्चेत् भवति ; तन्नामा तत्प्रत्ययान्तनामा देशो गम्यते चेत् स भवति ; इति-शब्दश्चेदर्थः ; **औदुम्बरो** देशः । एवं **बैल्वः**, **जाम्बवः**, इत्यादि । सहस्रेण निर्वृत्ता परिखेति विग्रहे, **तेन निर्वृत्तम्** (IV. 2. 68.)—तेनेति तृतीयासमर्थात् निर्वृत्तमित्येतस्मिन्नर्थे यथाविहितमण्प्रत्ययः ; टिड्ढाणञित्यादिना ङीप् ; **साहस्री** परिखा, **साहस्रः** तटाकः, **साहस्रं** कुण्डम् । देशे तन्नाम्नीति चतुर्ष्वपि योगेषु सम्बध्यते । ऋजुना-वान्निवास इति विग्रहे, **तस्य निवासः** (IV. 2. 69.)—तस्येति षष्ठीसमर्थात् निवास इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवतीत्यण् प्रत्ययः ; **आर्जुनावो** देशः । विदिशाया अदूरभवं **वैदिशम्** नगरम् इत्यत्र तस्येति वर्तमाने, **अदूरभवश्च** (IV. 2. 70.)—तस्येति षष्ठीसमर्थाददूरभव इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति इत्यण् प्रत्ययः । **जनपदे लुप्** (IV. 2. 81.)—देशे तन्नाम्नीति यश्चातुरर्थिकः प्रत्ययो भवति तस्य देशविशेषे जनपदे अभिधेये लुप् भवति । ग्रामसमुदायो जनपदः ; पञ्चालानां निवासो जनपदः **पञ्चालाः** । एवम् **अङ्गाः**, **कुरवः**, इत्यादि । अत्र **लुपि युक्तवद्व्यक्तिवचने** (I. 2. 51.)—लुपि सति प्रकृतिवल्लिङ्गवचने स्तः—इति बहुवचनम् । **शर्कराया वा** (IV. 2. 83.)—शर्कराशब्दादुत्पन्नस्य चातुरर्थिकप्रत्ययस्य वा लुप् भवति ; शर्करायाः निवासः **शर्करा** । पक्षे—ठकि **शार्करिकम्** नगरम्, अणि **शार्करम्**, ठचि **शर्करिकम्**, काकि **शार्कर-**

**कम्**, छे **शार्करीयम्** । **उदुम्बरावती**, **शरावती**, इत्यत्र, उदुम्बरा अस्यां नद्यां सन्तीति विग्रहे, **नद्यां मतुप्** (IV. 2. 85.)—नद्यामभिधेयायां मतुप् प्रत्ययो भवति प्रातिपदिकात् । चातुरर्थिकः ; तन्नाम्नो देशस्य विशेषणनदीग्रहणम् । **नड्वलम्**, **शाद्वलम्**, इत्यत्र, नडा अस्मिन् देशे सन्तीति विग्रहे, **नडशादाड्ड्वलच्** (IV.2.88.)—नडशादशब्दाभ्यां ड्वलच्प्रत्ययो भवति । चातुरर्थिकः ; डकारलोपः ; प्रयोजनं डित्यभस्याप्यनुबन्धकरणसामर्थ्यादेरिति लोपः । **उत्करादिभ्यश्छः** (IV.2.90.)—उत्कर इत्येवमादिभ्यः छप्रत्ययो भवति । चातुरर्थिकः ; यथासंभवमर्थसंबन्धः ; **उत्करीयम्**, **शफरीयम्**, **पिप्पलीयम्** ॥

18. चक्षुषा गृह्यते **चाक्षुषम्** रूपम्, श्रवणेन गृह्यते **श्रावणः** शब्दः, दृषदि पिष्टाः **दार्षदाः** सक्तवः, उलूखले क्षुण्णाः **औलूखलाः** यवाः, इत्यादौ, **शेषे** (IV.2 92.)—कश्च शेष इति चेत्, अपत्यादिभ्यश्चतुरर्थपर्यन्तेभ्यो योन्योऽर्थः स शेषः ; कुत्राधिकारः कुत्र विधायक इति चेत्, जातविधिः यत्र श्रूयते तदारभ्य विकारविधेः प्राक् शेषे इत्यधिकारोऽयम्, प्रहाणाद्यर्थे विधायकः ; इति शेषे इति लक्षणञ्चाधिकारश्च—तत्र शेषे यथाविहितं प्रत्ययो भवतीत्यण्प्रत्ययः । यानित ऊर्ध्वमनुक्रमिष्यामस्ते प्रत्ययाश्शेषेऽर्थे भवन्तीति वेदितव्याः । चाक्षुषमिति इदुदुपधस्य चाप्रत्ययस्येति षत्वम् । **राष्ट्रियः**, **अवारपारीणः**, इत्यत्र, **राष्ट्रावारपाराद्घखौ** (IV. 2. 93.)—राष्ट्र अवारपार इत्येताभ्यां यथासंख्यं घ ख इत्येतौ प्रत्ययौ भवतः शेषेऽर्थे । **अवारीणः**, **पारीणः**, इत्यत्र, **विगृहीतादपीष्यते** (इ) इति भवति । **पारावा**-

**रीणः** इत्यत्र, **विपरीताच्च** (भा.इ) इति भवति। **ग्राम्यः, ग्रामीणः,** इत्यत्र, **ग्रामाद्यखञौ** (IV. 2. 94.)—ग्रामशब्दात् य खञ् इत्येतौ प्रत्ययौ भवतः। खस्य ईनादेशः। **ग्रामेयकः** इत्यत्र, **कत्र्यादिभ्यो ढकञ्** (IV. 2. 95.) इति ढकञ्प्रत्ययः। नद्यां भवं **नादेयम्, माहेयम्, वाराणसेयः,** इत्यत्र, **नद्यादिभ्यो ढक्** (IV. 2. 97.)—नद्यादिभ्यः शब्देभ्यः शेषेऽर्थे ढक्प्रत्ययो भवति। **कौलेयकः** कुले जात इति विग्रहे, **कत्र्यादिभ्यो ढकञ्** (IV.2.95.) इति वर्तमाने, **कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु** (IV. 2. 96.)—कुलादिभ्यश्शब्देभ्यश्शेषेऽर्थे ढकञ् प्रत्ययो भवति; श्वाद्यर्थो गम्यते चेत् स भवति ॥

19. दक्षिणस्यांभवः **दाक्षिणात्यः, पाश्चात्यः, पौरस्त्यः,** इत्यत्र, **दक्षिणापश्चात्पुरसस्त्यक्** (IV. 2. 98.)—दक्षिणादिभ्यस्त्यक् प्रत्ययो भवति शेषेऽर्थे। दिवि भवः **दिव्यः, प्राच्यः,** इत्यत्र, **द्युप्रागपागुदक्प्रतीचो यत्** (IV. 2. 101.)—दिवादिभ्यः शब्देभ्यो यत्प्रत्ययो भवति शेषे अर्थे। अमा भवः इति विग्रहे **अमात्यः, इहत्यः, क्वत्यः, कुतस्त्यः, कुत्रत्यः,** इत्यादौ, **अव्ययात्त्यप्** (IV. 2. 104.)—अव्ययात् त्यप्प्रत्ययो भवति शेषेऽर्थे।

अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात् स्मृतः।
निनिभ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा ॥

नियतं ध्रुवं **नित्यम्**, नियतं निर्गतो वर्णाश्रमधर्मेभ्यः **निष्ट्यः** चण्डालः। **उत्तरादाहञ् वक्तव्यः** (वा.)—इति **औत्तराहः**। **दूरादेत्यः** (वा.)—इति **दूरेत्यः**। **रामीयः, राजीयः, शालीयः,**

**औपगवीयः, पाणिनीयः,** इत्यादौ, **वृद्धिर्यस्याचामादिस्तद्वृद्धम्** (I. 1. 73.) इति वृद्धसंज्ञायां, **वृद्धाच्छः** (IV. 2. 114.)—वृद्धसंज्ञकात् प्रातिपदिकाच्छप्रत्ययो भवति शेषेऽर्थे । देवदत्ते भवः **देवदत्तीयः** इत्यत्र, **वा नामधेयस्य वृद्धसंज्ञा वक्तव्या** (वा.)। पक्षे **दैवदत्तः** इति शेषे अण् । तस्येदं **तदीयम्, यदीयम्,** इत्यादौ, **त्यदादीनि च** (I. 1. 74.)—त्यदादीनि शब्दरूपाणि वृद्धसंज्ञानि भवन्ति । वृद्धाच्छः इति छप्रत्ययः । **भावत्कः, भवदीयः,** इत्यत्र, **भवतष्ठक्छसौ** (IV. 2. 115.)—भवच्छब्दात् वृद्धसंज्ञात् ठक् छस् इत्येतौ प्रत्ययौ भवतः शेषेऽर्थे । आदिवृद्धौ, भावत् ठक् इति स्थिते, इसुसुक्तान्तात् कः (VII. 3. 51.) इति ठस्य कादेशः; **भावत्कः** । सकारः छसि पदसंज्ञार्थः । **सिति च** (I. 4. 16.)—भसंज्ञापवादः; सिति प्रत्यये परतः पूर्वं पदसंज्ञं भवति । इति पूर्वस्य पदसंज्ञायां, झलाञ्जशोऽन्ते इति जश्त्वम्; **भवदीयः** । **दाशरथः** इत्यत्र, दाशरथेर्जात इति विग्रहे, **इञश्च** (IV. 2. 112.)—गोत्रप्रत्ययान्तात् इञन्तात् प्रातिपदिकात् शेषेऽर्थेऽण्प्रत्ययो भवति । एवं **दाक्षः, प्लाक्षः,** इत्यादि । **काश्यादिभ्यष्ठञ्ञिठौ** (IV. 2. 116.)—काशि इत्येवमादिभ्यः ठञ् ञिठ इत्येतौ प्रत्ययौ शेषेऽर्थे भवतः; **काशिकी, काशिका, वैदिकी, वैदिका** । **अरण्यान्मनुष्ये** (IV. 2. 129.)—अरण्यशब्दात् वुञ्प्रत्ययो भवति शैषिकः मनुष्येऽभिधेये; **आरण्यको** मनुष्यः । **पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम्** (वा.)—इति **आरण्यकः** पन्थाः, **आरण्यकः** अध्यायः इत्यादि ॥ **गहादिभ्यश्च**

(IV. 2. 138.)—गह इत्येवमादिभ्यः प्रातिपदिकेभ्यः छप्रत्ययो भवति शेषेऽर्थे; **गहीयः, अन्तस्थीयः,** इत्यादि। **कुग्जनस्य परस्य च** (ग)-इति **जनकीयः, परकीयः। स्वस्य च** (ग)-इति **स्वकीयः। देवस्य च** (ग)—इति **देवकीयः। राज्ञः क च** (IV. 2. 140.—राज्ञः ककारः अन्तादेशो भवति, छप्रत्ययश्च; **राजकीयम्। पर्वताच्च** (IV. 2. 143.)—पर्वतशब्दात् छप्रत्ययो भवति शैषिकः; **पर्वतीयः** पुरुषः॥

20. युष्माकमिदम् अस्माकमिदम् **यौष्माकीणम् आस्माकीनम्, यौष्माकम् आस्माकम्, युष्मदीयम् अस्मदीयम्,** इत्यत्र, **युष्मदस्मदोरन्यतरस्यां खञ् च** (IV. 3. 1.)—युष्मदस्मदित्येताभ्यां खञ्प्रत्ययो भवति शेषेऽर्थे चकाराच्छ च; अन्यतरस्यांग्रहणादण् च। **तस्मिन्नणि च युष्माकास्माकौ** (IV. 3. 2.)—तस्मिन् खञ्यणि च परतो युष्मदस्मदोर्यथासंख्यं युष्माक अस्माक इत्येतावादेशौ भवतः। तवेदं ममेदं **तावकम् मामकम्, तावकीनम् मामकीनम्, त्वदीयम् मदीयम्,** इत्यत्र, खञि अणि च कृते, **तवकममकावेकवचने** (IV.3.3.)—एकवचनयोः युष्मदस्मदोः तवक ममक इत्येतावादेशौ भवतः खञि अणि च परतः। छप्रत्यये कृते, **त्वमावेकवचने** (VII. 2. 97.) इति वर्तमाने, **प्रत्ययोत्तरपदयोश्च** (VII. 2. 98.)—प्रत्यये उत्तरपदे च परतः एकवचनपरयोर्युष्मदस्मदोर्मपर्यन्तस्य त्व म इत्येतावादेशौ भवतः। **मध्यान्मः** (IV. 3. 8.)—मध्यशब्दात् म इति प्रत्ययो भवति शैषिकः। अणोऽपवादः; **मध्यमः। आदेश्चेति वक्तव्यम्** (वा)–इति

आदिमः। **अवोऽधसोर्लोपश्च** (वा)—इति **अवमः**, **अधमः** ॥
21. मासे भवः **मासिकः**, **आह्निकः**, इत्यादौ, **कालाट्ठञ्** (IV. 3. 11.)—कालविशेषवाचिनः प्रातिपदिकात् ठञ्प्रत्ययो भवति शेषेऽर्थे। आह्निकः इत्यत्र, **नस्तद्धिते** (VI. 4. 144.)—इति टिलोपे कर्तव्ये, **अह्नष्टखोरेव** (VI.4.145.) इति विहितान्नियमाट्टिलोपाभावः। **श्वसस्तुट् च** (IV. 3. 15.)—श्वस् इति शब्दात् विभाषा ठञ्प्रत्ययो भवति, तस्य च तुडागमो भवति। ठस्य इकादेशः; श्वस्+तिक इति जाते, **द्वारादीनां च** (VII. 3. 4.)—द्वार इत्येवमादीनां य्वाभ्यामुत्तरपदस्य अचामादेरचस्स्थाने वृद्धिर्न भवति; पूर्वौ तु ताभ्याम् ऐजागमौ भवतः; **दौवारिकः**, **शौवस्तिकः**, इत्यादि। शौवस्तिकः इत्यत्र ठञभावे—अव्ययात् त्यप् इति त्यप्; **श्वस्त्यः**। पक्षे—**श्वस्तनः** इति वक्ष्यति। सन्धिवेलायां भवः **सान्धिवेलः सान्ध्यः**, **ग्रैष्मः**, **शैशिरः**, **माघः**, **चैत्रः**, इत्यादौ, **सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्** (IV. 3. 16.)—सन्धिवेलादिभ्यश्शब्देभ्यः ऋतुभ्यो नक्षत्रेभ्यश्च अण्प्रत्ययो भवति शेषेऽर्थे; ठञोऽपवादः। प्रावृषि भवः **प्रावृषेण्यः** इत्यत्र, **प्रावृष एण्यः** (IV. 3. 17.)—प्रावृट्छब्दादेण्यप्रत्ययो भवति शेषेऽर्थे। ऋत्वणोऽपवादः। वर्षासूपयोज्यं **वार्षिकम्** वासः इत्यत्र, **वर्षाभ्यष्ठक्** (IV. 3. 18.)—वर्षाशब्दात् ठक्प्रत्ययो भवति शेषेऽर्थे; ऋत्वणोऽपवादः। हेमन्ते भवः **हैमनः** इत्यत्र, **सर्वत्राण् च तलोपश्च** (IV. 3. 22.)—हेमन्तशब्दात् अण्प्रत्ययो भवति लोके वेदे च; तत्सन्नियोगेन तकारलोपः। सायं भवः इति विग्रहे, **सायन्तनः** इत्यत्र,

**सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** (IV. 3. 23.)—सायम् इत्यादिभ्यः अव्ययेभ्यश्च कालवाचिभ्यः ट्युट्युलौ प्रत्ययौ भवतः, तुडागमश्च । योः अनादेशः; **चिरन्तनः, प्राह्णेतनः, प्रगेतनः, श्वस्तनः।** **चिरपरुत्परारिभ्यस्त्नो वक्तव्यः** (वा.)—इति **चिरत्नम्**, इत्यादि । **अग्रपश्चाड्डिमच्** (वा)—इति **अग्रिमम्, पश्चिमम्** । **अन्ताच्चेति वक्तव्यम्** (वा.)—इति **अन्तिमम्** ॥

22. स्रुघ्ने जातः **स्रौघ्नः, माथुरः**, इत्यत्र, शेषे इति वर्तमाने, **तत्र जातः** (IV. 3. 25.)—तत्रेति सप्तमीसमर्थात् जातः इत्येतस्मिन्नर्थे यथाविहितमित्यण्प्रत्ययो भवति । **प्रावृषिकः** इत्यत्र, **प्रावृषष्ठप्** (IV. 3. 26.)—प्रावृट्छब्दात् सप्तमीसमर्थात् जात इत्येतस्मिन्नर्थे ठप्प्रत्ययो भवति । पकारस्स्वरार्थः; इकादेशः । श्रविष्ठासु जातः **श्रविष्ठः, फल्गुनः, अनूराधः, स्वातिः, तिष्यः, पुनर्वसुः, हस्तः, विशाखः, अषाढः, बहुलः**, इत्यत्र, **श्रविष्ठाफल्गुन्यनूराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्** (IV. 3. 34.)—श्रविष्ठादिभ्यश्शब्देभ्यो जातार्थे उत्पन्नस्य प्रत्ययस्य लुक् भवति । एवं श्रविष्ठा इति स्थिते, **लुक् तध्दितलुकि** (I. 2. 49.)—तध्दितलुकि सति स्त्रीप्रत्ययस्य लुक् भवति ; इति **श्रविष्ठः, फल्गुनः, अनूराधः** । श्रविष्ठासु जातः **श्राविष्ठीयः, आषाढीयः**, इत्यत्र, **श्रविष्ठाषाढाभ्यां छण् वक्तव्यः** (वा)। रोहिण्याञ्जातः **रोहिणः रौहिणः, मृगशिराः, मार्गशीर्षः** इत्यत्र, तत्र जात इत्यणि, **नक्षत्रेभ्यो बहुलम्** (IV. 3. 37.)—नक्षत्रेभ्य उत्पन्नस्य जातार्थप्रत्ययस्य बहुलं लुक् भवति । **अचि शीर्षः** (VI. 1.

62 )—अजादौ तद्धिते परतः शिरसः शीर्षादेशः । मृगशिरा इत्यत्र अल्वसन्तस्येति (VI. 4. 14.) दीर्घः ॥

23. स्रुघ्ने भवः **स्रौघ्नः**, **माथुरः**, इत्यत्र, **तत्र भवः** (IV.3.53.) इत्यण् भवति । **ग्राम्यः ग्रामीणः** इत्यत्र यखञौ । दिशि भवं **दिश्यम्, गण्यम्, पक्ष्यम्, मेध्यम्, पूग्यम्,** इत्यत्र, **दिगादिभ्यो यत्** (IV. 3. 54.)—दिगादिभ्यः प्रातिपदिकेभ्यो यत्प्रत्ययो भवति । पथि जात इति विग्रहे, **पथः पन्थ च** (IV. 3. 29.)—पथि जात इत्यादिशैषिकेऽर्थे वुन् प्रत्ययो भवति ; पथः पन्थ इत्यादेशश्च भवति । अणोऽपवादः ; **पन्थकः** । एवं दन्ते भवं **दन्त्यम्, कर्ण्यम्, ओष्ठ्यम्,** इत्यत्र, **शरीरावयवाच्च** (IV. 3. 55.)—शरीरावयववाचिनः प्रातिपदिकात् यत्प्रत्ययो भवति तत्र भव इत्येतास्मिन्नर्थे । **दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्** (IV. 3. 56.)—दृत्यादिभ्यः शब्देभ्यः ढञ्प्रत्ययो भवति तत्र भव इत्येतास्मिन्नर्थे। ढस्य एयादेशः ; **दार्तेयम्, कौक्षेयम्, कालशेयम्, वास्तेयम्, आस्तेयम्, आहेयम्** । **ग्रीवाभ्योऽण् च** (IV. 3. 57.)—ग्रीवाशब्दात् अण्प्रत्ययो भवति, चकारात् ढञ् ; ग्रीवासु भवं **ग्रैवम् ग्रैवेयम्** । **गम्भीराञ्ञ्यः** (IV. 3. 58.)—गम्भीर-शब्दात् ञ्यप्रत्ययो भवति ; **गाम्भीर्यम्** । **बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्** (वा.) इति—**बाह्यम्, दैव्यम्, पाञ्चजन्यम्** । अन्तर्गेहं गेहे इति विभक्त्यर्थेऽव्ययीभावः ; तत्र भवम् **आन्तर्गेहिकम्, आन्तर्मालिकम्,** इत्यत्र, **अव्ययीभावाच्च** (IV 3 59.) इति वर्तमाने, **अन्तःपूर्वपदाट्ठञ्** (IV. 3. 60.)—

अन्तःपूर्वपदादव्ययीभावात् ठञ्प्रत्ययो भवति तत्र भव इत्यर्थे। **आध्यात्मिकम्, आधिदैविकम्, आधिभौतिकम्,** इत्यत्र, आत्मनि अध्यात्मम् इति विग्रहे विभक्त्यर्थेऽव्ययीभावः। **अव्ययीभावे शरत्प्रभृतिभ्यः** (V. 4. 17.) इति वर्तमाने, **अनश्च** (V. 4. 108.)—अन्नन्तादव्ययीभावात् समासान्तष्टच्प्रत्ययो भवति। नस्तद्धिते (VI. 4 144.) इति टिलोपः। अध्यात्मे भवम् इति विग्रहे, **अध्यात्मादिभ्य उपसंख्यानम्** (वा.)—इति ठञ्प्रत्ययः। **अनुशतिकादीनाञ्च** (VII. 3. 20.)—अनुशतिक इत्येवमादीनामङ्गानां पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिर्भवति ञिति णिति किति च तद्धिते परतः; **आधिदैविकम्, आधिभौतिकम्। ऐहलौकिकम्, पारलौकिकम्,** इत्यत्र, **लोकोत्तरपदाच्च** (वा.)—इति ठञ् प्रत्ययः। पूर्ववदुभयपदवृद्धिः; अध्यात्मादिराकृतिगणः। समाने भवः **सामानिकः** इत्यत्र, **समानाच्च ठञ् वक्तव्यः** (वा.)। समानग्रामे भवः **सामानग्रामिकः,** इत्यत्र, **तदादेश्च** (वा.) इति भवति। **और्ध्वन्दमिकम्** इत्यत्र ऊर्ध्वशब्देन समानार्थः ऊर्ध्वन्दमशब्दः; **ऊर्ध्वन्दमाच्च** (वा.) इति ठञ्। **और्ध्वदेहिकः** इत्यत्र, **ऊर्ध्वदेहाच्च** (वा.) इति ठञ्। **मुखतीयम्, पार्श्वतीयम्,** इत्यत्र, **मुखपार्श्वाभ्यां तसन्ताभ्यामीयप्रत्ययो वक्तव्यः** (वा)। तसिलादेस्तद्धितस्य एधाच्पर्यन्तस्य अव्ययसंज्ञायाम्, **अव्ययानां भमात्रे टिलोपो वक्तव्यः** (वा. VI. 4. 144.), इति टिलोपः। बहिषष्टिलोपश्चेति वचनम् (वा IV. 1. 85.) टिलोपस्य अनित्यत्वज्ञापनार्थम्; तेन

आरात् भवम् **आरातीयम्** इत्यत्र टिलोपाभावः ; शश्वत् भवं **शाश्वतम्** । **जिह्वामूलीयम्, अङ्गुलीयम्**, इत्यत्र, जिह्वामूले भवम् इति विग्रहे, **जिह्वामूलाङ्गुलेश्छः** (IV. 3. 62.)—जिह्वामूलाङ्गुलिशब्दाभ्यां छप्रत्ययो भवति तत्र भव इत्यर्थे । **कवर्गीयः, पवर्गीयः**,इत्यत्र, कवर्गे भवः इतिवत् विग्रहे, **वर्गान्ताच्च**(IV.3.63.)—वर्गान्ताच्च प्रातिपदिकात् छप्रत्ययो भवति तत्र भव इत्यर्थे । **अशब्दे यत्खावन्यतरस्याम्** (IV. 3. 64.)—वर्गान्तादित्येव ; शब्दादन्यस्मिन् अर्थे यत्खौ प्रत्ययौ विभाषा भवतः; **वासुदेववर्ग्यः, वासुदेववर्गीणः** । पक्षे छः ; **वासुदेववर्गीयः** । अशब्दे इति किम् ? कवर्गीयो वर्णः । **कर्णललाटात् कनलङ्कारे** (IV. 3. 65.)—कर्णललाटशब्दाभ्यां कन्प्रत्ययो भवति अलङ्कारेऽभिधेये ; **कर्णिका, ललाटिका** । **सौपम्, तैङम्**, इत्यत्र सुपां व्याख्यानमितिवत् विग्रहे, **तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः** (IV. 3. 66.)—तस्येति षष्ठीसमर्थेभ्यो व्याख्यातव्यनामवाचिभ्यश्शब्देभ्यो व्याख्याने अभिधेये यथाविहितं प्रत्ययो भवतीत्यण् प्रत्ययः ॥

24. स्रुघ्नादागतः **स्रौघ्नः, माथुरः**, इत्यत्र, **तत आगतः** (IV 3. 74.)—तत इति पञ्चमीसमर्थादागत इत्यस्मिन्नर्थे यथाविहितमित्यण्प्रत्ययो भवति । ग्रामादागतः **ग्राम्यः ग्रामीणः** ; यखञौ । शुल्कशालाया आगतः **शौल्कशालिकः, आपणशालिकः**, इत्यत्र, **ठगायस्थानेभ्यः** (IV. 3. 75.)—आय इति स्वामिग्राह्यो भाग उच्यते ; स यस्मिन्नुत्पद्यते तदायस्थानं नाम ;

आयस्थानवाचिभ्यश्शब्देभ्यष्ठक्प्रत्ययो भवति तत आगत इत्यस्मिन्नर्थे । **पैतामहकः, आचार्यकः,** इत्यत्र, पितामहादागत इति विग्रहे, **विद्यायोनिसम्बन्धेभ्यो वुञ्** (IV. 3. 77.)—विद्यायोनिकृतस्सम्बन्धो येषां ते विद्यायोनिसम्बन्धाः तद्वाचिभ्यः वुञ् भवति । **ऋतष्ठञ्** (IV. 3. 78.)—ऋकारान्तेभ्यो विद्यायोनिसम्बन्धेभ्यः आगत इत्यस्मिन्नर्थे ठञ्प्रत्ययो भवति; **हौतृकः, मातृकः** । इसुसुक्तान्तात् कः (VII. 3. 51.) इति कः । पितुरागतं **पित्र्यम् पैतृकम्** इत्यत्र, **पितुर्यच्च** (IV. 3. 79.)—पितृशब्दाद्यत्प्रत्ययो भवति तत आगत इत्यर्थे; चकारात् ठञ् च । पित्र्यमित्यत्र, **रीङ् ऋतः** (VII. 4. 27.)—ऋकारान्ताङ्गस्याकृत्सार्वधातुकयकारे च्वौ च परतः रीङ् इत्ययमादेशो भवति; ङकारोऽन्तादेशार्थः । यस्येति लोपः । हिमवतः प्रभवति **हैमवती**, इत्यत्र. **प्रभवति** (VI. 3. 83.)—ततः प्रभवति इत्यर्थे यथाविहितं प्रत्ययो भवति इत्यण् । स्रुघ्नं गच्छति पन्थाः दूतो वा **स्रौघ्नः, माधुरः**, इत्यत्र, **तद्गच्छति पथिदूतयोः** (IV. 3. 85.)—तदिति द्वितीयासमर्थात् गच्छतीत्यर्थे यथाविहितं प्रत्ययो भवति, योऽसौ गच्छति पन्थाश्चेत् स दूतो वा; इत्यण् । **अभिनिष्क्रामति द्वारम्** (IV. 3. 86.)—तदित्येव; द्वितीयासमर्थात् अभिनिष्क्रामति इत्यर्थे यथाविहितं प्रत्ययो भवति, यत्तदभिनिष्क्रामति द्वारं चेत् भवति । इत्यण्; स्रुघ्नमभिनिष्क्रामति कान्यकुब्जद्वारं **स्रौघ्नम्** । **अधिकृत्य कृते ग्रन्थे** (IV. 3. 87.)—तदधिकृत्य प्रस्तुत्य कृतम् इत्यर्थे यथाविहितं प्रत्ययो भवति ग्रन्थविषये । इत्यण्; सुभद्रामधिकृत्य

कृतो ग्रन्थः **सौभद्रः**, **भारतम्** आख्यानम्, **शाकुन्तलम्** नाटकम्, इत्यादि। **शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः** (IV.3.88.)–अधिकृत्य कृतग्रन्थविषये शिशुक्रन्दादीनां छप्रत्ययो भवति; **शिशुक्रन्दीयः**, **यमसभीयः**, **वाक्यपदीयम्**, **इन्द्रजननीयम्**, **प्रद्युम्नागमनीयम्**, इत्यादि। स्रुघ्नो निवासोऽस्य **स्रौघ्नः**, **माथुरः**, इत्यत्र, **सोऽस्य निवासः** (IV. 3. 89.)—स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितमित्यण्। तथा **ग्राम्यः ग्रामीणः**। **अभिजनश्च** (IV. 3. 90.)—स इति प्रथमासमर्थात् अस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति अभिजनविषये। अभिजनः पूर्वबन्धूषितो देशः; स्रुघ्नोऽभिजनो यस्य सः **स्रौघ्नः**, **माथुरः**, **शाक्यः**। **भक्तिः** (IV. 3. 95.)—स इति प्रथमासमर्थात् अस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति भक्तिश्चेत् तत् प्रथमासमर्थम्। स्रुघ्नो भक्तिरस्य **स्रौघ्नः**, **वासुदेवकः**, **माहाराजिकः**, **आपूपिकः**॥

२५. माथुरेण प्रोक्ता **माथुरी** वृत्तिः, **पाणिनीयम्** सूत्रम्, **आपिशलम्** शास्त्रम्, इत्यत्र, **तेन प्रोक्तम्** (IV. 3. 101.)—तेनेति तृतीयासमर्थात् प्रोक्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। कलापिनोऽण् (IV. 3. 108) इत्यत्र अण्ग्रहणमाधिकविधानार्थं; तेन माथुरी वृत्तिरित्यत्र वृद्धाच्छः (IV. 2. 114.) इति छं बाधित्वा अण् भवति; टिड्ढाणञिति ङीप्। पणोऽस्यास्तीति पणी; पणिनोऽपत्यं पाणिनः; पाणिनस्यापत्यं पाणिनो वा गोत्रं पाणिनः; गोत्रपाणिनस्यापत्यं पणिनो युवा पाणिनिः। अत इञ्

प्रत्ययः । वृद्धिर्यस्येति वृद्धसंज्ञायां वृद्धाच्छः इति पाणिनिशब्दाच्छ-प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन्नर्थे । आपिशलिशब्दात् **इञश्च** (IV. 2. 112.)—इञन्तात्प्रातिपदिकात् अण्प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन्नर्थे ; छस्यापवादः । **पाणिनीयाः** छात्राः, इत्यत्र पाणिनीयमधीयते विदन्ति वा इति विग्रहे, तदधीते इत्यण् । तस्य **प्रोक्ताल्लुक्** (IV. 2. 64.)—तेन प्रोक्तमिति विहितः प्रत्ययः प्रोक्तशब्देनोच्यते ; प्रोक्तप्रत्ययान्तादधीते वेद इत्यनयोरर्थयोः विहितस्य तद्धितप्रत्ययस्य लुक् भवति । इति अणभावात् **पाणिनीया** ब्राह्मणी । तित्तिरिणा प्रोक्तं **तैत्तिरीयम्, वारतन्तवीयम्, खाण्डिकीयम्, औखीयम्**, इत्यत्र, **तित्तिरिवरतन्तुखण्डिकोखाच्छण्** (IV. 3. 102.)—तित्तिर्यादिभ्यश्छण्प्रत्ययो भवति तेन प्रोक्तमित्येतस्मिन्नर्थे । वरतन्तुशब्दादोर्गुणः ; औखीयमित्यत्र यस्येति अकारलोपः । **काश्यपकौशिकाभ्यां णिनिः** (IV. 3. 103.)—काश्यपकौशिकशब्दाभ्याम् ऋषिभ्यां प्रोक्तार्थे णिनिप्रत्ययो भवति । प्रोक्ताल्लुक् ; काश्यपेन प्रोक्तम् अधीयते **काश्यपिनः** । **कलापिवैशम्पायनान्तेवासिभ्यश्च** (IV. 3. 104.)—कलाप्यन्तेवासिनां वैशम्पायनान्तेवासिनां च ये वाचकाः शब्दाः तेभ्यो णिनिप्रत्ययो भवति प्रोक्तार्थे। इति हरिद्रुणा प्रोक्तम् अधीयते **हारिद्रविणः**, पलङ्गेन प्रोक्तमधीयते **पालङ्गिनः** ।

हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू ।
उलपेन चतुर्थेन कालापकमिहोच्यते ।
आलम्बिश्चरकः प्राचां पलङ्गकमलावुभौ ।

ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे ।
श्यामायन उदीच्येषु उक्तः कठकलापिनोः ॥

चरक इति वैशम्पायनस्याख्या ; तत्सम्बन्धेन सर्वे तदन्तेवासिनः चरका इति कथ्यन्ते । **पुराणप्रोक्तेषु ब्राह्मणकल्पेषु** (IV. 3. 105.)—तृतीयासमर्थात् प्रोक्ते णिनिप्रत्ययो भवति, यत् प्रोक्तं पुराणप्रोक्ताश्चेत् ते ब्राह्मणकल्पा भवन्ति । इति भल्लुना प्रोक्तं ब्राह्मणमधीयते **भाल्लविनः, पैङ्गी** कल्पः । पुराणप्रोक्तेष्विति किम् ? याज्ञवल्कानि ब्राह्मणानि, आश्मरथ्यः कल्पः । **पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः** (IV. 3. 110.)—आभ्यां प्रोक्तार्थे णिनिप्रत्ययो भवति । भिक्षुनटसूत्रयोरिति यथासंख्यं प्रत्यार्थविशेषणम् ; सूत्रशब्दः प्रत्येकमभिसंबध्यते ; पाराशर्येण प्रोक्तं सूत्रमधीयते **पाराशरिणः** भिक्षवः, **शैलालिनः** नटाः । **तेनैकदिक्** (IV. 3. 112.)—तेनेति तृतीयासमर्थात् एकदिगित्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । एकदिक् तुल्यदिक् समानदिक् इत्यर्थः ; सुदाम्ना एकदिक् **सौदामिनी,** हिमवता **हैमवती,** त्रिककुदा **त्रैककुदी** ॥

26. **उपज्ञाते** (IV. 3. 115.)—तेनेत्येव ; तृतीयासमर्थात् उपज्ञातमित्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । विनोपदेशेन ज्ञातम् उपज्ञातं स्वयमभिसंबद्धमित्यर्थः; आपिशलिना उपज्ञातम् **आपिशलं दुष्करणम्, पाणिनीयमकालकं व्याकरणम्, काशकृत्स्नं गुरुलाघवम्** । **कृते ग्रन्थे** (IV. 3. 116.)—तेनेति तृतीयासमर्थात् कृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्

कृतं ग्रन्थश्चेत् स भवति। इति वररुचिना यः कृतः स **वाररुचो** ग्रन्थः । उत्पादितं कृतम् ; विद्यमानमेव ज्ञातम् उपज्ञातम् । **संज्ञायाम्** (IV. 3. 117.)—अग्रन्थार्थमिदम् ; तृतीयासमर्थात् कृत इत्यर्थे प्रत्ययो भवति समुदायेन चेत् संज्ञा ज्ञायते : माक्षिकाभिः कृतं **माक्षिकम्** मधु। **कुलालादिभ्यो वुञ्** (IV. 3. 118.)—तेन कृतमित्येतस्मिन्नर्थे कुलालादिभ्यः वुञ्प्रत्ययो भवति संज्ञायां गम्यमानायाम् ; कुलालेन कृतं **कौलालकम्** पात्रम्, **कार्मारकम्** कर्म । **तस्येदम्** (IV. 3. 120.)—तस्येति षष्ठीसमर्थात् इदमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ; इन्द्रस्येदम् **ऐन्द्रम्**, राष्ट्रस्येदं **राष्ट्रियम्** ।

तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत् ।
उत्सर्गश्शेष एवासौ वृद्धान्यस्य प्रयोजनम् ॥

तस्मात् तस्यापत्यम् (IV. 1. 92.) इत्यस्य भानवः, श्यामगवः, इत्यादीन्येव उदाहरणानि भवन्ति। **रथाद्यत्** (IV. 3. 121.)—रथशब्दात् तस्येदमित्यर्थे यत्प्रत्ययो भवति ; रथस्येदं **रथ्यम्** चक्रम्; रथाङ्ग एव इष्यते ॥

27. **तस्य विकारः** (IV.3.134.)—तस्येति षष्ठीसमर्थात् विकार इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। प्रकृतेरवस्थान्तरं विकारः ; मृत्तिकायाः विकारः **मार्त्तिकः** । अश्मनो विकार इति विग्रहे, अणि कृते, नस्तद्धिते (VI. 4. 144.) इति टिलोपे प्राप्ते, अन् (VI. 4. 167.) इत्यनेन अन्नन्तस्य अणि परतः टिलोपाभावे, तदपवादः—**अश्मनो विकार उपसंख्यानम्** (वा. VI.

4. 144.) इत्यत्रापि टिलोपः; **आश्मः**। विकारः इति किम्? अश्मनः इदम् आश्मनम्। **त्रपुजतुनोः षुक्** (IV. 3. 138.)—त्रपुजतुशब्दाभ्यां विकारार्थे अण् भवति, तत्सन्नियोगेन षुगागमश्च; **त्रापुषम्** पात्रम्, **जातुषम्** गृहम्। **अवयवे च प्राण्योषधिवृक्षेभ्यः** (IV. 3. 135.)—प्राण्योषधिवृक्षवाचिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्यः यथाविहितं प्रत्ययो भवति अवयवेऽर्थे; चकाराद्विकारे च। इति कपोतस्य विकारः अवयवो वा **कापोतः**, **मौर्वम्** काण्डं भस्म वा, **कारीरम्** काण्डं भस्म वा। **मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः** (IV. 3. 143.)—प्रकृतिमात्राद्वा मयट् प्रत्ययो भवति, भक्ष्याच्छादनवर्जितयोः विकारावयवयोरर्थयोः भाषायाम्। प्राण्योषधिवृक्षेभ्यः विकारावयवयोः, अन्यत्र विकारमात्रे भवति; **मूर्वामयम् मौर्वम्, कपोतमयम् कापोतम्, करीरमयम् कारीरम्**; विकारमात्रे—**जतुमयम्**। अत्र भाषायामिति किम्? बैल्वः खादिरो वा यूपः। अभक्ष्याच्छादनयोरिति च किम्? मौद्गः सूपः मासूरो वा, कार्पासमाच्छादनम्। **गोश्च पुरीषे** (IV. 3. 145.)—गोशब्दात् पुरीषेऽभिधेये मयट्प्रत्ययो भवति; गोः पुरीषं **गोमयम्**। पुरीषं न विकारः नाप्यवयवः। विकारावयवयोस्तु **गोपयसोर्यत्** (IV. 3. 16)—गोपयश्शब्दाभ्यां यत्प्रत्ययो भवति विकारावयवयोरर्थयोः। इति **गव्यम्** पयः, **पयस्यम्** दधि। **फले लुक्** (IV. 3. 163)—विकारावयवयोरुत्पन्नस्य फले लुक् भवति। आमलक्याः फलमिति विग्रहे, मयटो लुकि आमलकी इति जाते, लुक् तद्धितलुकि (I. 2. 49.) इति स्त्रीप्रत्ययस्य लुक्; **आमलकम्**,

**बदरम्, चूतम्** । **प्लक्षादिभ्योऽण्** (IV. 3. 164.) इति विधानसामर्थ्यात् अत्र लुक् न भवति ; **प्लाक्षम्, नैयग्रोधम्** । **जम्ब्वा वा** (IV. 3. 165.)—जम्बूशब्दात् फलेऽभिधेये अण् वा भवति ; **जाम्बवम्** फलम् । अणभावे, **ओरञ्** (IV. 3. 139.) इति प्राप्तस्य अञः लुकि, **जम्बु** फलम् । **लुप् च** (IV. 3. 166.)—जम्ब्वाः फले वाच्ये प्रत्ययस्य वा लुप् भवति । इति लुपि, **लुपि युक्तवद्व्यक्तिवचने** (I. 2. 51.)—लुपि सति प्रकृतिवत् लिङ्गवचने स्तः ; **जम्बूः** फलम् ॥

28. **प्राग्वहतेष्ठक्** (IV. 4. 1.)—तद्वहतीति वक्ष्यति ; ततः प्राक् येऽर्थाः तेषु ठक्प्रत्ययो भवति । **तदाहेति माशब्दादिभ्य उपसंख्यानम्** (वा.)—इति मा शब्दः कारि इति य आह स **माशब्दिकः**। एवं **नैत्यशब्दिकः, कार्यशब्दिकः** ; वाक्यादेतत्प्रत्ययविधानम् । **आहौ प्रभूतादिभ्यः** (वा.)—इति प्रभूतमाह **प्राभूतिकः, पार्याप्तिकः** । स्वागतमाहेति विग्रहे, ठकि, **स्वागतादीनां च** (VII. 3. 7.) इति ऐचो निषेधः ; **स्वागतिकः** । सुस्नातं पृच्छति **सौस्नातिकः, सौखशायनिकः**, इत्यत्र, **पृच्छतौ सुस्नातादिभ्यः** (वा.) इति ठक् । सौखशायनिकः इत्यत्र अनुशतिकादीनां च (VII. 3. 20.) इति उभयपदवृध्दिः । परदारान् गच्छति **पारदारिकः, गौरुतल्पिकः**, इत्यत्र, **गच्छतौ परदारादिभ्यः** (वा.) इति ठक् । **तेन दीव्यति खनति जयति जितम्** (IV. 4. 2.)—तेनेति तृतीयासमर्थात् दीव्यति खनति जयति जितम् इत्येतेष्वर्थेषु ठक्

प्रत्ययो भवति—इति अक्षैः दीव्यति **आक्षिकः**, अभ्र्या खनति **आभ्रिकः**, शलाकाभिः जयति **शालाकिकः**, ताभिरेव जितं **शालाकिकम्** । प्रत्ययार्थे संख्याकालपुरुषा न विवक्षिताः, कारकमेव विवक्षितम् । दध्ना संस्कृतं **दाधिकम्, शाङ्गबेरिकम्, सार्पिष्कम्, मारीचिकम्, पायसिकम्, ताक्रिकम्,** इत्यत्र, तेनेति वर्तमाने, **संस्कृतम्** (IV. 4. 3.)—तेनेति तृतीयासमर्थात् संस्कृतमित्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । सत उत्कर्षाधानं संस्कारः ; सार्पिष्कमित्यत्र, **सोऽपदादौ** (VIII. 3. 38.) इति वर्तमाने, **इणः षः** (VIII. 3. 39.)—इण उत्तरस्य विसर्जनीयस्य षकारादेशो भवति कुप्वोरपादाद्योः परतः । इसुसुक्तान्तात् कः (VII. 3. 51.) इति ठस्य कः । **तरति** (IV. 4. 5.)—तेनेति तृतीयासमर्थात् तरतीत्यर्थे ठक्प्रत्ययो भवति । इति उडुपेन तरति **औडुपिकः** । **नौद्व्यचष्ठन्** (IV. 4. 7.)—नौशब्दात् द्व्यचश्च प्रातिपदिकात् ठन्प्रत्ययो भवति तरतीत्यर्थे ; **नाविकः, घटिकः** । षकारः सांहितिकः नानुबन्धः ; **बाहुका** स्त्री । **चरति** (IV. 4.8.)—तेनेति तृतीयासमर्थात् चरति इत्यर्थे ठक् भवति । चरतिर्भक्षणे गतौ च वर्तते ; **दाधिकः, शाकटिकः** । **वेतनादिभ्यो जीवति** (IV. 4. 12.)—तेनेति तृतीयासमर्थेभ्यः वेतनादिभ्यः शब्देभ्यः जीवतीत्यर्थे ठक् प्रत्ययो भवति ; **वैतनिकः, धानुष्कः** । **वस्नक्रयविक्रयाट्ठन्** (IV. 4. 13.)—वस्नक्रयविक्रयशब्दाभ्यां ठन् भवति जीवतीत्यर्थे ; वस्नेन मूल्येन जीवति **वस्निकः, क्रयविक्रयिकः** । **क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम्** ;

तस्मात् **क्रयिकः**, **विक्रयिकः**, इति च भवति । **आयुधाच्छ च** (IV. 4. 14.)—आयुधशब्दात् जीवत्यर्थे छप्रत्ययो भवति; चात् ठन् च; **आयुधीयः**, **आयुधिकः** । **हरत्युत्सङ्गादिभ्यः** (IV.4.15.)—उत्सङ्गादिभ्यः तृतीयासमर्थेभ्यः हरतीत्यर्थे ठक् प्रत्ययो भवति; हरतिर्देशान्तरप्रापणे वर्तते; उत्सङ्गेन हरति **औत्सङ्गिकः** मर्कटः, **पैटकिकः** शाकः । **अण् कुटिलिकायाः** (IV. 4. 18.)—हरति इत्यर्थे कुटिलिकाशब्दात् अण् भवति; कुटिलिकया वक्रगत्या हरति मृगः **कौटिलिकः** व्याधम्, कुटिलिकया लोहयष्ट्या अङ्गारान् हरति **कौटिलिकः** कर्मारः । **निर्वृत्तेऽक्षद्यूतादिभ्यः** (IV. 4. 19.)—अक्षद्यूतादिभ्यः निर्वृत्ते इत्यर्थे ठक् भवति; **आक्षद्यूतिकम्** वैरम्, **आनुगातिकम्** सख्यम् । **त्रेर्मम्नित्यम्** (IV.4.20.)—ड्वितः क्त्रिः (III. 3. 88.) इत्यनेन सूत्रेण विहितयोः त्रिप्रत्ययः तदन्तात् नित्यं मप्प्रत्ययो भवति निर्वृत्ते इत्यर्थे; **पक्त्रिमम्**, **कृत्रिमम्** । नित्यग्रहणं त्रिप्रत्ययान्तस्य स्वातन्त्र्यनिवृत्त्यर्थम्; तस्मात् त्र्यन्तं नित्यं मबन्तम् । **भावप्रत्ययान्तादिमब्वक्तव्यः** (वा.); इति पाकेन निर्वृत्तं **पाकिमम्**, **त्यागिमम्**, **कुट्टिमम्** । **मार्द्दिकः** माषः इत्यत्र, मृदा संसृष्ट इति विग्रहे, **संसृष्टे** (IV. 4. 22.)—तेनेति तृतीयासमर्थात् संसृष्टेऽर्थे ठक्प्रत्ययो भवति; संसृष्टं संबन्धः । **चूर्णी** अपूपः इत्यत्र, चूर्णेन संसृष्ट इति विग्रहे, **चूर्णादिनिः** (IV. 4. 23.)—चूर्णशब्दात् संसृष्टेऽर्थे इनिप्रत्ययो भवति । लवणेन संसृष्टः इति विग्रहे, लवणात् ठकि, **लवणाल्लुक्** (IV. 4. 24.)—संसृष्टार्थे उत्पन्नस्य ठकः

लवणशब्दात् लुक् भवति । इति **लवणः** सूपः , **लवणा** यवागूः । मुद्गेन संसृष्टः इति विग्रहे, **मुद्गादण्** (IV. 4. 25.)—मुद्गशब्दात् संसृष्टेऽर्थे अण् भवति । ठकोऽपवादः ; **मौद्गः** ओदनः । **व्यञ्जनैरुपसिक्ते** (IV. 4. 26.)—व्यञ्जनवाचिभ्यः प्रातिपदिकेभ्यः उपसिक्तेऽर्थे ठक्प्रत्ययो भवति ; दध्ना उपसिक्तं **दाध्निकम्** ॥

29 ओजसा वर्तते **औजसिको राजा, साहसिको दस्युः, आम्भसिको मत्स्यः**, इत्यत्र, **ओजस्सहोऽम्भसा वर्तते** (IV. 4. 27.)—ओजस् इत्यादिभ्यश्शब्देभ्यः तृतीयासमर्थेभ्यो वर्तत इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। प्रतीपं वर्तते **प्रातीपिकः, प्रातिलोमिकः, प्रातिकूलिकः, आन्वीपिक , आनुलोमिकः, आनुकूलिकः**, इत्यत्र, **तत्प्रत्यनुपूर्वमीपलोमकूलम्** (IV. 4. 28.)—तादिति द्वितीयासमर्थेभ्यः प्रति अनु इत्येवंपूर्वेभ्यः ईपलोमकूलशब्देभ्यः वर्तत इत्यर्थे ठक्प्रत्ययो भवति । ननु च वृतिरकर्मकः; तस्य कथं कर्मणा सम्बन्धः? क्रियाविशेषणम् अकर्मकाणामपि कर्म भवति । परिमुखं वर्तत इति विग्रहे, **पारिमुखिकः** इत्यत्र, **परिमुखं च** (IV. 4. 29.)—परिमुखशब्दात् वर्तत इत्यर्थे ठक्प्रत्ययो भवति । चकारः अनुक्तसमुच्चयार्थः; **पारिपार्श्विकः** । द्विगुणं प्रयच्छति इति विग्रहे **द्वैगुणिकः, त्रैगुणिकः**, इत्यत्र, **प्रयच्छति गर्ह्यम्** (IV. 4. 30.)—प्रयच्छति इत्यर्थे द्वितीयासमर्थात् ठक्प्रत्ययो भवति गर्ह्यं चेत् तत् द्वितीयासमर्थम् । द्विगुणार्थं द्विगुणम् ; तादर्थ्यात् ताच्छब्द्यम् । गर्ह्यं किम् ? द्विगुणं प्रयच्छति अधमर्णः । **वृद्धेर्वृधुषिभावो वक्तव्यः**

(वाः); **वार्धुषिकः** । **उञ्छति** (IV. 4. 32.)—तदिति द्वितीयासमर्थात् उञ्छत्यर्थे ठक् भवति। उञ्छः पुनः भूमिपतितस्य कणशः आदानम्; यः बदराण्युञ्छति स **बादरिकः** । समाजं रक्षति इति विग्रहे, **सामाजिकः** इत्यत्र, **रक्षति** (IV. 4. 33.)—तदिति द्वितीयासमर्थात् रक्षत्यर्थे ठक्प्रत्ययो भवति । शब्दं करोति इति विग्रहे **शाब्दिकः, दार्दुरिकः,** इत्यत्र, **शब्ददर्दुरं करोति** (IV. 4. 34.)—शब्ददर्दुराभ्यां करोत्यर्थे ठक् । पक्षिणो हन्ति इति विग्रहे, **पाक्षिकः, मायूरिकः,** इत्यादौ, **पक्षिमत्स्यमृगान् हन्ति** (IV. 4. 35.)—पक्ष्यादिभ्यो द्वितीयासमर्थेभ्यः हन्त्यर्थे ठक् । स्वरूपस्य पर्यायाणां तद्विशेषाणां च ग्रहणमिष्यते । परिपन्थं तिष्ठति इति विग्रहे, **पारिपन्थिकः** इत्यत्र, **परिपन्थं च तिष्ठति** (IV. 4. 36.)—द्वितीयासमर्थात् परिपन्थात् तिष्ठत्यर्थे ठक् । दण्डमाथं धावति इति विग्रहे, **दाण्डमाथिकः, पादविकः,** इत्यादौ, **माथोत्तरपदपदव्यनुपदं धावति** (IV. 4. 37.) —माथशब्दोत्तरपदात् पदवी अनुपद इत्याभ्यां धावत्यर्थे ठक् । पूर्वपदं गृह्णाति इति **पौर्वपदिकः, औत्तरपदिकः,** इत्यत्र, **पदोत्तरपदं गृह्णाति** (IV. 4. 39.)—पदशब्द उत्तरपदं यस्य तस्मात् पदोत्तरपदात् गृह्णात्यर्थे ठक्प्रत्ययो भवति । **प्रतिकण्ठार्थललामं च** (IV. 4. 40.)—प्रतिकण्ठ अर्थ ललाम इत्येतेभ्यः तदिति द्वितीयासमर्थेभ्यो गृह्णातीत्यर्थे ठक् प्रत्ययो भवति; **प्रातिकण्ठिकः, आर्थिकः, लालामिकः** । **धार्मिकः** इत्यत्र, धर्मञ्चरतीति विग्रहे, **धर्मञ्चरति** (IV. 4. 41.)—धर्मशब्दात् द्वितीयासमर्थात् चरती-

त्यस्मिन्नर्थे ठक्प्रत्ययो भवति । **अधर्माच्चेति वक्तव्यम्** (वा); इति **आधर्मिकः** । चरतिरासेवायां नानुष्ठानमात्रे । **प्रतिपथमेति ठंश्च** (IV. 4. 42.)—प्रतिपथात् एतीत्यर्थे ठन् भवति; चात् ठक् । प्रतिपथमेति इति **प्रतिपथिकः प्रातिपथिको** वा स्यात् । **समवायान् समवैति** (IV. 4. 43.)—समवायवाचिभ्यः समवैतीत्यर्थे ठक् भवति । समवायानिति बहुवचनं तावत् स्वरूपविधिनिरासार्थम्; **सामवायिकः, सामाजिकः, सामूहिकः** । **परिषदो ण्यः** (IV. 4. 44.)—परिषद् इत्यस्य शब्दस्य समवैतीत्यर्थे ण्यप्रत्ययो भवति । ठकोऽपवादः; **पारिषद्यः** । **सेनाया वा** (IV. 4. 45.)—सेनाशब्दात् वा ण्यप्रत्ययः समवैतीत्यर्थे भवति । पक्षे ठगपि; **सैन्यः, सैनिकः** ॥

30. **तस्य धर्म्यम्** (IV. 4. 27.)—तस्येति षष्ठीसमर्थात् धर्म्येऽर्थे ठक् । धर्म्यं न्याय्यम् आचारयुक्तमित्यर्थः; आपणस्य धर्म्यम् **आपणिकम्** । **अण् महिष्यादिभ्यः** (IV. 4. 48.)—महिष्यादिशब्देभ्यः धर्म्येऽर्थे अण् प्रत्ययो भवति; **माहिषम्, पौरोहितम्** । अपूपाः पण्यमस्य **आपूपिकः, मौदकिकः**, इत्यत्र, **तदस्य पण्यम्** (IV. 4. 51.)—तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक्प्रत्ययः स्यात् यत्तत्प्रथमासमर्थं तत् पण्यश्चेद्भवति । मृदङ्गवादनं शिल्पमस्य **मार्दङ्गिकः, पाणविकः**, इत्यत्र, **शिल्पम्** (IV. 4. 55.)—तदिति प्रथमासमर्थादस्य शिल्पमित्यर्थे ठक्प्रत्ययः । शिल्पं हि कौशलम् । अत्र मृदङ्गवादने वर्तमानः मृदङ्गशब्दः प्रत्ययमुत्पादयति । असिः प्रहरणमस्य **आसिकः, धानुष्कः**, इत्यत्र, **प्रहरणम्** (IV. 4. 47.)

—तदिति प्रथमासमर्थादस्य प्रहरणमित्यस्मिन्नर्थे ठक् भवति । अस्तीति मतिरस्य **आस्तिकः**, **नास्तिकः**, **दैष्टिकः**, इत्यत्र, **अस्तिनास्तिदिष्टं मतिः** (IV. 4. 60.)—अस्त्यादिभ्यः अस्य मतिरित्यस्मिन्नर्थे ठक्प्रत्ययो भवति । न च मतिसत्तामात्रे प्रत्यय इष्यते ; परलोकोऽस्तीति मतिरस्य **आस्तिकः**, तद्विपरीतो **नास्तिकः**; एवं प्रमाणानुवादिनी मतिरस्य **दैष्टिकः**, प्रामाणिक इत्यर्थः । मोदकभक्षणं शीलमस्य **मौदकिकः**, **शाष्कुलिकः**, इत्यत्र, **शीलम्** (IV. 4. 61.)—तदस्य शीलमित्यर्थे ठक् प्रत्ययो भवति; शीलं तु स्वभावः; भक्षणक्रिया तद्विशेषणं च शीलं तद्धितवृत्तावन्तर्भवति । **छत्रादिभ्यो णः** (IV. 4. 62.)—छत्रादिभ्यः प्रातिपदिकेभ्यः णप्रत्ययो भवति शीलार्थे; छत्रं शीलमस्य **छात्रः**। छादनादावरणात् छत्रम्; गुरुकार्येष्ववहितः सन् तच्छिद्रावरणप्रवृत्तो यः छत्रशीलः सः छात्रः शिष्यः। एवमेव **तापसः**, **चौरः**, इत्यादि ॥

31. अपूपभक्षणं यस्य वा हितं स **आपूपिकः**, **शाष्कुलिकः**; **मौदकिकः** इत्यत्र, **हितं भक्षाः** (IV.4.65.)—तदस्येत्येव; तदिति प्रथमासमर्थात् अस्येति षष्ठ्यर्थे ठक् भवति ; यत् प्रथमासमर्थं हितं चेत् तत् भवति, तत् च भक्षाः । **तदस्मै दीयते नियुक्तम्** (IV. 4. 66.)—तदिति प्रथमासमर्थात् अस्मै इति चतुर्थ्यर्थे ठक्, यत् प्रथमासमर्थं तच्चेत् दीयते नियुक्तम् । अग्रे भोजनमस्मै नियुक्तं नित्यं दीयते **आग्रभोजनिकः** । शुल्कशालायां नियुक्तः **शौल्कशालिकः**, **आपणिकः**, **दौवारिकः**, इत्यत्र, **तत्र नियुक्तः** (IV. 4. 69.)—तत्रेति सप्तमीसमर्थान्नियुक्त इत्येतस्मिन्नर्थे ठक्

प्रत्ययो भवति; नियुक्तोऽधिकृतः । व्यापारित इत्यर्थः । दौवारिक इत्यत्र, **द्वारादीनाञ्च** (VII. 3. 4.)—द्वारादीनां शब्दानां यकारवकाराभ्यामुत्तरस्याचामादेरचो वृद्धिर्न भवति; ताभ्याञ्च यकारवकाराभ्यां पूर्वमैजागमो भवति । **अगारान्ताट्ठन्** (IV. 4. 70) —अगारशब्दान्तात् ठन् भवति तत्र नियुक्त इत्येतस्मिन्नर्थे। ठकोऽपवादः; देवागारे नियुक्तः **देवागारिकः**, **कोष्ठागारिकः** । **कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति** (IV. 4. 72.)— कठिनशब्दान्तात् प्रस्तारसंस्थानशब्दाभ्यां च तत्र व्यवहरति इत्यर्थे ठक् भवति । व्यवहारः क्रियातत्त्वम् ; वंशकठिने व्यवहरति **वांशकठिनिकः**, **प्रास्तारिकः**, **सांस्थानिकः**। **निकटे वसति** (IV.4.73.) —निकटशब्दात् वसत्यर्थे ठक्। यस्य शास्त्रतः निकटवासः तत्रायं विधिः; निकटे वसति **नैकटिकः** भिक्षुः ॥

32. **प्राग्घिताद्यत्** (IV. 4. 75.)—तस्मै हितमिति वक्ष्यति; अतः प्राक् यदिति प्रत्ययोऽधिक्रियते । रथं वहतीति विग्रहे **रथ्यः**, **युग्यः**,**प्रासङ्ग्यः**, इत्यत्र **तद्वहति रथयुगप्रासङ्गम्** (IV 4.76.) —तदिति द्वितीयासमर्थेभ्यो रथादिशब्देभ्यो वहतीत्यस्मिन्नर्थे यत्प्रत्ययो भवति । धुरं वहति इति **धुर्यः** **धौरेयः** इत्यत्र, **धुरो यड्ढकौ** (IV. 4. 77.)—धुरित्येतस्माद्वहतीत्यस्मिन्नर्थे यत् ढक् च प्रत्ययौ भवतः । अत्र हलि च (VIII. 2. 77.) इति दीर्घत्वे प्राप्ते, **न भकुर्छुराम्** (VIII . 2. 79.) - रेफवकारान्तस्य भस्य कुर् छुर् इत्येतयोश्च उपधायाः दीर्घो न भवति । यः **सर्वधुरीणः**, स सर्वधुरां वहतीति विग्रहे, **खस्सर्वधुरात्** (IV. 4. 78.)—सर्वधुरा-

शब्दात् द्वितीयासमर्थात् वहतीत्यस्मिन्नर्थे खप्रत्ययो भवति । **एकधुरीणः एकधुरः** इत्यत्र, एकधुरां वहतीति विग्रहे, **एकधुराल्लुक् च** (IV. 4. 79.)—एकधुराशब्दात् द्वितीयासमर्थात् वहतीत्यस्मिन्नर्थे खप्रत्ययो भवति; वचनसामर्थ्यात् पाक्षिकः तस्य लुक् । **शाकटः** इत्यत्र. शकटं वहतीति विग्रहे, **शकटादण्** (IV. 4. 80.)—शकटशब्दात् द्वितीयासमर्थात् वहतीत्येतस्मिन्नर्थे अण् प्रत्ययो भवति। **हालिकः, सैरिकः**, इत्यत्र, हलं वहतीति विग्रहे, **हलसीराट्ठक्** (IV. 4. 81.)—हलसीरशब्दाभ्यां द्वितीयासमर्थाभ्यां वहतीत्यस्मिन्नर्थे ठक् प्रत्ययो भवति । पादौ विध्यन्ति इति **पद्याः**, एवमेव **ऊरव्याः**, इत्यत्र, **विध्यत्यधनुषा** (IV.4.83.)—तदिति द्वितीयासमर्थात् विध्यत्यर्थे यत्प्रत्ययो भवति, न चेत् तस्मिन् कर्मणि धनुः करणं भवति । **धनगणं लब्धा** (IV.4 84.)—धन गण इत्याभ्यां शब्दाभ्यां लब्धेत्यर्थे यत्प्रत्ययः; धनं लब्धा **धन्यः**, गणं लब्धा **गण्यः** । लब्धेति-तृन्नन्तम् ; तेन द्वितीया युज्यते । **वशं गतः** (IV.4.86.)—वश इति शब्दात् गत इत्यर्थे यत् प्रत्ययो भवति; **वश्यः** । **पदमस्मिन् दृश्यम्** (IV.4.87.)—तदस्मिन् दृश्यमित्यर्थे पदशब्दात् यत् भवति ; **पद्यः** कर्दमः । **मूलमस्याबर्हि** (IV.4.88.)—मूलशब्दात् प्रथमासमर्थात् आबर्हि इत्यर्थे यत्। येषां मूलम् आबृह्यते उत्पाट्यते ते **मूल्याः** माषादयः । **गृहपतिना संयुक्ते ञ्यः** (IV. 4. 90.)—तेन संयुक्त इत्यर्थे ञ्यः; **गार्हपत्यः** अग्निः । **नाव्यम्** नावा तार्यमिति विग्रहे, **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु** (IV.4.91.)—नावादिभ्यश्शब्देभ्यस्तृतीयासम-

र्थेभ्यस्तार्यादिष्वर्थेषु यत् प्रत्ययो भवति। **धर्म्यः** इत्यत्र धर्मादनपेत इति विग्रहे; **धर्मपथ्यर्थन्यायादनपेते** (IV. 4 92.)—धर्मादिभ्यश्शब्देभ्योऽनपेतेऽर्थे यत्प्रत्ययो भवति। **छन्दसो निर्मिते**(IV.4.93.)---छन्दश्शब्दात् तेन निर्मित इत्यस्मिन्नर्थे यत् प्रत्ययो भवति; **छन्दस्यम्** शिल्पम्। **उरसोऽण् च**(IV.4.94.)—उरश्शब्दात् निर्मितार्थे अण्; चात् यत्प्रत्ययः; इति **औरसः औरस्यो** वा पुत्रः। **हृदयस्य प्रियः** (IV. 4. 95.)—हृदयशब्दात् षष्ठीसमर्थात् प्रिय इत्यर्थे यत्। हृदयस्य हृदादेशः; **हृद्यः**॥

33. साम्नि साधुः **सामन्यः**, **कर्मण्यः**, इत्यत्र, **तत्र साधुः** (IV. 4. 98.)—तत्रेति सप्तमीसमर्थात् साधुरित्येतस्मिन्नर्थे यत्प्रत्ययो भवति। साधुः कुशलः। नस्तद्धिते इति टिलोपे प्राप्ते, **ये चाभावकर्मणोः** (VI. 4. 168.)—अभावकर्मवाचिनि यकारादौ तद्धिते परतः अन्नन्तं शब्दरूपं प्रकृत्या भवति इति प्रकृतिभावः। **भाक्तः**, भक्ते साधुरिति विग्रहे, **भक्ताण्णः** (IV. 4. 100.)—भक्तशब्दात् साधुरित्येतस्मिन्नर्थे ण इति प्रत्ययो भवति। **पारिषद्यः**, परिषदि साधुरिति विग्रहे, **परिषदो ण्यः** (IV. 4. 101.)—परिषच्छब्दात् सप्तमीसमर्थात्साधुरित्येतस्मिन्नर्थे ण्य इति प्रत्ययो भवति। णप्रत्ययोऽत्रापीष्यते; **पारिषदः**। **प्रातिजनीनः**, **सार्वजनीनः**, इत्यत्र, **प्रतिजनादिभ्यः खञ्** (IV. 4. 99.)—प्रतिजनादिभ्यः तत्र साधुरित्यर्थे खञ्प्रत्ययो भवति। पथि साधुः **पाथेयः**, **आतिथेयः**, **वासतेयः**, **स्वापतेयः**, इत्यत्र, **पथ्यतिथिवसतिस्वपतेर्ढञ्** (IV. 4. 104.)—पथ्यादिभ्यश्शब्देभ्यस्तत्र साधुरित्यर्थे

ढञ्प्रत्ययो भवति। **सभाया यः** (IV. 4. 105.)—सभाशब्दात्तत्र साधुरित्यर्थे य इति प्रत्ययो भवति; **सभ्यः**। **समानतीर्थे वासी** (IV. 4. 107.)—साधुरिति निवृत्तम्; समानतीर्थशब्दात् वासीत्यर्थे यत्; **सतीर्थ्यः**। **सोदर्यः** इत्यत्र, **सोदराद्यः** (IV. 4. 109.)—सोदरशब्दात् यप्रत्ययः शयित इत्येतस्मिन्नर्थे। समानोदरे शयित इत्यर्थः। विभाषोदरे (VI. 3. 88.) इति विभाषा समानस्य सभावः; तस्मात् **समानोदर्यः** इति च भवति॥

34. **वत्सीयः** गोधुक्; एवं **कलभीयः**; हितयोगे चतुर्थी वक्तव्या इति वत्सेभ्यो हित इति विग्रहे, **प्राक् क्रीताच्छः** (V.1. 1.) इत्येवमधिकृत्य, **तस्मै हितम्** (V.1.5.)—तस्मै इति निर्दिष्टात् चतुर्थीसमर्थाद्धितमित्येतस्मिन्नर्थे छप्रत्ययो भवति। हितमित्युपकारकमुच्यते; छस्य ईयादेशः। दन्तेभ्यो हितमिति विग्रहे **दन्त्यम्**, **कर्ण्यम्**, इत्यत्र, **शरीरावयवाद्यत्** (V. 1. 6.)—शरीरावयववाचिभ्यश्शब्देभ्यो हितमित्येतस्मिन्नर्थे यत्प्रत्ययो भवति। **खल्यम्**, **यव्यम्**, इत्यादौ, **खलयवमाषतिलवृषब्रह्मणश्च** (V.1.7.)—खलादिभ्यश्शब्देभ्यो हितमित्येतस्मिन्नर्थे यत्प्रत्ययो भवति। ब्रह्मण्यमित्यत्र ये चाभावकर्मणोः इति प्रकृतिभावः। **आत्मनीनः**, **विश्वजनीनः**, **मातृभोगीणः**, इत्यत्र, आत्मने हितम् इतिवत् विग्रहे, **आत्मन्विश्वजनभोगोत्तरपदात् खः** (V. 1. 9.)—आत्मन् विश्वजन इत्याभ्यां भोगोत्तरपदाच्च हितमित्येतस्मिन्नर्थे खप्रत्ययः। आत्मन्नित्यत्र नस्तद्धिते इति टिलोपे प्राप्ते, **आत्माध्वानौ खे** (VI. 4. 169.)—आत्मन् अध्वन् इत्येतौ खे परतः प्रकृत्या

भवतः । **पञ्चजनीनः** इत्यत्र, **पञ्चजनाच्चेति वक्तव्यम्** (वा.) इति खप्रत्ययः । **सार्वः, पौरुषेयः,** इत्यत्र. सर्वेभ्यो हितमिति विग्रहे, **सर्वपुरुषाभ्यां णढञौ** (V. 1. 10.)—सर्वपुरुषशब्दाभ्यां चतुर्थीसमर्थाभ्यां हितमित्येतस्मिन्नर्थे णढञौ क्रमात् प्रत्ययौ भवतः । **सर्वाण्णस्य वा वचनम्** (वा); इति **सार्वम् सर्वीयम्** वा । **पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम्** (वा.); इति **पौरुषेयः** वधो विकारः समूहो वा, तेन कृते **पौरुषेयः** ग्रन्थः। **तदर्थं विकृतेः प्रकृतौ** (V. 1. 12.)—प्रकृतिः उपादानकारणम्; तस्यैव उत्तरम् अवस्थान्तरं विकृतिः; विकृतिवाचिनः प्रातिपदिकात् प्रकृतौ अभिधेयायां यथाविहितं प्रत्ययो भवति इति अङ्गारेभ्यो हितानि **अङ्गारीयाणि** काष्ठानि, **प्राकारीयाः** इष्टकाः, **शङ्कव्यम्** दारु । **तदस्य तदस्मिन् स्यादिति** (V. 1. 16.)—तदिति प्रथमासमर्थविभक्तिः; अस्य इति प्रत्ययार्थः; स्यादिति प्रकृतिविशेषणम्; इतिकरणो विवक्षार्थः; प्रथमासमर्थात् षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययो भवति यत्तत्प्रथमासमर्थं स्यात् चेत् तद्भवति। प्राकारमासाम् इष्टकानां स्यात् इति **प्राकारीयाः** इष्टकाः; **पारिखेयी** भूमिः ॥

35 **प्राग्वतेष्ठञ्** (V. 1. 18.)—तेन तुल्यं क्रिया चेद्वतिरिति वक्ष्यति; प्रागेतस्मात् ठञ् अधिकृतो भवति इति **पारायणिकः, सांशयिकः** । **आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्** (V. 1. 19.)—तदर्हतीति वक्ष्यति; प्रागेतस्मात् ठक् भवति गोपुच्छादीन् वर्जयित्वा; निष्केण क्रीतं **नैष्किकम्** । अगोपुच्छसंख्यापरिमाणादिति किम्? गोपुच्छेन क्रीतं गौपुच्छिकम् इत्यादौ ठञ् । संख्या-

परिमाणयो: को विशेष: ? भेदगणनं संख्या एकत्वादि ; आरोह-परिणाहमानं परिमाणं प्रस्थादि ।

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वत: ।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वत: ॥

**शताच्च ठन्यतावशते** (V. 1. 21.)—आर्हीयेऽर्थे शतात् ठन्यतौ प्रत्ययौ भवत: । इति शतेन यत् क्रीतं तत् **शतिकम् शत्यं** वा । अशते इति किम् ? शतं परिमाणम् अस्य शतकं निदानम् । सप्तत्या क्रीतं **साप्ततिकम्, आशीतिकम्** इत्यत्र, आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् इत्यधिकृत्य, **तेन क्रीतम्** (V. 1. 37.)—तेनेति तृतीयासमर्थात् क्रीतमित्येतस्मिन्नर्थे ठक् इति प्रत्ययो भवति । पञ्चभि: क्रीत: **पञ्चक:, सप्तक:**, इत्यत्र, **संख्याया अतिशदन्ताया: कन्** (V. 1. 22.)—अत्यन्ताया अशदन्तायाश्च संख्याया: आर्हीयेष्वर्थेषु कन् प्रत्ययो भवति । ठञोऽपवाद: ॥

36 **तस्य निमित्तं संयोगोत्पातौ** (V. 1. 38.)—तस्येति षष्ठीसमर्थात् निमित्तार्थे यथाविहितं प्रत्ययो भवति, यत्तन्निमित्तं संयोगश्चेत् स भवति उत्पातो वा । शतस्य निमित्तं **शत्य:** धनिकसंयोग:, **शतिक:** वा ; सहस्रस्य निमित्तं दक्षिणाक्षिस्पन्दनं **साहस्रम्** । **वातपित्तश्लेष्मभ्य: शमनकोपनयोरुपसंख्यानम्** (वा); इति **वातिकम्, पैत्तिकम्, श्लैष्मिकम्** । **सर्वभूमिपृथिवीभ्यामणञौ** (V. 1. 41.)—आभ्यां यथाक्रमम् अणञौ भवत: निमित्तार्थे । इति सर्वभूमेर्निमित्तं संयोग उत्पातो वा **सार्वभौम:; पार्थिव:** । **तस्येश्वर:** (V. 1. 42.)—षष्ठीसमर्थाभ्याम् आभ्याम्

ईश्वरार्थे अणञौ ; राजा **सार्वभौमः पार्थिवः**, पुनः पण्डितः । **लोकसर्वलोकाट्ठञ्** (V. 1. 44.)—आभ्यां विदितार्थे ठञ् ; **लौकिकः, सार्वलौकिकः** । प्रस्थस्य वापः क्षेत्रं **प्रास्थिकम्, द्रौणिकम्**, इत्यत्र, **तस्य वापः** (V. 1. 45.)—उप्यते अस्मिन् इति वापः क्षेत्रम् ; तस्येति षष्ठीसमर्थाद्वाप इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययः । **तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते** (V. 1. 47.)—तदिति प्रथमासमर्थात् अस्मिन् इति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं वृद्ध्यादि चेत्तद्दीयते । इति पञ्च अस्मिन् वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते इति **पञ्चकः** व्यवहारः; एवं **शत्यः शतिकः, साहस्रः** । **चतुर्थ्यर्थे उपसंख्यानम्** (वा.) ; इति--पञ्चास्मै वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते इति **पञ्चकः** देवदत्तः । **तद्धरति वहत्यावहति भाराद्वंशादिभ्यः** (V. 1. 50.)—तदिति द्वितीयासमर्थात् हरतीत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति ; वंशादिभ्यः परो यो भारः तदन्तात् प्रातिपदिकादेव स भवति । इति वंशभारं हरति वहति आवहति वा **वांशभारिकः, ऐक्षुभारिकः**, इत्यादि । **संभवत्यवहरति पचति** (V. 1. 52.)—तदिति द्वितीयासमर्थात् संभवतीत्याद्यर्थेषु यथाविहितं प्रत्ययो भवति । प्रस्थं संभवति अवहरति पचति वा **प्रास्थिकः** । एवं **खारीकः, द्रौणी, द्रौणिकी** । **सोऽस्यांशवस्नभृतयः** (V. 1. 56.)—स इति प्रथमासमर्थात् अस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः, यत्तत्प्रथमासमर्थम् अंशवस्नभृतयश्चेत् ता भवन्ति । इति पञ्च अस्य अंशो वस्नो भृतिर्वा इति **पञ्चकः**;

एवमेव **शत्यः शतिकः, साहस्रः** । वर्षशतं परिमाणमस्य **वार्षशतिकम्** सत्रम्, इत्यत्र, **तदस्य परिमाणम्** (V. 1. 57.)—तदिति प्रथमासमर्थादस्य परिमाणमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति ॥

37. श्वेतच्छत्रमर्हति इति **श्वैतच्छत्रिकः वास्त्रयुगिकः**, इत्यत्र, **तदर्हति** (V. 1. 63.)—तदिति द्वितीयासमर्थात् अर्हतीत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । **दण्ड्यः, मुसल्यः, वध्यः, मेध्यः, मधुपर्क्यः**, इत्यत्र, दण्डमर्हतीति विग्रहे, **दण्डादिभ्यो यः** (V. 1. 66.)—दण्डादिभ्यश्शब्देभ्यः अर्हतीत्यस्मिन्नर्थे यप्रत्ययो भवति । ठकोऽपवादः । **छेदादिभ्यो नित्यम्** (V. 1. 64)—नित्यग्रहणं प्रत्ययार्थविशेषणम् ; छेदादिभ्यो द्वितीयासमर्थेभ्यः नित्यमर्हतीत्यर्थे यथाविहितं प्रत्ययः । इति छेदं नित्यमर्हतीति **छैदिकः**, इत्यादि । **शीर्षच्छेदाद्यच्च** (V. 1. 65.)—शीर्षच्छेदशब्दात् द्वितीयासमर्थात् नित्यमर्हत्यर्थे यत् ; चात् ठक् च । इति शिरश्छेदं नित्यमर्हतीति **शीर्षच्छेद्यः, शैर्षच्छेदिकः** इति च । **पारायणतुरायणचान्द्रायणं वर्तयति** (V. 1. 72.)—द्वितीयासमर्थेभ्यः पारायणादिभ्यः वर्तयत्यर्थे ठञ् । इति **पारायणिकः** छात्रः, **तौरायणिकः** यजमानः, **चान्द्रायणिकः** तपस्वी । **संशयमापन्नः** (V. 1. 73.)—संशयशब्दात् आपन्नार्थे ठञ् ; **सांशयिकः** स्थाणुः । योजनं गच्छतीति विग्रहे, **यौजनिकः** इत्यत्र, **योजनं गच्छति** (V. 1. 74.)—योजनशब्दात् द्वितीयासमर्थात् गच्छतीत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति । **क्रोशशतयोजनशतयोरुपसंख्यानम्**

इति (वा.); **क्रौशशतिकः, यौजनशतिकः** । **ततोऽभिगमनमर्हतीति च** (वा.) ; इति **क्रौशशतिकः** वा **यौजनशतिकः** आचार्यः । पन्थानङ्गच्छति इति **पथिकः** इत्यत्र, **पथः ष्कन्** (V. 1.75.)—पथिन् इति शब्दात् द्वितीयासमर्थात् गच्छतीत्यस्मिन्नर्थे ष्कन् प्रत्ययो भवति । षकारो ङीषर्थः ; **पथिकी** । नित्यं पन्थानङ्गच्छतीति विग्रहे, **पान्थः** इत्यत्र, **पन्थो ण नित्यम्** (V. 1. 76.)—पथिन्शब्दस्य पन्थ इत्ययमादेशो भवति; णश्च प्रत्ययो भवति ; प्रत्ययो नित्यं गच्छतीत्यर्थे । **उत्तरपथेनाहृतं च** (V. 1. 77.)—उत्तरपथशब्दात् आहृतमित्यर्थे ठञ् ; चकारात् गच्छति इति च ; उत्तरपथेन आहृतो गच्छति वा **औत्तरपथिकः** । **आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम्** (वा ); इति **वारिपथिकः, जाङ्गलपथिकः**, इत्यादि ॥

38. **कालात्** (V. 1. 78.)—अधिकारोऽयम् । **तेन निर्वृत्तम्** (V. 1. 79.)—तेनेति तृतीयासमर्थात् कालवाचिनः निर्वृत्तार्थे ठञ् ; अह्ना निर्वृत्तम् **आह्निकम्** । एवं **सांवत्सरिकम्** इत्यादि । **तमधीष्टो भृतो भूतो भावी** (V. 1. 80.)—तामिति द्वितीयान्तात् कालवाचिनः अधीष्टाद्यर्थे यथाविहितं प्रत्ययो भवति । इति मासमधीष्टो **मासिकः** अध्यापकः, अर्धमासं भृतः **आर्धमासिकः** कर्मकरः, द्वौ मासौ भूतः **द्विमास्यः** व्याधिः, वत्सरं भावी **वात्सरिकः** उत्सवः । **तेन परिजय्यलभ्यकार्यसुकरम्** (V. 1. 93.)—तनेति तृतीयान्तात् कालात् परिजय्याद्यर्थे ठञ् ; मासेन परिजय्यः **मासिकः** व्याधिः इत्यादि । **तदस्य**

**ब्रह्मचर्यम्** (V. 1. 94.)—तदिति द्वितीयान्तात् कालवाचिनः अस्येत्यस्मिन्नर्थे ठञ् ब्रह्मचर्यं चेत् गम्यते ; वत्सरं ब्रह्मचर्यमस्य **वात्सरिकः** ब्रह्मचारी । **तस्य च दक्षिणा यज्ञाख्येभ्यः** (V. 1.95.)—तस्येति षष्ठीसमर्थेभ्यः यज्ञवाचिभ्यः दक्षिणेत्यर्थे ठञ् ; अग्निष्टोमस्य दक्षिणा **आग्निष्टोमिकी** । एवं **राजसूयिकी** इत्यादि। **तत्र च दीयते कार्यं भववत्** (V. 1. 96.)—तत्रेति सप्तमीसमर्थात् कालवाचिनः दीयते कार्यम् इत्येतयोरर्थयोः भववत् प्रत्ययो भवति ; **मासिकम्, प्रावृषेण्यम्, वासन्तम् वासन्तिकम्, हैमनम् हैमन्तम् हैमन्तिकम्** इत्यादि । कालाधिकारो निवृत्तः ॥

**सम्पादिनि** (V. 1. 99.)—तेनेति तृतीयासमर्थात् सम्पादिन्यभिधेये ठञ् । गुणोत्कर्षः संपत्तिः ; कर्णवेष्टकाभ्यां संपादि **कार्णवेष्टकिकम्** मुखम् । **तस्मै प्रभवति सन्तापादिभ्यः** (V. 1. 101.) तस्मै इति चतुर्थीसमर्थेभ्यः सन्तापादिभ्यः प्रभवत्यर्थे यथाविहितं प्रत्ययः ; सन्तापाय प्रभवति **सान्तापिकः** । एवं **साङ्ग्रामिकः, योग्यः, कार्मुकम्**, इत्यादि । **समयस्तदस्य प्राप्तम्** (V. 1. 104.)—समयशब्दात् तदिति प्रथमासमर्थात् अस्येत्यर्थे ठञ् यत्तत् प्रथमासमर्थं प्राप्तं चेत् भवति ; समयः प्राप्तोऽस्य **सामयिकम्** कार्यम् । **प्रयोजनम्** (V. 1. 109.)—तदस्य प्रयोजनमित्यर्थे यथाविहितं प्रत्ययः ; इन्द्रमहः प्रयोजनमस्य **ऐन्द्रमहिकम्** । एवं चूडा प्रयोजनमस्य **चौडम्**, कामः प्रयोजनमस्य **काम्यम्**, इत्यादि ॥

39. ब्राह्मणेन तुल्यं वर्तते **ब्राह्मणवत्**, एवमेव **क्षत्रियवत्**, इत्यत्र, **तेन तुल्यं क्रिया चेद्वतिः** ( V. 1. 115. )—तेनेति तृतीयासमर्थात् शब्दात् तुल्यमित्येतास्मिन्नर्थे वतिप्रत्ययो भवति, यत्तत्तुल्यं क्रिया चेत्सा भवति। अत्र वतेः इकारस्तकारपरित्राणार्थः। स्वरादित्वादव्ययसंज्ञायाम् अव्ययादाप्सुप इति सुपो लुक् भवति। मधुरायामिव स्रुघ्ने प्राकारः **मधुरावत्**, देवदत्तस्येव यज्ञदत्तस्य भावः **देवदत्तवत्**, इत्यत्र, **तत्र तस्येव** ( V. 1. 116. ) —तत्रेति सप्तमीसमर्थात् तस्येति षष्ठीसमर्थात् च शब्दात् इवेत्यर्थे वतिप्रत्ययो भवति। **तदर्हम्** ( V. 1. 117.)—तदिति द्वितीयासमर्थात् अर्हार्थे वतिः ; राजानमर्हति **राजवत्** पालनम्। एवं विधिमर्हति **विधिवत्** पूजा, इत्यादि॥

अश्वस्य भावः **अश्वत्वम् अश्वता, गोत्वम् गोता, ब्राह्मणत्वम् ब्राह्मणता**, इत्यत्र, **तस्य भावस्त्वतलौ** (V. 1 119 )—तस्येति षष्ठीसमर्थात् प्रातिपदिकात् भाव इत्येतास्मिन्नर्थे त्वतलौ प्रत्ययौ भवतः। तलो लकारस्स्वरार्थः। भावशब्देन हि शब्दप्रवृत्तिर्निमित्तमभिधीयते। त्वान्तं नित्यं भवति नपुंसकम् ; तलन्तं तु नित्यं स्त्री। **आ च त्वात्** (V. 1. 120.)—ब्रह्मणस्त्वः इति वक्ष्यति ; आ एतस्मात् त्वसंशब्दनात् यानित ऊर्ध्वमनुक्रमिष्यामः तत्र प्रत्ययौ त्वतलौ अधिकृतौ भवतः। अपवादैः सह समावेशार्थं वचनं कर्मणि विधानार्थं च। **प्रथिमा पार्थवम् पृथुत्वम् पृथुता, म्रदिमा मार्दवम् मृदुत्वम् मृदुता,** इत्यत्र पृथोर्भावः इतिवत् विग्रहे, **पृथ्वादिभ्य इमनिज्वा**(V.1.122.)—पृथ्वादिभ्यश्शब्देभ्यो भाव इत्येतास्मिन्नर्थे

वा इमनिच् । तुरिष्ठेमेयस्सु (VI. 4. 154.) इति वर्तमाने, टेः (V. 4. 155.)—भसंज्ञकस्याङ्गस्य टेर्लोपो भवति इष्ठन् इमनिच् ईयसुन् इत्येतेषु प्रत्ययेषु परतः । र ऋतो हलादेर्लघोः (VI. 4. 161.)—हलादेः लघोः ऋकारस्य रादेशो भवति इष्ठेमेयस्सु परतः ; इति रादेशः । वर्णदृढादिभ्यः ष्यञ्च (V. 1. 123.)—वर्णवर्चिभ्यः दृढादिभ्यश्च भावार्थे ष्यञ् ; चात् इमनिच् त्वतलौ च ; नैल्यम् नीलिमा नीलत्वम् नीलता । जडस्य भावः कर्म वेति विग्रहे जाड्यम् इतिवत् मौक्यम्, मौढ्यम्, मौर्ख्यम्, ब्राह्मण्यम्, इत्यत्र, गुणवचनब्राह्मणादिभ्यः कर्मणि च (V. 1. 124.)—गुणमुक्तवान् गुणवचनः ; गुणवचनेभ्यश्शब्देभ्यो ब्राह्मणादिभ्यश्च षष्ठीसमर्थेभ्यः कर्मण्यभिधेये ष्यञ्प्रत्ययो भवति ; चकारात् भावे च । कर्मशब्दः क्रियावचनः; षकारो ङीषर्थः । चातुर्वर्ण्यादीनां स्वार्थे उपसंख्यानम् (वा.)—इति चत्वारो वर्णाः चातुर्वर्ण्यम्, त्रैलोक्यम्, षाड्गुण्यम्, इत्यादि । अर्हतो नुम् च (ग.)—इति आर्हन्त्यम् । आ पादपरिसमाप्तेः भावकर्माधिकारः । स्तेयम् स्तेनस्य भावः कर्म वेति विग्रहे, स्तेनाद्यन्नलोपश्च (V. 1. 125.)—स्तेनशब्दात् ष्यञर्थे यत्प्रत्ययो भवति नलोपश्च । स्तैन्यम् इत्यत्र, स्तेनाद्यन्नलोपश्चेत्यत्र स्तेनात् इति योगविभागात् ष्यञिति वक्तव्यम् । सख्यम् सखित्वम् सखिता इत्यत्र सख्युर्भावः कर्म वेति विग्रहे, सख्युर्यः (V. 1. 126.)—सखिशब्दात् ष्यञर्थे यप्रत्ययो भवति भावकर्मणोः अर्थयोः । दूत्यम्, वाणिज्यम्, इत्यत्र, दूतवणिग्भ्याञ्चेति वक्तव्यम् (वा.) इति यः।

ब्राह्मणादित्वात् ष्यञि **वाणिज्यम्** इत्यपि भवति। **कापेयम्, ज्ञातेयम्** इत्यत्र, कपेर्भावः कर्म वेतिवत् विग्रहे, **कपिज्ञात्योर्ढक्** (V. 1. 127.)—कपिज्ञातिशब्दाभ्यां षष्ठीसमर्थाभ्यां ष्यञर्थे ढक्प्रत्ययो भवति। **पत्यन्तपुरोहितादिभ्यो यक्** (V. 1. 128.)—पत्यन्तशब्देभ्यः पुरोहितादिशब्देभ्यश्च ष्यञर्थे यक्; **प्राजापत्यम्, पौरोहित्यम्,** इत्यादि। **हायनान्तयुवादिभ्योऽण्** (V. 1. 130.)—हायनान्तेभ्यः युवादिभ्यश्च ष्यञर्थे अण्; **द्वैहायनम्, यौवनम्, स्थाविरम्,** इत्यादि। **श्रोत्रियस्य यलोपश्च वाच्यः** (वा.)—**श्रौत्रम्**। **शौचम्, मौनम्, पाटवम्, लाघवम्,** इत्यत्र, शुचेर्भावः कर्म वेतिवत् विग्रहे, **इगन्ताच्च लघुपूर्वात्** (V. 1. 131.)—लघुपूर्वादिगन्ताच्च शब्दरूपात् ष्यञर्थे अण्प्रत्ययो भवति; ओर्गुणः। इगन्तादिति किम्? पटुत्वम् पटुता। लघुपूर्वादिति किम्? पाण्डुत्वम् पाण्डुता। **योपधाद्गुरूपोत्तमाद्वुञ्** (V. 1. 132.)—त्रिप्रभृतीनामन्तस्य समीपम् उपोत्तमम्; गुरूपोत्तमात् यकारोपधात् प्रातिपदिकात् ष्यञर्थे वुञ्; **रामणीयकम्, कामनीयकम्**। **सहायाद्वेति वक्तव्यम्** (वा.)—**साहायकम् साहाय्यम्**। **द्वन्द्वमनोज्ञादिभ्यश्च** (V. 1. 133.)—द्वन्द्वसंज्ञकेभ्यः मनोज्ञादिभ्यश्च ष्यञर्थे वुञ्; **शैष्योपाध्यायिका, मानोज्ञकम्,** इत्यादि। **ब्रह्मणस्त्वः** (V. 1. 136.)—ब्रह्मन्शब्दात् होत्रावाचिनः त्वप्रत्ययः ष्यञर्थे; **ब्रह्मत्वम्**। जातिवाचित्वे तु त्वतलावुभावपि प्रत्ययौ भवतः; इति **ब्रह्मत्वम् ब्रह्मता** च। इति भावकर्माधिकारः॥

41. **मौद्गीनम्, कौद्रवीणम्,** इत्यत्र, मुद्गानां भवनं क्षेत्रमितिवत् विग्रहे, **धान्यानां भवने क्षेत्रे खञ्** (V. 2. 1.)—धान्यविशेषवाचिभ्यः षष्ठीसमर्थेभ्यश्शब्देभ्यो भवने क्षेत्रेऽभिधेये खञ्प्रत्ययो भवति । खस्य ईनादेशः । उत्पत्तौ हि भवनं वर्तते, न तु संज्ञायाम् ; तेन मुद्गानां भवनं कुसूलमित्यत्र न भवति । **व्रैहेयम्, शालेयम्,** इत्यत्र, व्रीहीणां भवनं क्षेत्रमितिवत् विग्रहे, **व्रीहिशाल्योर्ढक्** (V. 2. 2.)—व्रीहिशालिशब्दाभ्यां षष्ठीसमर्थाभ्यां ढक्प्रत्ययो भवति भवने क्षेत्रेऽभिधेये । **यव्यम्, यवक्यम्, षष्टिक्यम्,** इत्यत्र, **यवयवकषष्टिकाद्यत्** ( V. 2. 3. )—यवादिभ्यश्शब्देभ्यष्षष्ठीसमर्थेभ्यो यत्प्रत्ययो भवति भवने क्षेत्रेऽभिधेये । **तिल्यम् तैलीनम्, माष्यम् माषीणम्, उम्यम् औमीनम्, भङ्ग्यम् भाङ्गीनम्, अणव्यम् आणवीनम्,** इत्यत्र, तिलानां भवनं क्षेत्रमितिवत् विग्रहे, **विभाषा तिलमाषोमाभङ्गाणुभ्यः** (V. 2. 4.)—तिलादिभ्यष्षष्ठीसमर्थेभ्यो विभाषा यत्प्रत्ययो भवति भवने क्षेत्रे अभिधेये ; खञ् च । **इक्षुशाकटम् इक्षुशाकिनम्,** इत्यत्र, **भवने क्षेत्रे इक्ष्वादिभ्यश्शाकटशाकिनौ** (वा. V. 2. 29.) इति भवति ॥

42 **सर्वपथीनः** इत्यत्र, सर्वपथं व्याप्नोतीति विग्रहे, **यथामुखसम्मुखस्य दर्शनः खः** (V. 2. 6.) इत्यनुवर्तमाने, **तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति** (V.2.7.)—तदिति द्वितीयासमर्थेभ्यः सर्वादिभ्यः पथि अङ्ग कर्मन् पत्र पात्र इत्येवमन्तेभ्यश्शब्देभ्यो व्याप्नोतीत्यस्मिन्नर्थे खप्रत्ययो भवति । **आप्रपदीनम्** इत्यत्र, आ-

प्रपदं प्राप्नोतीति विग्रहे, **आप्रपदं प्राप्नोति** ( V. 2. 8. )—आप्रपदशब्दात् तदिति द्वितीयासमर्थात् प्राप्नोतीत्यस्मिन्नर्थे खप्रत्ययो भवति। **अनुपदीना** इत्यत्र, अनुपदं बद्धा इति विग्रहे, **अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु** ( V. 2. 9. )—अनुपदादिभ्यश्शब्देभ्यो द्वितीयासमर्थेभ्यः खप्रत्ययो भवति; बद्धा भक्षयति नेय इत्यस्मिन्नर्थे अभिधेये चेत् स भवति। **अध्वन्यः अध्वनीनः** इत्यत्र, अध्वानं प्राप्नोतीति विग्रहे, **अनुग्वलङ्गामी** (V. 2. 15.) इत्यनुवर्तमाने, **अध्वनो यत्खौ** (V. 2. 16.)—अध्वन्शब्दात् द्वितीयासमर्थात् अलङ्गामीत्यस्मिन्नर्थे यत्खौ प्रत्ययौ भवतः। **आत्माध्वानौ खे** ( VI. 4. 169. )—आत्मन् अध्वन् इत्येतौ शब्दौ खे परतः प्रकृत्या भवतः। इति भवति टिलोपाभावः। **साप्तपदीनं सख्यम्** (V. 2. 22.)—सख्ये अभिधेये साप्तपदीनमिति निपात्यते; सप्तभिः पदैः अवाप्यते **साप्तपदीनम्** ॥

43. **तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ** (V. 2. 24.)—तस्येति षष्ठीसमर्थेभ्यः पील्वादिभ्यः कर्णादिभ्यश्च यथासंख्यं पाकमूलयोरर्थयोः कुणप् जाहच् इत्येतौ प्रत्ययौ भवतः। पीलूनां पाकः **पीलुकुणः**, एवं **बदरकुणः** ; कर्णस्य मूलं **कर्णजाहम्**, एवं **दन्तजाहम्**। **पक्षात् तिः** (V. 2. 25.)—पक्षस्य मूलमित्यर्थे तिप्रत्ययो भवति; पक्षस्य मूलं **पक्षतिः**। **वेदचणः** ब्राह्मणः, **वेदचुञ्चुः** पाराशरः, इत्यत्र, वेदेन वित्त इति विग्रहे, **तेन वित्तश्चुञ्चुप्चणपौ** (V. 2. 26.)—तेनेति तृतीयासमर्थाद्वित्त इत्येतस्मिन्नर्थे चुञ्चुप् चणप् इत्येतौ

भवतः । वित्तः प्रतीतः प्रसिद्ध इत्यर्थः । **हैयङ्गवीनम्** इत्यत्र, गोर्दोहो गोदोहः, ह्यः गोदोहो ह्योगोदोहः, तस्य विकारः इति विग्रहे, **हैयङ्गवीनं संज्ञायाम्** (V.2.23.)—ह्योगोदोहशब्दस्य हियङ्गु इत्यादेशो निपात्यते विकारेऽभिधेये संज्ञायां विषये ; खञ्प्रत्ययश्च । आदिवृद्धिः, ओर्गुणः ; अवादेशः । **वेः शालच्छङ्कटचौ** (V.2.28.)—विशब्दात् शालच् शङ्कटच् इत्येतौ भवतः । साधनक्रियावचनात् उपसर्गात् स्वार्थे प्रत्ययौ भवतः; विगते शृङ्गे **विशाले विशङ्कटे** । तद्योगात् गौरपि **विशालः विशङ्कटः** । **संप्रोदश्च कटच्** (V. 2. 29.)—सम् प्र उत् इत्येतेभ्यः कटच् ; चात् वेश्च कटच् ; **संकटम्, प्रकटम्, उत्कटम्, विकटम्** । **कटच्प्रकरणे अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम्** (वा)—अलाबूनां रजः **अलाबूकटम्** इत्यादि । **गोष्ठादयः स्थानादिषु पशुनामादिभ्य उपसंख्यानम्** (वा)—गवां स्थानं **गोगोष्ठम्** । सङ्घाते कटच्; अवीनां सङ्घातः **अविकटम्** । विस्तारे पटच्; अजानां विस्तारः **अजपटम्** । द्वित्वे गोयुगच्; उष्ट्राणां द्वित्वम् **उष्ट्रगोयुगम्** । षट्त्वे षड्गवच् ; अश्वानां षट्त्वम् **अश्वषड्गवम्** । विकारे स्नेहने तैलच् ; इङ्गुदीनां विकारः स्नेहः **इङ्गुदीतैलम्** । **उपाधिभ्यां त्यकन्नासन्नारूढयोः** (V. 2. 34.)—उप अधि इत्येताभ्यां यथासंख्यम् आसन्नारूढयोः वर्तमानाभ्यां स्वार्थे त्यकन् भवति; पर्वतस्य आसन्ना भूमिः **उपत्यका**, आरूढा **अधित्यका** । **कर्मठः** विप्रः इत्यत्र, कर्माणि घटते इति विग्रहे, **कर्मणि घटोऽठच्** (V. 2. 35.)—कर्मशब्दात् सप्तमीसमर्थात् घटते इत्येतास्मिन्नर्थे अठच्प्रत्ययो भवति । घटो घटमान-

श्लेष्मान इत्यर्थः । **तारकितम्** नभः, **पुष्पितः** वृक्षः, **सुखितः**, **मुकुलितः**, **स्तबकितः**, इत्यत्र, तारका अस्य संजाताः इतिवत् विग्रहे, **तदस्य सञ्जातं तारकादिभ्य इतच्** (V. 2. 36.)—तदिति प्रथमासमर्थेभ्यस्तारकादिभ्यश्शब्देभ्यः अस्य संजात इत्यस्मिन्नर्थे इतच् प्रत्ययो भवति । संजातग्रहणं प्रकृतिविशेषणम् ॥

44. **ऊरुद्वयसः** तटाकः, **ऊरुद्वयसम्** उदकम्, **ऊरुदघ्नम्**, **ऊरुमात्रम्**, इत्यत्र, ऊरुः प्रमाणमस्येति विग्रहे, **प्रमाणे द्वयसज्दघ्नञ्मात्रचः** (V. 2. 37.—तदिति प्रथमासमर्थेभ्यः प्रमाणोपाधिकेभ्यः अस्येति षष्ठ्यर्थे द्वयसच् दघ्नच् मात्रच् इत्येते प्रत्यया भवन्ति ।

प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम ।
तृतीयश्चाविशेषेण प्रस्यमात्रमर्पाप्यते ॥

स्त्रियां टिड्ढाणञिति ङीप् अत्र भवति ; **जानुदघ्नी** वेदिः । द्वे अङ्गुली प्रमाणमस्य **द्व्यङ्गुलम्**, **त्र्यङ्गुलम्**, इत्यत्र—**द्विगोर्लुङ्नित्यम्** (वा.) इति प्रमाणप्रत्ययस्य लुक् ; तत्परस्याङ्गुलेः अच् प्रत्ययः ; यचि भम् ; यस्येति लोपः । पुरुषः प्रमाणमस्येति विग्रहे **पौरुषम् पुरुषद्वयसम्**, **हास्तिनम् हास्तिद्वयसम्**, इत्यत्र, **पुरुषहास्तिभ्यामण्** (V. 2. 38.)—पुरुषहस्तिशब्दाभ्यां प्रमाणोपाधिकाभ्यां प्रथमासमर्थाभ्यामस्येति षष्ठ्यर्थे अण्प्रत्ययः, चकारात् द्वयसजादयश्च । हास्तिनमित्यत्र, नस्तद्धिते (VI. 4. 144.) इति टिलोपे प्राप्ते, **इनण्यनपत्ये** (VI. 4. 164.)—इन्नन्तं शब्दरूपमनपत्येऽणि परतः प्रकृत्या भवति । अनपत्ये इति किम् ? मेधा-

विनः अपत्यं मैधावः । यत्परिमाणमस्येतिवत् विग्रहे, **यावान्, तावान्,** इत्यत्र, **यत्तदेतेभ्यः परिमाणे वतुप्** (V. 2. 39.)—यत् तत् एतत् इत्येतेभ्यः परिमाणोपाधिकेभ्योऽस्येति षष्ठ्यर्थे वतुप्प्रत्ययो भवति। उकार उगित्कार्यार्थः ; पकारः स्वरार्थः । **दृग्दृशवतुषु** (VI. 3. 89.) इति वर्तमाने, **आ सर्वनाम्नः** (VI. 3. 91.)—दृग्दृशवतुषु परतः सर्वनाम्नः आकारादेशो भवति । किम् परिमाणमस्येतिवत् विग्रहे, **कियान्, इयान्,** इत्यत्र, **किमिदंभ्यां वो घः** (V. 2. 40.)—किम् इदमित्येताभ्याम् उत्तरस्य वतुपो वकारस्य घकारादेशो भवति । एतदेव विधानं ज्ञापकं किमिदंभ्यां वतुबस्तीति ; अथवा योगविभागेन वतुपं विधाय पश्चाद्वो घो विधीयते । घस्य इयादेशः । **इदंकिमोरीश्की** (VI. 3. 90.)—इदं किम् इत्येतयोर्यथासंख्यम् ईश् की इत्येतावादेशौ भवतः दृग्दृशवतुषु परतः । यस्येति च (VI. 4. 148.) इत्युभयत्रापि ईकारलोपः । **कति** ब्राह्मणाः इत्यत्र, का संख्या परिमाणम् एषाम् इति विग्रहे, **किमः संख्यापरिमाणे डति च** (V. 2. 41.)—संख्यायाः परिमाणं संख्यापरिच्छेदः ; तत्र वर्तमानात् किमः अस्येत्यर्थे डतिः ; चात् वतुप्, तस्य वकारस्य घादेशश्च । वतुप्पक्षे—**कियन्तः** ब्राह्मणाः ॥

45. **पञ्चतयः** वृक्षः, **पञ्चतयी** शिंशुपा, **पञ्चतयम्** दारु, एवं **दशतयम्** इत्यादिषु, पञ्च अवयवा अस्येतिवत् विग्रहे, **संख्याया अवयवे तयप्** (V. 2. 42.)—संख्यावाचिभ्यश्शब्देभ्योऽवयवे वर्तमानेभ्योऽस्येति षष्ठ्यर्थे तयप् प्रत्ययो भवति । अवयवा अवयविनः सम्बन्धिनः इति सामर्थ्यादवयवी प्रत्ययार्थो विज्ञायते ।

**द्वयम् त्रयम्**, अन्यत्र **द्वितयम् त्रितयम्**, इत्यत्र, द्वाववयवावस्य त्रयोऽवयवा अस्येति विग्रहे, भवति पूर्ववत्तयप् । **द्वित्रिभ्यां तयस्यायज्वा** ( V. 2. 43. )—द्वित्रिभ्यामुत्तरस्य तयपः वा अयजादेशो भवति । यस्येति च इति इकारलोपः । उभाववयवावस्य **उभयम्** इत्यत्र, **उभादुदात्तो नित्यम्** (V. 2. 44.) —उभशब्दादुत्तरस्य तयस्य नित्यमयजादेशो भवति । **एकादशं शतम्, द्वादशं सहस्रम्** इत्यत्र, एकादश अधिका अस्मिन् शते इतिवत् विग्रहे, तदस्मिन्नधिकमिति **दशान्ताड्डः** (V. 2. 45.)—तदिति प्रथमासमर्थात् प्रातिपदिकात् अस्मिन्नधिकमित्यर्थे डो भवति । **शदन्तविंशतेश्च** (V. 2. 46.)—तदस्मिन्नधिकमित्यर्थे शदन्तात् विंशतेश्च डः ; इति **त्रिंशं शतम्, विंशं सहस्रम्** । **संख्याया गुणस्य निमाने मयट्** (V. 2. 47.)—तदिति प्रथमासमर्थात् संख्यावाचिनः अस्येत्यर्थे मयट्, यत् प्रथमासमर्थं गुणस्य चेन्निमाने वर्तते । गुणो भागः, निमानं मूल्यम् ; **द्विमयम्** तक्रं यवानाम् । **एकादश** इत्यत्र, दश च एकश्चेति द्वन्द्वः ; संख्याया अल्पीयस्याः (वा. II.2.35.) इति एक इत्यस्य पूर्वनिपातः । आन्महतः ( VI. 3. 46. ) इत्यत्र, आदिति योगविभागादात्वम् ; योगविभागस्य च लिङ्गं प्रागेकादशभ्योऽच्छन्दसि (V. 3. 49.) इति निर्देशः ॥

46. एकादशानां पूरणः **एकादशः, चतुर्दशः, षोडशः, अष्टादशः**, इत्यत्र, **तस्य पूरणे डट्** (V. 2. 48.)—तस्येति

षष्ठीसमर्थात् संख्यावाचिनः प्रातिपदिकात् पूरण इत्येतस्मिन्नर्थे डट् प्रत्ययो भवति । डकारष्टिलोपार्थः, टकारो ङीबर्थः । येन हि संख्या पूर्यते स किल तद्धितः पूरणः । षोडश इत्यत्र, **षष उत्वन्दशद्-तृधासूत्तरपदादेः ष्टुत्वं च धासु वा** (वा. VI. 3. 109.)—इति षषः उकारादेशो भवति ; तत्र दश दत् इत्येतयोः परतः उत्तरपदादेः ष्टुत्वञ्च। धासु तु विकल्पेन उत्वष्टुत्वे । **द्वादशः, द्वाविंशः, अष्टादशः, अष्टाविंशः**, इत्यत्र, द्व्यष्टनस्संख्यायामबहुव्रीह्यशीत्योः (VI.3.47.) इत्यात्वे, पूरणार्थे डटि च, द्वादश अष्टादश इत्येतयोः टिलोपः ; द्वाविंशः, अष्टाविंशः, इत्यत्र तु, ति विंशतेर्डिति (VI.4.142.) इति भवति तिलोपः । **त्रयोदशः** इत्यत्र, त्रेस्त्रयः (VI. 3. 148.) इति त्रयादेशो भवति ; ततः पूरणार्थे डट् । **पञ्चमः, सप्तमः, पञ्चमी, सप्तमी,** इत्यत्र, पञ्चानां पूरणः इति विग्रहे, पूर्ववत् डट् । **नान्तादसंख्यादेर्मट्** (V. 2. 49.)—नकारान्तात् संख्यावाचिनः प्रातिपदिकादसंख्यादेरुत्तरस्य डटो मडागमो भवति । मटो महीस्त्रादिषु पाठात् हलादौ पदसंज्ञाविधानाच्च नकारलोपः । असंख्यादेरिति किम् ? एकादशः । नान्तादिति किम् ? विंशः । **षष्ठः, कतिथः, कतिपयथः, चतुर्थः**, इत्यत्र, षण्णां पूरण इतिवत् विग्रहे, पूर्ववत् डट् ; **षट्कतिकतिपयचतुरां थुक्** (V. 2. 51.)—डडिति सप्तम्या विपरिणम्यते ; षट्प्रभृतीनां डटि परतः थुगागमो भवति । कतिपयशब्दो न संख्या ; तस्मादस्मादेव ज्ञापकात् डट् विज्ञायते । **तुरीयः तुर्यः** इत्यत्र, चतुर्णां पूरण इति विग्रहे, **चतुरश्छयतावाद्यक्षरलोपश्च** (वा.) इति चतुर्शब्दस्य

छ यत् इत्येतौ प्रत्ययौ भवतः आद्यक्षरलोपश्च । एवं बहूनां पूरण इतिवत् विग्रहे, **बहुतिथः, पूगतिथः, गणतिथः, सङ्घतिथः,** इत्यत्र, **बहुपूगगणसङ्घस्य तिथुक्** (V. 2. 52.)—बह्वादीनां डटि परतः तिथुगागमो भवति । यावतां पूरणः **यावतिथः, तावतिथः,** इत्यत्र, **वतोरिथुक्** (V. 2. 53.)—वत्वन्तस्य डटि परतः इथुगागमो भवति। **द्वितीयः द्वितीया** इत्यत्र, **द्वेस्तीयः** (V. 2. 54.) —द्विशब्दात् तीयप्रत्ययो भवति तस्य पूरण इत्यस्मिन्नर्थे । डटोऽपवादः । **तृतीयः तृतीया** इत्यत्र, **त्रेस्संप्रसारणञ्च** (V. 2. 55.)—त्रिशब्दात् तीयप्रत्ययो भवति तस्य पूरण इत्येतस्मिन्नर्थे ; तत्सन्नियोगेन त्रेस्संप्रसारणञ्च भवति । हल इति दीर्घः (VI. 4. 2.) कथं न भवति ? अण इत्यनुवृत्तेः पूर्वेण णकारेण प्रत्याहारग्रहणम् । **विंशतितमः विंशः** इत्यत्र, **विंशत्यादिभ्यस्तमडन्यतरस्याम्** (V. 2. 56.)—विंशत्यादिभ्यः परस्य डटः अन्यतरस्यां तमडागमो भवति। पक्षे—ति विंशतेर्डिति—इति तिशब्दस्य लोपः । **शततमः, एकशततमः, मासतमः, अर्धमासतमः, संवत्सरतमः,** इत्यत्र, पूर्ववत् भवति डट् ; **नित्यं शतादिमासार्धमाससंवत्सराच्च** (V. 2. 57.)—शतादिप्रभृतिभ्यः परस्य डटो नित्यन्तमडागमो भवति । शतादिग्रहणं संख्यादेरपि नित्यार्थम् । **षष्टितमः, सप्ततितमः,** इत्यत्र, **षष्ट्यादेश्चासंख्यादेः** (V. 2. 58.)—षष्ट्यादेश्च शब्दादसंख्यादेरुत्तरस्य डटो नित्यं तमडागमो भवति । असंख्यादेरिति किम् ? एकषष्टः एकषष्टितमः, एकसप्ततः एकसप्ततितमः ॥

47. **गोषदादिभ्यो वुन्** (V. 2. 62.) इत्यनुवर्तमाने, **तत्र कुशलः पथः** (V. 2. 63.)—तत्रेति सप्तमीसमर्थात् पथिन्-शब्दात् कुशल इत्यर्थे वुन्; पथि कुशलः **पथकः**। त्सरौ कुशलः इति विग्रहे **त्सरुकः, आकर्षकः,** इत्यादौ, **आकर्षादिभ्यः कन्** (V. 2. 64.)—तत्र कुशलः इत्यर्थे आकर्षादिभ्यः कन्। धने कामः इति विग्रहे **धनकः, हिरण्यकः,** इत्यत्र, **धन-हिरण्यात् कामे** (V. 2. 65.)—धनहिरण्यशब्दाभ्यां तत्र कामः इत्यर्थे कन्। केशेषु प्रसितः **केशकः, दन्तोष्ठकः,** इत्यत्र, **स्वाङ्गेभ्यः प्रसिते** (V. 2. 66.)—स्वाङ्गवाचिभ्यः शब्देभ्यः तत्र प्रसित इत्यर्थे कन्। **गोमान्** देवदत्तः, **गोमती** ब्राह्मणी, **गोमत्** ब्राह्मणकुलम्; **वृक्षवान्** पर्वतः, **वृक्षवती** पर्वतशिखा, **वृक्षवत्** पर्वतकुलम्; एवं **यवमान्, भूमिमान्, सरस्वान्,** इत्यत्र; गावोऽस्मिन् सन्ति इतिवत् विग्रहे, **तदस्यास्त्यस्मिन्निति मतुप्** (V. 2. 94.)—तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे अस्मिन्निति सप्तम्यर्थे वा मतुप्प्रत्ययो भवति। उकार उगित्कार्यार्थः; पकारः स्वरार्थः। अत्वसन्तस्येति दीर्घः; उगिदचामिति नुम्; हल्ङ्या-दिसंयोगान्तलोपौ।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥

**वृक्षवान्** इत्यत्र, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (VIII. 2. 9.)—मकारान्तात् मकारोपधादवर्णान्तादवर्णोपधाद्यवा-दिवर्जितादुत्तरस्य मतोर्मकारस्य वकारादेशो भवति। यवादिराकृति-

गण:। सरस्वानित्यत्र, **तसौ मत्वर्थे** (I. 4. 19.)—तकारसकारान्तं शब्दरूपं मत्वर्थे प्रत्यये परतो भसंज्ञं भवति। आ कडारादेका संज्ञा (I. 4. 1.) इति नियमात् संज्ञाद्वयाभाव:। उगितश्चेति (IV. 1. 6.) ङीप्; इति **गोमती**। शुक्लो गुणोऽस्यास्तीति विग्रहे **शुक्ल:** पट:, **कृष्ण:** कम्बल:, इत्यत्र, **गुणवचनेभ्यो मतुपो लुक्** (वा. V. 2. 94.)—इति लुक्। चूडास्यास्तीति **चूडाल:** इत्यत्र, **प्राणिस्थादातो लजन्यतरस्याम्** (V. 2. 96)—प्राणिस्थवाचिन: शब्दात् आकारान्तात् मत्वर्थे वा भवति लच्। पक्षे—**चूडावान्**। **सिध्मल: सिध्मवान्, गडुल: गडुमान्**, इत्यत्र, **सिध्मादिभ्यश्च** (V. 2. 97.)—सिध्मादिभ्यश्शब्देभ्यो मत्वर्थे अन्यतरस्यां लच् प्रत्ययो भवति। अन्यतरस्यांग्रहणेन अत्र मतुप् समुच्चीयते। **वातदन्तवलललाटगलानामूङ् च** (वा.)—इति एतेषां लच्सन्नियोगेन अन्तादेश ऊङ् भवति; **वातूल:, दन्तूल:**, इत्यादि। **वत्सांसाभ्यां कामबले** (V. 2. 98.)—वत्सांसाभ्यां लच् यथासंख्यं कामवति बलवति चार्थे; **वत्सल: पिता, अंसलो युवा**। **फेनिल: फेनल: फेनवान्** इत्यत्र, **फेनादिलच् च** (V. 2. 99.)—फेनशब्दात् इलच्प्रत्ययो भवति मत्वर्थे; चकाराल्लच; अन्यत्र मतुप्। **लोमश: लोमवान्, पामन: पामवान्, पिच्छिल: पिच्छवान्**, इत्यादौ, **लोमादिपामादिपिच्छादिभ्य: शनेलच:** (V. 2. 100.)—लोमादिप्रभृतिभ्यो गणेभ्यस्त्रिभ्य: यथासंख्यं श न इलच् इत्येते प्रत्यया भवन्ति मत्वर्थे; मतुप् च। **प्राज्ञ:**

**प्रज्ञावान्, श्राद्धः श्रद्धावान्, आर्चः अर्चावान्, वार्त्तः वृत्तिमान्,** इत्यत्र, **प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः** (V. 2. 101.)—प्रज्ञादिभ्यश्शब्देभ्यो णप्रत्ययो भवति मत्वर्थे। **तपस्सहस्राभ्यां विनीनी** (V. 2. 102.)—एताभ्यां क्रमात् मत्वर्थे विनि इनि इत्येतौ भवतः; **तपस्वी, सहस्री।** **अण् च** (V. 2. 103.)—आभ्याम् अण् च भवति मत्वर्थे; **तापसः, साहस्रः।** **ज्योत्स्नादिभ्य उपसंख्यानम्** (वा.)—इति **ज्यौत्स्नः तामिस्रो** वा पक्षः। **सिकताशर्कराभ्यां च** (V. 2. 104.)—आभ्याम् अण् मत्वर्थे; **सैकतः, शार्करः।** **देशे लुबिलचौ च** (V. 2. 105.)—आभ्यां देशेऽभिधेये लुबिलचौ मत्वर्थे; चात् अण्मतुपौ; **सिकता, सिकतिलः, सैकतः, सिकतावान्** वा देशः। दन्ता उन्नता अस्येति विग्रहे **दन्तुरः** इत्यत्र, **दन्त उन्नत उरच्** (V. 2. 106.)—दन्तशब्दादुन्नतोपाधिकादस्येति षष्ठयर्थे उरच् प्रत्ययो भवति। उन्नतग्रहणं प्रकृतिविशेषणम्। अत्र उन्नतग्रहणं किम्? दन्तवान्। **ऊषरम्** क्षेत्रम्, **सुषिरम्** काष्ठम्, **मुष्करः** पशुः, **मधुरो** गुडः, इत्यत्र, **ऊषसुषिमुष्कमधो रः** (V. 2. 107.)—ऊषादिभ्यो रप्रत्ययो भवति मत्वर्थे। **खरः, मुखरः, कुञ्जरः,** इत्यत्र, **रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्** (वा.); खं कण्ठविवरम्, कुञ्जो गजहनू। **नगरम्, पाण्डुरम्, पांसुरम्,** इत्यत्र, **नगपांसुपाण्डुभ्यश्चेति वक्तव्यम्** (वा.)। **केशवः केशवान्** इत्यत्र, **केशाद्वोऽन्यतरस्याम्** (V. 2. 109.)—केशशब्दादन्यतरस्यां

वप्रत्ययो भवति मत्वर्थे । **वप्रकरणे अन्येभ्योऽपि दृश्यते इन्युपसंख्यानम्** (वा.)—इति **मणिवः**, **हिरण्यवः**, इत्यादि । **अर्णवः** इत्यत्र, **अर्णसो लोपश्च** (वा.)। **रजःकृष्यासुतिपरिषदो वलच्** (V.2.112.)—इति मत्वर्थे वलच् । वले (VI 3.118.) इति पूर्वपदस्य दीर्घः; **रजस्वला**, **कृषीवलः**, **परिषद्वलः**, **आसुतीवलः** । **वलजन्यत्रापि दृश्यते** (वा.)—इति **भ्रातृवलः**,**पुत्रवलः**,इत्यादि । **दन्तशिखात् संज्ञायाम्** (V.2.113.)—आभ्यां वलच् मत्वर्थे संज्ञायाम्; **दन्तावलो** गजः, **शिखावलं** नगरम् । **ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः** (V. 2. 114.)—एते मत्वर्थे निपात्यन्ते । **दण्डी दण्डिकः**, **छत्री छत्रिकः**, इत्यत्र, दण्डोऽस्यास्तीतिवत् विग्रहे, **अत इनिठनौ** (V. 2. 115.)—अकारान्तात् प्रातिपदिकात् प्रथमासमर्थात् इनिठनौ मत्वर्थे प्रत्ययौ भवतः अन्यतरस्याम् । इकारो नकारपरित्राणार्थः । मतुबपि भवति—**दण्डवान्**, **छत्रवान्** । **फलिनः**, **बर्हिणः**, इत्यत्र, **फलबर्हाभ्याम् इनज्वक्तव्यः** (वा. V. 2. 122.) । **व्रीही व्रीहिकः व्रीहिमान्**, **मायी मायिकः मायावान्**, इत्यत्र, व्रीहिरस्यास्तीतिवत् विग्रहे, **व्रीह्यादिभ्यश्च** (V. 2. 116.) —व्रीह्यादिभ्यश्शब्देभ्यः इनिठनौ प्रत्ययौ भवतः मत्वर्थे ; पक्षे मतुबपि । तुन्दमस्यास्तीति विग्रहे **तुन्दिलः तुन्दी तुन्दिकः तुन्दवान्**, **उदरिलः उदरी उदरिकः उदरवान्**, इत्यत्र, **तुन्दादिभ्य इलच् च** (V.2.117.)—तुन्दादिभ्यः प्रातिपदिकेभ्यः इलच्प्रत्ययो भवति मत्वर्थे ; चकारादिनिठनावपि मतुप् च ।

**एकगोपूर्वाट्ठञ्नित्यम्** (V. 2. 118.)—एकपूर्वात् गोपूर्वात् च नित्यं मत्वर्थे ठञ्; **ऐकशतिकः, गौसहस्रिकः**। **शतसहस्रान्ताच्च निष्कात्** (V. 2. 119.)—शतान्तात् सहस्रान्तात् च निष्कात् ठञ्: **नैष्कशतिकः, नैष्कसहस्रिकः**। **रूपादाहतप्रशंसयोर्यप्** (V. 2. 120.)—आहतार्थे प्रशंसार्थे च वर्त्तमानात् रूपशब्दात् यप्; **रूप्यो** दीनारः, **रूप्यः** पुरुषः। **यप्प्रकरणेऽन्येभ्योऽपि दृश्यते** (वा.)—इति **हिम्याः** पर्वताः, **गुण्याः** ब्राह्मणाः। **पयस्वी, यशस्वी, मेधावी, मायावी, स्रग्वी,** इत्यत्र, **अस्मायामेधास्रजो विनिः** (V. 2. 121.)—असन्तात् प्रातिपदिकात् माया मेधा स्रज् इत्येतेभ्यश्च विनिप्रत्ययो भवति मत्वर्थे। स्त्रियां **पयस्विनी** गौः। तडिदस्यास्तीतिवत् विग्रहे, **तडित्वान्, मरुत्वान्**, इत्यत्र, **झयः** (VIII. 2. 10.)—झयन्तादुत्तरस्य मतोर्मकारस्य वकारादेशो भवति। **आमयस्योपसंख्यानम्** (वा. V. 2. 122.)—**आमयावी**। **शृङ्गवृन्दाभ्यामारकन्** (वा.)—**शृङ्गारकः, वृन्दारकः**। **हृदयाच्चालुरन्यतरस्याम्** (वा.)—**हृदयालुः**। पक्षे **हृदयी** इत्यादि। **शीतोष्णतृप्रेभ्यस्तन्न सहते** (वा.)—इति शीतं न सहते **शीतालुः** इत्यादि। **हिमाच्चेलुः** (वा.)—**हिमेलुः**। **बलाच्चोलच्** (वा.)—**बलूलः**। **वातात्समूहे च** (वा.)—**वातूलः**। चादसहनेऽपि। **तप् पर्वमरुद्भ्याम्** (वा.)—**पर्वतः मरुत्तः**। **अर्थाच्चादभावे इनिः** (वा.)—**अर्थी**। वागस्यास्तीति विग्रहे **वाग्मी** इत्यत्र, **वाचो ग्मिनिः** (V. 2. 124.)—वाक्शब्दात् मत्वर्थे ग्मिनिप्रत्ययो भवति। इकारोऽनुनासिकानिवृत्त्यर्थः।

**वाचालः वाचाटः** इत्यत्र, **आलजाटचौ बहुभाषिणि** (V. 2. 125.)—बहुभाषिण्यभिधेये वाक्शब्दादालजाटचौ प्रत्ययौ भवतः। ग्मिनेरपवादः। **कुत्सित इति वक्तव्यम्** (वा.); यस्तु बह्वपि सम्यक् भाषते स **वाग्मी**; यस्तु असम्यक् भाषते स **वाचालो वाचाटो** वा। **अर्शसः, उरसः**, इत्यत्र, अर्शोऽस्यास्तीति विग्रहे, **अर्शआदिभ्योऽच्** (V. 2. 127.)—अर्शआदिभ्यः शब्देभ्यः अच्प्रत्ययो भवति मत्वर्थे। **स्वामी** इत्यत्र, स्वमस्यास्तीति विग्रहे, **स्वामिन्नैश्वर्ये** (V. 2. 126.)—स्वामिन्नित्ययं शब्दो निपात्यते ऐश्वर्येऽभिधेये। अनेन आमिनिप्रत्ययो विहितः। **वातातिसाराभ्यां कुक् च** (V. 2. 129.)—आभ्याम् इनिः; तत्सन्नियोगेन आगमः कुक्; **वातकी, अतिसारकी**। **हस्ताज्जातौ** (V. 2. 133.)—जात्यर्थे हस्तादिनिः; **हस्ती** गजः। तुन्दिरस्यास्तीति **तुन्दिभः, वलिभः, वटिभः**, इत्यत्र, **तुन्दिवलिवटेर्भः** (V. 2. 139.)—एतेभ्यः मत्वर्थे भप्रत्ययो भवति। **अहंयुः, शुभंयुः**, इत्यत्र, **अहंशुभमोर्युस्** (V. 2. 140.)—अहं शुभमित्येताभ्यां युस् प्रत्ययो भवति मत्वर्थे। सकारः सिति च (I. 4. 16.) इति पदसंज्ञार्थः॥

48. **प्राग्दिशो विभक्तिः** (V. 3. 1.)—दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः (V. 3. 27.) इति वक्ष्यति; प्रागेतस्मात् दिक्संशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः ते विभक्तिसंज्ञा भवन्तीति वेदितव्याः। कस्मात् सर्वस्मात् इत्याद्यर्थे, **कुतः, सर्वतः, यतः, ततः**, इत्यत्र, **किंसर्वनामबहुभ्योऽ-**

**द्व्यादिभ्यः** (V. 3. 2.)—सर्वनामशब्देभ्यो द्व्यादिवर्जितेभ्यो बहुशब्दात् किमश्च पञ्चम्यन्तेभ्यस्स्वार्थे तसिल् इति प्रत्ययो भवति। इकार उच्चारणार्थः, लकारस्स्वरार्थः। **कु तिहोः** (VII. 2. 104.)—किंशब्दस्य कु इत्ययमादेशो भवति तकारहकारादौ विभक्तौ परतः। स्वाद्युत्पत्तिः। **तद्धितश्चासर्वविभक्तिः** (I. 1. 38.)—तद्धितान्तः असर्वविभक्तिर्यः सः अव्ययसंज्ञो भवति। यस्मात् सर्वा विभक्तिर्नोत्पद्यते सोऽसर्वविभक्तिः। अव्ययादाप्सुपः (II. 4. 82.) इति भवति सुपो लुक्। अन्यत्र त्यदाद्यत्वपररूपत्वे। इदंशब्दस्य तु तसिलि, **इदम इश्** (V. 3. 3.)—इदमः इश् इत्ययमादेशो भवति प्राग्दिशीयेषु परतः। **एतदोऽश्** (V. 3. 5.)—एतच्छब्दस्य अश् इत्ययमादेशो भवति प्राग्दिशीयेषु प्रत्ययेषु परतः; **अतः**। सर्वस्याः इत्यर्थे **सर्वतः** इत्यत्र, **तसिलादिष्वाकृत्वसुचः** (VI. 3. 35.)—पञ्चम्यास्तसिल् (V. 3. 7.) इत्यतःप्रभृति संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् (V. 4. 17.) इत्यतः प्राक् ये प्रत्यया विहिताः तेषु परतः भाषितपुंस्कादनूङ्स्त्रीप्रत्ययान्तस्य पुंवद्भावो भवति। **पर्यभिभ्यां च** (V. 3. 9.)—परि अभि इत्याभ्यां च तसिल्। सर्वोभयार्थे वर्तमानानां प्रत्यय इष्यते; **परितः** सर्वतः, **अभितः** उभयतः। सर्वस्मिन् सर्वासाम् इत्याद्यर्थे **सर्वत्र, यत्र, तत्र, बहुत्र,** इत्यत्र, **सप्तम्यास्त्रल्** (V. 3. 10.)—किंसर्वनामबहुभ्यो द्व्यादिवर्जितेभ्यः सप्तम्यन्तेभ्यः त्रल् इति प्रत्ययो भवति। अत्र इत्यत्र तु एतदोऽश् इत्यशादेशः। **क्व, कुत्र,** इत्यत्र, **किमोऽत्** (V. 3. 12.)—किमस्सप्तम्यन्तात् अत्प्रत्ययो भवति। अत्र यः अत्प्रत्यये तकारः स काति

इति विशेषणार्थः। **क्वाति** (VII. 2. 105.)—किंशब्दस्य क इत्ययमादेशो भवति अत् इति प्रत्यये परतः। त्रलपीष्यते; उत्तरसूत्रात् वा ह च च्छन्दसि (V. 3. 13.) इत्यस्मात् वावचनं पुरस्तादपकृष्यते। तेन त्रलि कु तिहोः इति कोरादेशात् कुत्र इति रूपं भवति। **इतराभ्योऽपि दृश्यन्ते** (V. 3. 14.)—इतराभ्यो विभक्तिभ्यः तसिलादयो दृश्यन्ते। यथा—**ततोभवान्, तत्रभवान्** इत्यादिषु। अस्मिन् देशे इत्यर्थे **इह** इत्यत्र, **इदमो हः** (V. 3. 11.)—इदमः सप्तम्यन्तात् हप्रत्ययो भवति। त्रलोऽपवादः; इदम इशादेशः॥

49. सर्वस्मिन् काले इत्यर्थे **सर्वदा सदा** इतिवत्, **एकदा, अन्यदा, कदा, यदा,** इत्यत्र, **सप्तम्यास्त्रल्** (V. 3. 10.) इति वर्तमाने, **सर्वैकान्यकिंयत्तदः काले दा** (V. 3. 15.)—सर्वादिभ्यश्शब्देभ्यस्सप्तम्यन्तेभ्यः काले वर्तमानेभ्यो दा इति प्रत्ययो भवति। एष त्रलोऽपवादः। **सर्वस्य सोऽन्यतरस्यान्दि** (V. 3. 6.)—सर्वशब्दस्य स इत्ययमादेशो भवति अन्यतरस्यां प्राग्दिशीये दकारादौ प्रत्यये परतः। अस्मिन् काले इत्यर्थे **एतर्हि** इत्यत्र, **इदमो र्हिल्** (V. 3. 16.)—इदमः सप्तम्यन्तात् काले वर्तमानात् र्हिल्प्रत्ययो भवति। हस्यापवादः; लकारस्स्वरार्थः। **एतेतौ रथोः** (V. 3. 4.)—रेफादौ थकारादौ च प्राग्दिशीये प्रत्यये परतः इदमो यथासंख्यम् एत इत इत्येतावादेशौ भवतः। इदम इश् इति प्राप्तस्य इशोऽपवादः। अस्मिन् काले इत्यर्थे, **अधुना** (V. 3. 17.)—अधुनेति निपात्यते। इदमः अश्भावः, धुना च प्रत्ययो भवति। अस्मिन् काले इत्यर्थे **इदानीम्** इत्यत्र, **दानीञ्च**

(V. 3. 18.)—इदमस्सप्तम्यन्तात् काले वर्तमानात् दानीम् इति प्रत्ययो भवति ; चकाराद्धुनेति च । तस्मिन् काले इत्यर्थे **तदा-तदानीम्** इत्यत्र, **तदो दा च** (V. 3. 19.)—तदः सप्तम्यन्तात् काले वर्तमानात् दाप्रत्ययो भवति ; चकारात् दानीश्च । **अनद्यतने र्हिलन्यतरस्याम्** (V. 3. 21.)—किंयत्तदित्येतेभ्यः अनद्यतनकालार्थे अन्यतरस्यां र्हिल्प्रत्ययो भवति ; **कर्हि, यर्हि, तर्हि** । पक्षे—**कदा, यदा, तदा** । **सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः**(V. 3. 22.)—सद्य इत्येवमादयश्शब्दाः कालविशेषे निपात्यन्ते । समानेऽह्नि—**सद्यः** ; समानस्य सभावः, द्यस् प्रत्ययः । पूर्वपूर्वतरयोः परभावः, उत् आरि च प्रत्ययौ ; पूर्वस्मिन् संवत्सरे—**परुत्**, ततः पूर्वस्मिन् संवत्सरे—**परारि** । इदमः समसण् इति प्रत्ययः, इदम इश् च; णकारो वृद्ध्यर्थः ; अस्मिन् संवत्सरे—**ऐषमः** । परशब्दादेद्यविप्रत्ययः, यस्येति लोपः; परस्मिन्नहनि **परेद्यवि** । इदमोऽश्भावः, द्यप्रत्ययः ; अस्मिन्नहनि—**अद्य** । पूर्व अन्य इतर अपर उभय उत्तर इत्येतेभ्यः एद्युस् इति प्रत्ययो भवति । **द्युश्चोभयाद्वक्तव्यः** (वा.)—इति **उभयद्युः**। सर्वेण प्रकारेण इत्यर्थे **सर्वथा,यथा,तथा**,इत्यत्र,**प्रकारवचने थाल्** (V. 3. 23.)—प्रकारवाचिभ्यः किंसर्वनामबहुभ्यस्स्वार्थे थाल्प्रत्ययो भवति । अनेन प्रकारेण इत्यर्थे **इत्थम्** इत्यत्र, **इदमस्थमुः** (V. 3. 24.)—इदंशब्दात् सप्तम्यन्तात् प्रकारवचने थमुप्रत्ययो भवति । अत्र उकारो मकारपरित्राणार्थः । एतदेवोकारकरणं ज्ञापकं न विभक्तौ तुस्माः (I. 3. 4.) इत्यस्य अनित्यत्वस्य ;

तेन किमोऽत् (V. 3. 12.) इत्यत्र तकारस्य इत्संज्ञा भवति। एतेताविति इदादेशः। केन प्रकारेण इत्यर्थे **कथम्** इत्यत्र, **किमश्च** (V. 2. 25.)—किंशब्दात् प्रकारवचनात् थमुप्रत्ययो भवति ॥

50. **पुरस्तात्** वसति, **पुरस्तात्** आगतः, **पुरस्तात्** रमणीयम् ; एवम् **अधस्तात्**, **अवस्तात्**, इत्यादौ, पूर्वस्यां दिशि भवति, पूर्वस्या दिश आगतः, पूर्वा दिक् रमणीया, इति विग्रहे, **दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः** (V. 3. 27.)—दिशां वाचकाः दिक्शब्दाः ; तेभ्यो दिग्देशकालेषु वर्तमानेभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्यः स्वार्थे अस्तातिप्रत्ययो भवति। यथासंख्यमत्र नेष्यते ; इकारस्तकारपरित्राणार्थः। **पूर्वाधरावराणामसि पुरधवश्चैषाम्** (V. 3. 39.) इति वर्तमाने, **अस्ताति च** (V. 3. 40.)—अस्तातिप्रत्यये परतः पूर्व अधर अवर इत्येतेषां यथासंख्यं पुर् अध् अव् इत्येते आदेशा भवन्ति **अवरस्तात्** वसति इत्यत्र, **विभाषावरस्य** (V. 3. 41.)—पूर्वेण नित्ये प्राप्ते विकल्प्यते ; अवरशब्दस्यास्तातिप्रत्यये परतो विभाषा अव् इत्ययमादेशो भवति। **दक्षिणतः** रमणीयम्, एवम् **उत्तरतः** इत्यादौ, **दक्षिणोत्तराभ्यामतसुच्** (V. 3. 28.)—दक्षिणोत्तरशब्दाभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां दिग्देशकाले वर्तमानाभ्याम् अतसुच् प्रत्ययो भवति अस्तातेरर्थे। काले दक्षिणाशब्दस्यासंभवात् दिग्देशवृत्तिर्गृह्यते। अकारः षष्ठ्यतसर्थप्रत्ययेन (II. 3. 30.) इति विशेषणार्थः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः (वा. II. 2. 26.)। **उत्तरात्** वसति, **उत्तरात्** आगतः, **उत्तरात्**

रमणीयम्; एवम् अधरात् इत्यादौ, **उत्तराधरदक्षिणादातिः** (V. 3. 34.)—उत्तरादिभ्य आतिप्रत्ययो भवति अस्तातेरर्थे। **उत्तरेण** वसति इत्यादौ, **एनबन्यतरस्यामदूरेऽपञ्चम्याः** (V. 3. 35.)—उत्तरादिभ्यः अन्यतरस्याम् एनप्प्रत्ययो भवति अस्तातेरर्थे, अदूरे चेदवधिमानवधेर्भवति। विभक्तित्रये प्रकृते अपञ्चम्या इति पञ्चमी पर्युदस्यते। तेनायं सप्तमीप्रथमान्तात् प्रत्ययो भवतीति विज्ञायते। अदूरे इति किम्? उत्तराद्वसति। अपञ्चम्या इति किम्? उत्तरादागतः। एनबभावे आतिः; **उत्तरात्**। **परतो** वसति **परस्तात्** वसति, **अवरतो** वसति **अवरस्तात्** वसति, इत्यत्र, **विभाषा परावराभ्याम्** (V. 3. 29.)—परावराभ्यां विभाषा अतसुच्प्रत्ययो भवति अस्तातेरर्थे॥

51. **प्राक्** वसति, **प्राक्** आगतः **प्राक्** रमणीयम्, एवं **प्रत्यक्** इत्यादौ, **अञ्चेर्लुक्** (V. 3. 30.)—अञ्चत्यन्तेभ्यो दिक्शब्देभ्य उत्तरस्य अस्तातिप्रत्ययस्य लुक् भवति। प्राची इति जाते, लुक् तद्धितलुकि (I. 2. 49.) इति स्त्रीप्रत्ययस्य लुक्; चोः कुः (VIII. 2. 30.) इति चकारस्य ककारः। **उपर्युपरिष्टात्** (V. 3. 31.)—उपरि उपरिष्टात् इत्येतौ अस्तात्यर्थे निपात्येते। ऊर्ध्वशब्दस्य उपभावः; रिल् रिष्टातिल् इति प्रत्ययौ च। एवम् ऊर्ध्वायां दिशि **उपरि उपरिष्टात्** वसति इति भवतः। **पश्चात्** (V. 3. 32.)—एष निपात्यते अस्तात्यर्थे; अपरस्य पश्चभावः आतिश्च प्रत्ययः; अपरस्यां दिशि **पश्चात्** वसति। **अर्धोत्तरपदस्य दिक्पूर्वपदस्य पश्चभावो वक्तव्यः** (वा.);

इति **दक्षिणपश्चार्धः** । **विनापि पूर्वपदेन** (वा.); इति **पश्चार्धः** । **दक्षिणादाच्** (V. 3. 36.)—दक्षिणशब्दात् आच् इति प्रत्ययो भवति अस्तातेरर्थे पञ्चमीं वर्जयित्वा । इति **दक्षिणा** वसति, **दक्षिणा** रमणीयम् । अपञ्चम्या इत्येव; दक्षिणतः आगतः । **दक्षिणाहि** वसति इत्यत्र, **आहि च दूरे** (V. 3. 37.)—दक्षिणशब्दादाहिप्रत्ययो भवति अस्तातेरर्थे, चकारादाच्च, दूरे चेदवधिमानवधेर्भवति, पञ्चमीं वर्जयित्वा । **उत्तराहि** वसति, **उत्तरा** वसति, इत्यत्र, **उत्तराच्च** (V. 3. 38.)—उत्तरशब्दात् आहि आच् इत्येतौ प्रत्ययौ भवतः अस्तातेरर्थे, दूरे चेदवधिमानवधेर्भवति; अपञ्चम्या इत्येव । **पुरो** वसति, **पुर** आगतः, **पुरो** रमणीयम्; एवम् **अधः** इत्यादौ, **पूर्वाधरावराणामसि पुरधवश्चैषाम्** (V. 3. 39.)—अपञ्चम्या इति निवृत्तम्; पूर्व अधर अवर इत्येतेषामसिप्रत्ययो भवति अस्तातेरर्थे; तत्सन्नियोगेन चैषां यथासंख्यं पुर् अध् अव् इत्येते आदेशा भवन्ति ॥

52. **एकधा** भुङ्क्ते, **द्विधा**, **त्रिधा**, **चतुर्धा**, **पञ्चधा**, **षोढा**, इत्यादौ, **संख्याया विधार्थे धा** (V. 3. 42.)—विधा प्रकारः; संख्यावाचिभ्यश्शब्देभ्यो विधार्थे धाप्रत्ययो भवति । षोढेत्यत्र, षष उत्वमुत्तरपदादेष्टुत्वञ्च । **अधिकरणविचाले च** (V. 3. 43.)—संख्याया इत्येव; अधिकरणं द्रव्यम्; तस्य विचालः संख्यान्तरापादनम्, एकस्य अनेकीकरणमनेकस्यैकीकरणं वा; तत्रार्थे च धा; एकं राशिं **पञ्चधा** कुरु, अनेकम् अग्रम् **एकधा** कुरु । **ऐकध्यम्** इत्यत्र, **एकाद्धो ध्यमुञन्यतरस्याम्** (V. 3. 44.)

—एकशब्दादुत्तरस्य धाप्रत्ययस्य ध्यमुञादेशो भवति अन्यतरस्याम्; अकारो वृद्ध्यर्थः । पक्षे—**एकधा** । **द्वैधम्, त्रैधम्,** इत्यत्र **द्वित्र्योश्च धमुञ्** (V. 3. 45.)—द्वि त्रि इत्येताभ्याम् उत्तरस्य धाप्रत्ययस्य धमुञादेशो भवति अन्यतरस्याम् । पक्षे—**द्विधा, त्रिधा** । **धमुञन्तात् स्वार्थे डदर्शनम्** (वा.); पथि **द्वैधानि** संश्रयन्ते । **द्वेधा, त्रेधा,** इत्यत्र, **एधाच्च** (V. 3. 46.)—द्वि त्रि इत्येताभ्याम् उत्तरस्य धाप्रत्ययस्य एधाच् इत्यादेशो भवति अन्यतरस्याम् । आदेशचकारस्स्वरार्थः; यस्येति लोपः ॥

53. याप्य इति शब्दः कुत्सितार्थः; अतः याप्यो वैयाकरणः इत्यर्थे **वैयाकरणपाशः** इत्यत्र प्रयोगे, **याप्ये पाशप्** (V. 3. 47.)—याप्येऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे गम्यमाने पाशप् इति प्रत्ययो भवति । **एकाकी एककः एकः,** इत्यत्र, **मानपश्वङ्गयोः कन्लुकौ च** (V. 3. 51.) इत्यनुवर्तमाने, **एकादाकिनिच्चासहाये** (V. 3. 52.)—एकशब्दादसहाये वर्तमानात् आकिनिच् इति प्रत्ययो भवति; चकारात् कन्लुकौ च । **आढ्यचरः, सुकुमारचरः, दर्शनीयचरः,** इत्यत्र, पूर्वमाढ्यं भूत इति विग्रहे, **भूतपूर्वे चरट्** (V. 3. 53.)—पूर्वं भूतो भूतपूर्वः इति सुप्सुपेति समासः; भूतपूर्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे चरट्प्रत्ययो भवति । षः प्रत्ययस्य (I. 3. 6.), चुटू (I. 3. 7.) इति योगविभागेन अनित्यत्वज्ञापनात् चकारस्येत्संज्ञा न भवति । टकारो ङीबर्थः । **दर्शनीयचरी** इत्यत्र, तसिलादिष्विति पुंवद्भावः । देवदत्तस्य भूतपूर्वो गौरिति विग्रहे, **देवदत्तरूप्यः देवदत्तच-**

**रो** वा इत्यत्र, **षष्ठ्या रूप्य च** (V. 3. 54.)—षष्ठ्यन्तात् प्रातिपदिकात् रूप्यप्रत्ययो भवति भूतपूर्वेऽभिधेये, चकाराच्चरट् ॥

54. सर्वे इमे आढ्याः, अयमेषामतिशयेनाढ्यः **आढ्यतमः**; एवमेव **पटुतमः पटिष्ठः**, इत्यत्र, **अतिशायने तमबिष्ठनौ** (V. 3. 55.)—अतिशयनमतिशायनं प्रकर्षः ; निपातनाद्दीर्घः, अतिशायनविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् तमप् इष्ठन् इत्येतौ प्रत्ययौ भवतः। पकारनकारौ स्वरार्थौ । **तुरिष्ठेमेयस्सु** (VI. 4. 154.) इति अनुवर्तमाने, **टेः** ( VI. 4. 155. )—भस्याङ्गस्य टेर्लोपो भवति इष्ठन् इमनिच् ईयसुन् इत्येतेषु परतः। सर्वे इमे पचन्ति, अयमेषामतिशयेन पचतीति विग्रहे **पचतितमाम्**, एवं **पठतितमाम्**, इत्यत्र, **तिङश्च** ( V. 3. 56. )—तिङन्ताच्चातिशायने तमप् प्रत्ययो भवति। ङ्याप्प्रातिपदिकादित्यधिकारात्तिङो न प्राप्नोति इति इदं वचनमारभ्यते । **तरप्तमपौ घः** (I. 1. 22.)—तरप् तमप् इत्येतौ द्वौ प्रत्ययौ घसंज्ञकौ भवतः। पदसंज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणं तदन्तविधिप्रतिषेधार्थम् । **उच्चैस्तमाम्, किंतमाम्, पचतितमाम्, प्राह्णेतमाम्**, इत्यत्र, **किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे** (V. 4. 11.)—किमः एकारान्तात् तिङन्तात् अव्ययाच्च यो विहितो घः स एव किमेत्तिङव्ययघः ; तदन्तात् अद्रव्यप्रकर्षे आमुप्रत्ययो भवति। **आढ्यतरः, सुकुमारतरः, पचतितराम्, लघुतरः, लघीयान्, लघ्वितरा, लघीयसी**, इत्यत्र, द्वाविमावाढ्यौ अयम् अनयोरातिशयेनाढ्यः इत्यर्थे, **द्विवचनविभज्योपपदे तरबीयसुनौ** (V. 3. 57.)—द्वयोरर्थयोर्वचनं द्विवचनम् ;

विभक्तव्यो विभज्यः, निपातनात् यत् ; द्व्यर्थे, विभज्ये च उपपदे, प्रातिपदिकात् तिङन्ताच्च अतिशायनेऽर्थे तरप् ईयसुन् इत्येतौ प्रत्ययौ भवतः । यथासंख्यमत्र नेष्यते । माधुराः पाटलीपुत्रकेभ्यः **आढ्यतराः** ॥

55. **अजादी गुणवचनादेव** (V. 3. 58.)—गुणवचनादेव अजादिप्रत्ययौ इष्ठन्नीयसुनौ भवतः । **घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः** (VI. 3. 43.)—घादिषु परतो भाषितपुंस्कात् विहितो यो ङीप्रत्ययः तदन्तस्यानेकाचोऽङ्गस्य ह्रस्वो भवति ; **पट्वितरा, लघ्वितरा** । टेः (VI. 4. 155.) इति भवति टिलोपः, उगितश्चेति ङीप्; **पटीयसी, लघीयसी** । सर्वे इमे प्रशस्याः, अयमेषामतिशयेन प्रशस्यः इत्यर्थे, **श्रेष्ठः श्रेयान्** इत्यत्र, पूर्ववदिष्ठेयसुनौ भवतः ; **प्रशस्यस्य श्रः** ( V. 3. 60. )—प्रशस्यशब्दस्य श्र इत्ययमादेशो भवति इष्ठनीयसुनोः परतः । टेरिति टिलोपे प्राप्ते, **प्रकृत्यैकाच्** (VI. 4. 63.)—एकाच्छब्दरूपं प्रकृत्या भवति इष्ठेमेयस्सु परतः ; गुणः । **ज्येष्ठः ज्यायान्** इत्यत्र, **ज्य च** (V. 3. 61.)—प्रशस्यशब्दस्य ज्य इत्ययमादेशो भवति इष्ठेयसुनोः परतः । **ज्यादादीयसः** (VI. 4. 160.)—ज्यात् परस्य ईयसुनः आकारादेशो भवति ; आदेः परस्य (I. 1. 54.) इत्यादेः भवति । **वृद्धस्य च** (V. 3. 52.)—वृद्धशब्दस्य च ज्य इत्ययमादेशो भवति इष्ठेयसुनोः परतः ; **ज्यायान् ज्येष्ठो** वा भ्राता । **नेदिष्ठः नेदीयान्, साधिष्ठः साधीयान्**, इत्यत्र, अयमेषामतिशयेनान्तिकः, अयमनयोरातिशयेनान्तिकः, अयमेषामाति-

शयेन बाढः, अयमनयोरतिशयेन बाढः, इत्यर्थे, **अन्तिकबाढयोर्नेदसाधौ** (V. 3. 63.)—अन्तिक बाढ इत्येनयोः नेद साध इत्येतावादेशौ भवतः इष्ठेयसुनोः परतः । अयमतिशयेन युवा, अयमतिशयेनाल्पः इत्यर्थे, **कनिष्ठः कनीयान्** इत्यत्र, **युवाल्पयोः कनन्यतरस्याम्** (V. 3. 64.)—युव अल्प इत्येतयोरन्यतरस्यां कन् इत्यादेशो भवति इष्ठेयसुनोः परतः । पक्षे—**यविष्ठः, यवीयान्, अल्पिष्ठः, अल्पीयान्** । यविष्ठः यवीयान् इत्यत्र, **स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः** (VI. 4. 156.)—स्थूलादीनां यणादिपरं लुप्यते इष्ठेमेयस्सु परतः; पूर्वस्य च गुणो भवति; **स्थविष्ठः स्थवीयान्, दविष्ठः दवीयान्, ह्रसिष्ठः ह्रसीयान्, क्षेपिष्ठः क्षेपीयान्, क्षोदिष्ठः क्षोदीयान्** । ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादिगतानामिमनिच्यपि एवमेव भवन्ति रूपाणि; **ह्रसिमा, क्षेपिमा, क्षोदिमा** । अयमतिशयेन वसुमान्, अयमतिशयेन स्रग्वी, अयमतिशयेन त्वग्वान्, इत्यर्थे, **वसिष्ठः वसीयान्, स्रजिष्ठः स्रजीयान्, त्वचिष्ठः त्वचीयान्**, इत्यत्र, **विन्मतोर्लुक्** (V. 3. 65.)—विनो मतुपश्च लुक् भवति इष्ठेयसुनोः । **प्रथिष्ठः प्रथीयान् प्रथिमा, द्रढिष्ठः द्रढीयान् द्रढिमा, क्रशिष्ठः क्रशीयान् क्रशिमा**, इत्यत्र, **र ऋतो हलादेर्लघोः** (VI. 4. 161.)—हलादेरङ्गस्य लघोः ऋकारस्य र इत्ययमादेशो भवति इष्ठेमेयस्सु परतः ।

पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥

लघोरिति किम्? कृष्णिष्ठः कृष्णीयान् कृष्णिमा। प्रियस्य नाम—**प्रेष्ठः प्रेयान् प्रेमा**; स्थिरस्य—**स्थेष्ठः स्थेयान् स्थेमा**; स्फिरस्य—**स्फेष्ठः स्फेयान् स्फेमा**; उरोः—**वरिष्ठः वरीयान् वरिमा**; बहुलस्य—**बंहिष्ठः बंहीयान् बंहिमा**; गुरोः—**गरिष्ठः गरीयान् गरिमा**; वृद्धस्य—**वर्षिष्ठः वर्षीयान्**; तृप्रस्य—**त्रपिष्ठः त्रपीयान्**; दीर्घस्य—**द्राघिष्ठः द्राघीयान् द्राघिमा**; बृन्दारकस्य—**बृन्दिष्ठः बृन्दीयान्**; इत्यत्र, **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घबृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिबृन्दाः** (VI. 4. 157.)—प्रियादीनां शब्दानां यथासंख्यं प्रादय आदेशा भवन्ति इष्ठेमेयस्सु प्रत्ययेषु परतः। तत्र प्रियस्थिरस्फिरोरुबहुलगुरुदीर्घशब्दा एव पृथ्वादिषु पठ्यन्ते। **भूयिष्ठः भूयान् भूमा**, इत्यत्र, अयमेषामतिशयेन बहुः अयमेतयोरिति च बहोर्भाव इति चार्थे, **बहोर्लोपो भू च बहोः** (VI. 4. 158.)—बहोरुत्तरेषाम् इष्ठेमेयसाम् लोपो भवति; बहोश्च भू इत्ययमादेशः। भूयिष्ठः इत्यत्र, **इष्ठस्य यिट् च** (VI. 4. 159.)—बहोरुत्तरस्येष्ठस्य यिडागमो भवति; बहोश्च भवति भू इत्ययमादेशः। लोपापवादः॥

56. प्रशस्तो वैयाकरणः **वैयाकरणरूपः, याज्ञिकरूपः, पठतिरूपम्**, इत्यत्र, **प्रशंसायां रूपप्** (V. 3. 66.)—प्रशंसा स्तुतिः, प्रकृत्यर्थविशेषणश्चैतत्; प्रशंसाविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् तिङन्ताच्च रूपप्प्रत्ययो भवति स्वार्थे। स्वार्थिकाश्च प्रत्ययाः प्रकृत्यर्थविशेषस्य द्योतका भवन्ति। ईषदसमाप्तः पटुः **पटुकल्पः पटुदेश्यः पटुदेशीयः**; एवमेव **मृदुकल्पः** इत्यादौ, **ईषदसमाप्तौ कल्पब्दे-**

**श्यदेशीयरः** (V. 3. 67.)—सम्पूर्णता पदार्थानां समाप्तिः ; स्तोकेनासंपूर्णता ईषदसमाप्तिः ; प्रकृत्यर्थविशेषणञ्चैतत् ; ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् तिङन्ताच्च स्वार्थे कल्पप् देश्य देशीयर् इत्येते प्रत्यया भवन्ति । रेफः **उपोत्तमं रिति** (VI. 1. 217.) इति विशेषणार्थः । पुंवत्कर्मधारयजातीयदेशीयेषु (VI. 3. 42.) इति पुंवद्भावात् स्त्रियां **पटुदेशीया** ; अन्यत्र प्रत्यययोः पुंवद्भावाभावात् **पट्विकल्पा पट्विरूपा** । तिङश्च **पचतिकल्पम्** । **पचतिरूपम्, पचतिकल्पम्**, इत्यत्र, लिङ्गमशिष्यं लोकाश्रयत्वात् लिङ्गस्य इति वचनात् नपुंसकत्वम् । **बहुपटुः, बहुमृदुः, बहुतृणम्**, इत्यत्र, ईषदसमाप्तः पटुरिति विग्रहे, **विभाषा सुपो बहुच् पुरस्तात्तु** (V. 3. 68.)—ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानस्य प्रातिपदिकस्य सुबन्तस्य पुरस्तात् स्वार्थे विभाषा बहुच् प्रत्ययो भवति ; चकारस्स्वरार्थः । पटुप्रकारः **पटुजातीयः, पटुजातीया, पाचकजातीयः, पाचकजातीया**, इत्यादौ, **प्रकारवचने जातीयर्** (V. 3. 69.)—सामान्यस्य भेदको विशेषः प्रकारः ; तस्य वचने सुबन्तात् स्वार्थे जातीयर् प्रत्ययो भवति । प्रकारवति चायं प्रत्ययः न प्रकारमात्रे ; थाल् पुनः प्रकारमात्र एव भवति । रेफ उपोत्तममिति विशेषणार्थः । **महाजातीयः** इत्यत्र आन्महत (VI. 3. 46.) इत्यात्वम् ॥

57. **प्रागिवात् कः** (V. 3. 70.)—इवे प्रतिकृतौ (V. 3. 96.) इति वक्ष्यति ; प्रागेतस्मादिवशब्दसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः कप्रत्ययस्तेष्वर्थेषु भवतीति वेदितव्यः । तिङन्तादयं

प्रत्ययो नेष्यते; अकच् तु इष्यते । **उच्चकैः, नीचकैः, एषकः, असकौ, पचतकि,** इत्यादौ, **अव्ययसर्वनाम्नामकच् प्राक् टेः** (V. 3. 71.)—अव्ययसर्वनाम्नां तिङन्तानां च प्रागिवीयेष्वर्थेषु प्राक् टेरकच्प्रत्ययो भवति । कस्य अपवादः । **अज्ञाते** (V. 3. 73.)—अज्ञातविशेषः अज्ञातः; अज्ञातार्थे वर्तमानात् प्रातिपदिकात् तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययो भवति । कस्यायमश्वः इत्यर्थे **अश्वकः**; एवमेव **खरकः** इत्यादि । कुत्सितो देवदत्तः **देवदत्तकः** इत्यत्र, **कुत्सिते** (V. 3. 74.)—कुत्सितोपाधिके वर्तमानात् प्रातिपदिकात् तिङन्ताच्च यथाविहितं प्रत्ययः । **अनुकम्पायाम्** (V. 3. 76.)—कारुण्येन अभ्युपपत्तिः परस्य अनुकम्पा; तस्यां गम्यमानायां तिङन्तात् प्रातिपदिकाच्च यथाविहितं प्रत्ययः; अनुकम्पितः पुत्रः **पुत्रकः** । **अल्पे** (V. 3. 85.)—परिमाणापचये अल्पशब्दः; अल्पत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् यथाविहितं प्रत्ययः स्वार्थे भवति; अल्पं तैलं **तैलकम्** । ह्रस्वो वृक्षो **वृक्षकः** इत्यत्र, **ह्रस्वे** (V. 3. 86.)—ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकाद्यथाविहितं प्रत्ययः । **बदरिका, जम्बुका** इत्यत्र, **केऽणः** (VII. 4. 13.)—प्रकृत्यर्थे परतोऽणन्तस्याङ्गस्य ह्रस्वो भवति । **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः** (VII. 3. 44.)—प्रत्ययस्थात् ककारात् पूर्वस्य अकारस्य इकारो भवति आपि परतः, स चेदाप् सुपः परो न भवति; **जटिलिका, मुण्डिका** । असुपः इति किम्? बहुपरिव्राजका मथुरा । **मामकनरकयोरुपसंख्यानं कर्तव्यमप्रत्ययस्थत्वात्** (वा.)—इति

**मामिका, नारिका।** **न यासयोः** (VII. 3. 45.)—या सा इत्येतयोः इकारादेशो न भवति, **यका, सका। यत्तदोः प्रतिषेधे त्यकन उपसंख्यानम्** (वा.)—इति **उपत्यका, अधित्यका। उदीचामातस्स्थाने यकपूर्वायाः** (VII. 3. 46.)—उदीचामाचार्याणां मतेन यकारपूर्वायाः ककारपूर्वायाश्च स्त्रीप्रत्ययस्य आकारस्य स्थाने य अकारः तस्य इकारादेशः; **क्षत्रियका क्षात्रियिका, चटकका चटकिका। भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि** (VII. 3. 47.)—नञ्पूर्वाणां भस्त्रादीनाम् आतः स्थाने यः अकारः तस्य इकारो न भवति उदीचामाचार्याणां मतेन; आपिना केवलानामपि न भवति। **अभस्त्रका भस्त्रका** इत्यादि; पक्षे—**अभस्त्रिका भास्त्रिका** इत्यादि। खट्वाशब्दात् स्वार्थे कप्रत्यये ह्रस्वे च कृते, **अभाषितपुंस्काच्च** (VII. 3. 48.)—अभाषितपुंस्कात् विहितस्य आतः स्थाने यः अकारः तस्योदीचामाचार्याणां मतेन इकारादेशो भवति; **खट्विका। आदाचार्याणाम्** (VII. 3. 49.)—अभाषितपुंस्कात् आतः स्थाने यः अकारः तस्य आचार्याणां मतेन आकारादेशो भवति; **खट्वाका**। इकाराकाराभावपक्षे—**खट्वका। बहुकुमारीकः** इत्यत्र **केऽणः** (VII. 4. 13.) इति ह्रस्वो न भवति कुतः? **न कपि** (VII. 4. 14.)—कपि प्रत्यये परे अणो ह्रस्वो न भवति—इति निषेधात्। **बहुमालाकः** इत्यत्र, **आपोऽन्यतरस्याम्** (VII. 4. 15.)—आबन्तस्य अङ्गस्य कपि परतः ह्रस्वो न भवति वा। ह्रस्वपक्षे—**बहुमालकः। कतरो** भवतो देवदत्तः, **यतरो** विष्णुमित्रः, **ततरः** आगच्छतु, इत्यत्र, **कियत्तदो निर्धारणे द्वयो-**

**रेकस्य डतरच्** (V. 3. 92.)—किंयत्तदः निर्धारणे गम्यमाने डतरच् प्रत्ययो भवति ; निर्धार्यमाणवाचिभ्यः स्वार्थे प्रत्ययो भवति । जात्या क्रियया गुणेन संज्ञया वा समुदायादेकदेशस्य पृथक्करणं निर्धारणम् । टेः (VII. 4. 143.) इति डित्त्वात् टिलोपः । **कतमो** भवतां कठः, **यतमो** भवतां कालापः, **ततमः** आगच्छतु, इत्यत्र, **वा बहूनां जातिपरिप्रश्ने डतमच्** (V. 3. 93.)—किंयत्तद इति वर्तते, निर्द्धारणे एकस्येति च ; बहूनां मध्ये एकस्य निर्धारणे गम्यमाने जातिपरिप्रश्नविषयेभ्यः किमादिभ्यो डतमच् प्रत्ययो भवति विकल्पेन । परिप्रश्नग्रहणं किम एव विशेषणम् ; न यत्तदोः, असंभवात् । कठकालापशब्दौ गोत्रचरणान्तौ गृह्येते । वावचनमकच्-प्रत्ययार्थम् ; **यको** भवतां कालापः **सकः** आगच्छतु । अव्यय-सर्वनाम्नामकच् प्राक् टेः (V. 3. 71.) इति अकच् । जातिग्रहणन्तु सर्वैरेव सम्बध्यते । किमोऽस्मिन् विषये बहूनां मध्ये निर्धारणे डतरजपीष्यते ; कठः **कतरो** भवताम् । कतरकतमौ जातिपरिप्रश्ने (II. 1. 63.) इति वचनात् तत् सिद्धम् । **एकतरः** इत्यत्र, **एकाच्च प्राचाम्** (V. 3. 94.)—एकशब्दाच्च प्राचामाचार्याणां मतेन डतरच् डतमच् इत्येतौ प्रत्ययौ भवतः स्वस्मिन् विषये ; चकारो डतरजोऽनुकर्षणार्थः । द्वयोर्निर्धारणे डतरच्, बहूनां निर्धारणे डतमच् । जातिपरिप्रश्नग्रहणमिह नानुवर्तते ; सामान्येन विधानम् । वानुवृत्त्या प्राचांग्रहणं पूजार्थम् । **अवक्षेपणे कन्** (V. 3. 95.)—अवक्षिप्यते येन तत् अवक्षेपणम् ; तस्मिन् वर्तमानात् प्रातिपदिकात् कन् ; **व्याकरणकेन नाम त्वं गर्वितः । इबे**

**प्रतिकृतौ** (V. 3. 96.)—इवार्थे यत् प्रातिपदिकं वर्तते तस्मात् कन्; इवार्थः सादृश्यम्; तस्य विशेषणं प्रतिकृतिग्रहणम्; प्रतिकृतिः प्रतिरूपकम्। अश्व इव अयमश्वप्रतिकृतिः **अश्वकः** ॥

58. **पञ्चकृत्वः, दशकृत्वः, सप्तकृत्वः**, इत्यत्र, **संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्** (V. 4. 17.)—संख्यावाचिभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः स्वार्थे कृत्वसुच् प्रत्ययो भवति; पौनःपुन्यमभ्यावृत्तिः। **द्विः, त्रिः, चतुः**, इत्यत्र, **द्वित्रिचतुर्भ्यस्सुच्** (V. 4. 18.)—द्वि त्रि चतुर् इत्येतेभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः सुच् प्रत्ययो भवति। **सकृत्** इत्यत्र, **एकस्य सकृच्च** (V. 4. 19.)—एकशब्दात् सुच् प्रत्ययो भवति, तत्सन्नियोगेन सकृदादेशश्च भवति। **विभाषा बहोर्धाऽविप्रकृष्टकाले** (V. 4. 20.)—बहुशब्दात् क्रियाभ्यावृत्तिगणने धा इति प्रत्ययो वा भवति, क्रियाणामुत्पत्तयश्चेदासन्नकालाः; **बहुधा** दिवसस्य भुङ्क्ते। पक्षे—**बहुकृत्वः**। अविप्रकृष्टकाले इति किम्? बहुकृत्वो मासस्य भुङ्क्ते। **तत्प्रकृतवचने मयट्** (V. 4. 21.)—तदिति प्रथमासमर्थविभक्तिः; प्राचुर्येण प्रस्तुतं प्रकृतम्; एतदर्थे वर्तमानात् प्रथमान्तात् स्वार्थे मयट्; **अन्नमयो यज्ञः, अपूपमयं पर्व**। **अनन्तावसथेतिहभेषजाञ्ञ्यः** (V. 4. 23.)—एतेभ्यः स्वार्थे ञ्यः; **आनन्त्यम्, आवसथ्यम्, ऐतिह्यम्, भैषज्यम्**। **पादार्घाभ्यां च** (V. 4. 25.)—तादर्थ्ये इत्येव; पाद अर्घ इत्याभ्यां चतुर्थीसमर्थाभ्यां यत्; पादार्थमुदकं **पाद्यम्, अर्घ्यम्**। चकारात् नव्य सूर्य मर्त्य इत्यादयो भवन्ति। **नवस्य नू आदेशः**

**त्नप्तनप्खाश्च प्रत्ययाः** (वा.)—इति **नूत्नम्, नूतनम्, नवीनम्** । **नश्च पुराणे प्रात्** (वा.)—इति **प्रणम्, प्रत्नम्, प्रतनम्-प्रीणम्** । **भागरूपनामभ्यो धेयप्रत्ययो वक्तव्यः** (वा.)—इति **भागधेयम्, रूपधेयम्, नामधेयम्** । **अतिथेर्ञ्यः** (V. 4. 26.)—तादर्थ्ये अतिथिशब्दात् ञ्यप्रत्ययो भवति ; अतिथये इदम् **आतिथ्यम्** । **यावकः, मणिकः,** इत्यादौ, **यावादिभ्यः कन्** (V. 4. 29.)—यावादिभ्यस्स्वार्थे कन् प्रत्ययो भवति । **विनयादिभ्यष्ठक्** (V. 4. 34.)—विनयादिभ्यः स्वार्थे ठक् ; **वैनयिकः, आकस्मिकः, सामयिकः, सामयाचारिकः,** इत्यादि । **उपायाद्ध्रस्वत्वं च** (वा.)—इति **औपयिकः** । **तद्युक्तात् कर्मणोऽण्** (V. 4. 36.)—व्याहृतार्थया वाचा यत् कर्म युक्तं तद्वाचिनः कर्मशब्दात् स्वार्थेऽण् ; कर्मैव **कार्मणम्** । **प्रज्ञादिभ्यश्च** (V. 4. 38.)—प्रज्ञादिभ्यः स्वार्थे अण् भवति ; प्रज्ञ एव **प्राज्ञः**। एवमेव मानस-राक्षस-बान्धवादयः । **मृदस्तिकन्** (V. 4. 39.)—मृद् इत्येस्मात् स्वार्थे तिकन्; **मृत्तिका** । **सस्नौ प्रशंसायाम्** (V. 4. 40.)—रूपपोऽपवादः ; मृदः प्रशंसायां स स्न इत्येतौ भवतः ; **मृत्सा, मृत्स्ना** । **बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्** (V.4.42.)—बह्वर्थात् अल्पार्थात् च कारकवाचिनः शस् वा भवति ; **बहुशो** बहूनि वा ददाति। एवम् **अल्पशः, कणशः,** इत्यादि । **संख्यैकवचनाच्च वीप्सायाम्** (V. 4. 43.)—संख्यावाचिभ्यः शब्देभ्यः एकवचनात् च वीप्सायां शस् प्रत्ययो वा भवति ; **एकशः, द्विशः, त्रिशः, अनेकशः, माषशः, पादशः,**

इत्यादि । **प्रतियोगे पञ्चम्यास्तसिः** (V. 4. 44.)—प्रतिना योगे या पञ्चमी विहिता तदन्तात् भवति तसिः ; **प्रद्युम्नः कृष्णतः प्रति । तसिप्रकरणे आद्यादिभ्य उपसंख्यानम्** (वा.)—इति **आदितः, मध्यतः, पार्श्वतः,** इत्यादि । **अपादाने चाहीयरुहोः** (V.4.45.)—अपादाने या पंञ्चमी तस्याः तसिः वा भवति, तच्चेदपादानं हीयरुहोः संबन्धि न भवति ; **ग्रामतः** आयाति, **चोरतः** बिभेति, इत्यादि । अहीयरुहोः किम् ? सार्थात् हीयते, पर्वतादवरोहति ॥

59. **अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः** (V. 4. 50.)—कारणस्य विकाररूपेण भूतस्य तदात्मना भावः अभूततद्भावः ; सम्पद्यतेः कर्ता सम्पद्यकर्ता ; अभूततद्भावे गम्यमाने सम्पद्यकर्तरि वर्तमानात् कृ भू अस् इत्येतैः योगे च्विप्रत्ययो भवति । **अस्य च्वौ** (VII. 4. 32.)—अवर्णान्तस्याङ्गस्य ईकारादेशो भवति च्वौ परतः ; अशुक्लः शुक्लः सम्पद्यते, तं करोति **शुक्लीकरोति** मलिनम् । एवं **शुक्लीभवति, शुक्लीस्यात्** । अभूततद्भावे इति किम् ? शुक्लं करोति ; नात्र प्रकृतिर्विवक्षिता । कृभ्वस्तियोगे इति किम् ? अशुक्लः शुक्लो जायते । **अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च** (V.4. 51.)—अरुःप्रभृतीनामन्तस्य लोपो भवति कृभ्वस्तियोगे ; चात् च्विश्च । **अरूकरोति** ; अत्र **च्वौ च** (VII. 4. 26.)—च्विप्रत्यये परतः अजन्ताङ्गस्य भवति दीर्घः ; इति दीर्घः । **उन्मनीकरोति** ; अस्य च्वौ इति ईकारः । एवम् **उच्चक्षूकरोति, विचेतीभवति, विरहीस्यात्, विरजीकरोति । विभाषा साति कार्त्स्न्ये** (V. 4. 52.)—अभूततद्भावे इति सर्वमनुवर्तते ;

अस्मिन् विषये विभाषा सातिप्रत्ययो भवति कार्त्स्न्ये गम्यमाने; यदि प्रकृतिः कृत्स्ना विकारमापद्यते इत्यर्थः; **अग्निसाद्भवति शस्त्रम्**। पक्षे—**अग्नीभवति शस्त्रम्**। कार्त्स्न्ये इति किम्? एकदेशेन पटः शुक्लीभवति। **तदधीनवचने** (V. 4. 54.)—अभूततद्भावे इति निवृत्तम्, अर्थान्तरोपादानात्; पूर्वसूत्रात् सम्पदा चेति वर्तते; तदधीनं तदायत्तं तत्स्वामिकमित्यर्थः; स्वामिसामान्यम् ईशितव्यसामान्यञ्च तदधीनशब्देन निर्दिश्यते; स्वामिविशेषवाचिनः शब्दात् ईशितव्येऽभिधेये सातिप्रत्ययो भवति कृभ्वस्तिभिः सम्पदा च योगे; राजाधीनङ्करोति **राजसात्करोति, राजसाद्भवति, राजसात्संपद्यते**। **देये त्रा च** (V. 4. 55.)—तदधीनवचने इत्यनुवर्तते; तस्य विशेषणं देयग्रहणम्; दातव्यं देयम्; तदधीने देये त्राप्रत्ययो भवति; चात् सातिः; कृभ्वस्तिभिः संपदा च योगे; ब्राह्मणाधीनं देयं करोति **ब्राह्मणत्राकरोति, ब्राह्मणसात्करोति**। देये इति किम्? राजसाद्भवति राष्ट्रम्। **अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच्** (V. 4. 57.)—यत्र ध्वनौ अकारादयो वर्णाः विशेषरूपेण न व्यज्यन्ते सोऽव्यक्तः; तस्य अनुकरणमव्यक्तानुकरणम्; द्व्यच् अवरार्धं यस्य तत् द्व्यजवरार्धम्; अवरशब्दोऽपकर्षे; यस्य अपकर्षे क्रियमाणे सुष्ठु न्यूनमर्धं द्व्यच्कं संपद्यते तस्मात् अनितिपरात् डाच् प्रत्ययो भवति। **डाचि बहुलं द्वे भवतः** (वा. VIII. 1. 12.)—इति **पटपटाकरोति**। **सपत्रनिष्पत्रादतिव्यथने** (V. 4. 61.)—कृञः इत्यनुवर्तते; सपत्रनिष्पत्रशब्दाभ्याम् अतिव्यथने गम्यमाने डाच्प्रत्ययो भवति

कृञो योगे ; अतिव्यथनमतिपीडनम् ; **सपत्राकरोति** मृगं व्याधः। सपत्रं शरमस्य शरीरं प्रापयतीत्यर्थः। एवं **निष्पत्राकरोति**—शरीरात् अपरपार्श्वे तन्निष्क्रामयतीत्यर्थः । अतिव्यथन इति किम्? सपत्रं करोति वृक्षं जलसेचकः, निष्पत्रं वृक्षतलं करोति भूमिशोधकः । **सुखप्रियादानुलोम्ये** (V. 4. 63.)—सुखप्रियशब्दाभ्याम् आनुलोम्ये गम्यमाने डाच्प्रत्ययो भवति कृञो योगे; **सुखाकरोति, प्रियाकरोति** । **दुःखात् प्रातिलोम्ये** (V. 4. 64.)—दुःखशब्दात् प्रातिलोम्ये गम्यमाने डाच्प्रत्ययो भवति कृञो योगे; प्रातिलोम्यमाराध्यचित्तपीडनम् ; **दुःखाकरोति** भृत्यः। प्रातिलोम्ये इति किम्? दुःखं करोत्यत्यशनम् । **शूलात् पाके** (V. 4. 65.)—शूलशब्दात् पाकविषये डाच् प्रत्ययो भवति कृञो योगे; शूले पचति **शूलाकरोति** मांसम् । पाके इति किम्? शूलं करोति कदन्नम् । **सत्यादशपथे** (V. 4. 66.)—सत्यादशपथे वर्तमानात् डाच्प्रत्ययो भवति कृञो योगे; **सत्याकरोति वणिक् भाण्डम्** । मया एतत् क्रेतव्यमिति तथ्यङ्करोति । अशपथे इति किम्? सत्यङ्करोति ब्राह्मणः ; शपथमित्यर्थः। **मद्रात् परिवापणे** (V. 4. 67.)—मद्रशब्दात् परिवापणे वर्तमानात् डाच्प्रत्ययो भवति कृञो योगे; परिवापणं मुण्डनम्; **मद्राकरोति**। परिवापणे इति किम्? मद्रं करोति। **भद्राच्चेति वक्तव्यम्** (वा.)— इति **भद्राकरोति** नापितः । परिवापणादन्यत्र भद्रङ्करोति। इत्यादिप्रयोगानुसारेण तद्धितान्तं सर्वं नेयम् ॥

**इति तद्धितावतारः॥**

**इति रूपावतारे पूर्वभागः समाप्तः॥**

## विनियुक्तसूत्राणामकारादिक्रमसूची ॥

# वार्त्तिकपरिभाषादिसूची

———:o:———

| वार्त्तिकादिसूची | | पृष्ठम् |
|---|---|---|

वार्त्तिकादि पृष्ठम्



—:o:—

# उदाहरणसूची

| उदाहरणानि | पृष्ठम् |
|---|---|

[redacted]